महाकविश्रीहर्षदेवविरचिता

# रत्नावली नाटिका

निगुडकरोपाभिधेन

नारायणशर्मणा कृतया।

प्रभाख्यव्याख्यया मण्डिता।

Shant Sharma
M.A. (Sanskrit)



मूल्यं २ रूप्यकद्वयम्।

NAVALINATIKA

SHRIHARSHA,

...mentary of Narayanshastri Nigudkar.

50

# THE
# RATNĀVALĪ NĀṬIKĀ.

## महाकविश्रीहर्षदेवविरचिता
# रत्नावली नाटिका।

श्रीभारतधर्ममहामंडलप्रदत्त "विद्यारत्न" पदोपाधिना राजापुरस्थ-
श्रीसंस्कृतपाठशालाप्रधानाध्यापकेन निगुडकरोपाह्व-
श्रीवासुदेवतनुजन्मना दत्तात्रेयापराभिध-
श्रीनारायणशर्मणा विरचितया
प्रभाव्याख्यापरिष्कृता।

एम्. ए. उपाधिधारितजोगळेकरकुलोत्पन्नेन माधवसूनुना
कृष्णशर्मणा निबद्धेनोपोद्घातेन समेता।

सा चेयं

टीकाकर्तुरनुजेन राजापुरस्थसंस्कृतपाठशालायाः प्रधानाध्यापकेन
निगुडकरोपाभिधजनार्दनशर्मणा संशोधिता।

तस्या इदम्
चतुर्थं संस्करणम्।

तच्च
शाके १८५९, सन १९३८ वत्सरे
मुम्बय्यां
पाण्डुरङ्ग जावजी श्रेष्ठिना
स्वीये निर्णयसागराख्यमुद्रणयन्त्रालयेऽङ्कयित्वा प्रकाशितम्।

मूल्यं १। सपादरूप्यकः।

50



# प्रस्तावः ।

गोविन्दशङ्करद्युतिटीकायुतैव रत्नावली नाटिकाऽद्य यावत्संमुद्र्य प्राकाश्यं नीता परंत्वेतां टीकां संक्षिप्तां प्रकृतसरणिमतिक्रान्तामतश्छात्राणां यथायथं साहाय्यमनिर्वहन्तीं च विज्ञाय राजापुरस्थश्रीसंस्कृतपाठशालाप्रधानाध्यापकैर्निगुडकरोपाह्ववासुदेवतनुजनुभिर्विद्यारत्नोपाधिभिः श्रीदत्तात्रेयशास्त्रिभिर्विरचितां विस्तृतां सुबोधां च टीकां प्रभाख्यां संयोज्येयमिदानीमावृत्तिः प्रकाश्यते । तथा चांग्लभाषोपोद्घाते तस्य संस्कृतसारे च नाटिकाकारस्य स्वल्पं वृत्तं, नाटिकाया रचनाशैल्यादिपरीक्षणं, समयनिर्णयादि, प्रदाय छात्रोपयोगिनो विषयांश्चावृत्तिमिमामतीवोपयुक्तां कर्तुं यावच्छक्ति प्रयतितमस्माभिरिति शम् ॥

विद्वद्विधेयः,

पाण्डुरङ्ग जावजी.



# उपोद्घातः ।

गीर्वाणवाङ्मये विविधविषयानधिकृत्य सांगोपांगं विविच्य विरचिता नैके ग्रन्थाः । एषु ऐतिहासिका अपि बहवो विद्यन्ते । अथापि न ते तादृशाः समयनिर्णयक्षमाः किन्तु प्रायः काव्यायन्त इमे । अतः कस्याश्चिदैतिहासिकव्यक्तेः समयनिर्णयनं त्वितिहाससंशोधकस्यायासमयं कर्म । एवं बह्वायासलब्धादल्पवृत्तादेव व्यक्तिविशेषस्यैतिह्यमनुमीयते । दृष्टिपथं नीयमानायामस्यां नाटिकायां प्रथमाङ्कस्य पञ्चमपद्यादस्याः कर्ता श्रीहर्षस्तथा स राजेति सूत्रधारोक्तेश्चावगम्यते । अतो नाधिकमस्य वृत्तमत्र ग्रन्थे ग्रन्थान्तरे चैतद्रचिते वा दृश्यते ।

गीर्वाणवाङ्मये श्रीहर्षाभिधाः पञ्च पुरुषास्ते च यथा—१ नैषधीयचरितकारः । २ काव्यप्रदीपकारस्य गोविन्दठक्करस्य कनीयान्भ्राता । ३ धाराधिपभोजराजात्मजमुंजराजस्य पुत्रः । ४ काश्मीराधिपतिः । ५ कान्यकुब्जस्थानेश्वरयोरधिपश्चेति । एषां कतमो रत्नावलीप्रणेतेति तावन्निर्णीयते । आद्ययोर्द्वयो राजत्वाभावान्न तौ तावदेतद्ग्रन्थकर्तृत्वमर्हतः । अवशिष्टस्य त्रयस्येदानीं विचारः प्रवर्त्स्यते । काश्मीराधिपतिरेवास्याः प्रणेतेति बुइल्सनस्य तर्कः । स तु शालिवाहनस्य १०२५ अब्दात् १०४७ अब्दान्तं भद्रासनं मंडयामास । क्षेमेन्द्रेणौचित्यालंकारग्रन्थे रत्नावल्याः प्रथमांकस्याष्टमं पद्यं तथा द्वितीयांकस्य द्वितीयतृतीयचतुर्थद्वादशपद्यानि समुद्धृतानि । कविश्चायं शालिवाहनस्य दशमशतकमध्ये ह्यासीदिति बुह्लरेण स्वीयवृत्तांतग्रन्थे निर्णीतम् (४५ पृष्ठे) ततो रत्नावलीकारः श्रीहर्षस्ततः प्राक्कालिक इत्यर्थादायातम् । एवमयमप्येतद्ग्रन्थकर्तृत्वं नांगीकरोति । राज्ञो जयापीडस्यामात्यो दामोदरगुप्तः स्वीये कुट्टिनीमते रत्नावल्याः प्रथमांकान्तर्गतं चतुर्विंशं पद्यमुद्धरति । जयापीडस्तु शा. ७०२ अब्दात् ७३५ अब्दान्तं सिंहासनमलंचकारेति केषांचिन्मतम् । पंडितदुर्गाप्रसादस्तु शा. ६७७ अब्दात् ७०८ अब्दान्तं सिंहासनाधिष्ठितमेनमभिसंधत्ते । कोऽप्यस्तु नामास्य समयः परन्तु शालिवाहनस्य सप्तमे शतके श्रीहर्षस्यावस्थानं न ततो निश्चीयत इति तावन्निर्विवादम् । ( धाराधिपसमयस्तु न संशयविषयः । )

अथैतर्हि कान्यकुब्जस्थानेश्वराधिपः श्रीहर्ष एवावशिष्यते स एव रत्नावलीकर्तेति गम्यते । अयं शालिवाहनस्य षष्ठे शतके वसुधां प्रशास्ति स्म । स्थानेश्वर-

सिंहासनसंस्थापकः पुष्यभूतिर्नाम कश्चिद्भूपतिरासीदित्येतावानेवाद्ययावत् संशोधः। परन्तु ततः परं कियता कालेन हि श्रीहर्षः समजनीति न ज्ञायते। अथापि हूणैरुत्सादिते गुप्तान्वयेऽयं वंशः प्रथां प्राप्त इत्येतावन्निश्चीयते। प्राचीनशिलालेखान्निम्ननिर्दिष्टो वंशवृक्षो निष्पद्यते:—

५ (द्वितीयो) राज्यवर्धनः। राज्यश्री × गृहवर्मा। ६ हर्षवर्धनः (श्रीहर्षः)।



४ प्रभाकरवर्धनः × यशोमती देवी।



३ आदित्यवर्धनः × महासेनगुप्ता देवी।



२ (प्रथमो) राज्यवर्धनः × अप्सरो देवी।



१ नरवर्धनः × वज्रिणी देवी।

—श्रीहर्षस्य पिता प्रभाकरवर्धनः सुखेन बुभुजे भूमिम्। अयमात्मानं परमभट्टारकमहाराजाधिराजपदेन विभूषितवानिति शिलालेखतोऽवगम्यते शा. ५२६ अब्दे दिवं गतेऽस्मिन्नृपे तत्पुत्रो राज्यवर्धनः सिंहासनमारूढः। महीं प्रशासत्यस्मिन् तद्भ्रात्रा श्रीहर्षेण निर्जिताः समीपगाः प्रदेशाः। तेन स्वस्वसू राज्यश्रियाः पतिं गृहवर्माणं मालवेश्वरेण देवगुप्तेन निहतं श्रुत्वा तं विजेतुं युद्धमुपक्रान्तम्। युद्धमग्नेनानेन गौडाधिपतिहस्तात् भ्रातू राज्यवर्धनस्य वधं समाकर्ण्य सिंहासनारोहणानन्तरं गौडाधिपं विजेतुं प्रक्रतं युद्धकर्म भ्रातृव्ये भंडिनि समारोप्य राजधानीमागत्य सिंहासनमधिष्ठितम्। शा. ५२८ अब्देऽनेन स्थानेश्वरं विहाय कान्यकुब्जं राजधानीकृतम्। समयेऽस्मिन्नैश्वर्यशैलशृंगमारूढोऽयम्। उत्तरदक्षिणयोर्हिमाद्रिनर्मदे प्राचीप्रतीच्योर्ब्रह्मजाशतद्रू अस्य राज्यस्य मर्यादा। स वातापीनृपेण (द्वितीय)-पुलकेशिना विरोधं प्राप्य ततश्चापत्परंपरामासाद्य तेनैवाभिभावितः। न ततः कदाचिदप्ययं पूर्वामवस्थां प्रतिपेदे। प्रायो युद्धव्यापृतस्यापि न्यायेन राज्यं प्रशासितुरस्य निखिला प्रजा प्रमुदितेति ह्युवेनत्संगवर्णनादवगम्यते। रत्नावल्याः प्रथमांकस्य नवमे पद्येऽस्य सौराज्यं सम्यगालिखितम्। क्षीणेऽपि राज्यैश्वर्ये वाग्देवीप्रसादपात्रस्यास्येदानींतनोऽपि वृत्तांतो हृदयस्पर्शो वर्तते। नित्यं पंडितमंडलमंडितैव वाङ्मयैकान्तिकभक्तस्यास्य परिषद्। स्वाश्रितः कादंबरीकारो बाणः पारितोषिकया सत्कृतश्चानेन।

नायं केवलं पंडितपोषकः किन्तु स्वल्पेऽप्यवशिष्टे काले प्रबन्धाननेकान्निबध्नाति स्म। ग्रंथकर्तृत्वेऽस्य केचन संशेरते। मम्मटप्रणीतकाव्यप्रकाशगतात् "श्रीहर्षादेर्धावकादीनामिव धन"मित्युल्लेखादन्यः कोऽपि धावकाख्यः कविः श्रीहर्षाद्धनमादाय दातुर्नाम्ना नाटिकामिमां प्रकाशयामासेति चानुमिमते। परन्तु बाणवर्णितेषु

स्वसमकालिकमित्रेषु मान्यस्यैतादृशस्य कवेरनभिधानान्नायं कविर्विद्यमानस्तदानीमिति पीटर्सनाभिप्रायः । काश्मीरप्रांतप्राप्तप्राचीनकाव्यप्रकाशपुस्तके धावकस्थाने वाणस्यादेशाद्बाण एव रत्नावलीप्रणेतेति हॉलस्याभिप्रेतम् । रत्नावलीप्रथमांकांतर्गतं षष्ठं पद्यं हर्षचरितस्य पञ्चम उच्छ्वासे समुपलभ्यत इत्यपरं प्रमाणं स्वमतोपोद्बलकञ्च स दर्शयति । परन्तु नैतत् पद्यं मुद्रितावृत्तिषु दृश्यते । किं तु सप्तमोच्छ्वासस्थे कस्मिंश्चित्पद्ये दृश्यमानं दैववर्णनं रत्नावलीवर्णनविरुद्धमेव । तस्माद्बाणे रत्नावलीकर्तृत्वसमर्पणं नांजसम् । यदि नाटकविक्रयेण द्रव्यप्रेप्सा वाणस्याभविष्यत्ततस्ततोऽपि प्रतिभाप्रचुरयोः कादंबरीहर्षचरितयोर्विक्रयात्ततोऽप्यधिकधनलाभोऽभविष्यत् । अथ च नासौ दरिद्रः कविः किन्तु पितुः पितामहाच्च भूयसी ह्यस्य द्रविणप्राप्तिः । श्रीहर्षेणास्मै पारितोषिकमिति प्रतिपादितं द्रव्यं न ग्रन्थक्रयार्थम् । येषां रत्नावलीस्थपद्यानामन्यत्रोल्लेखः कृतस्तत्र सर्वत्र श्रीहर्षस्य स्फुटं नामधेयं संदृश्यते । सुभाषितावल्यामस्या अष्टौ पद्यानि क्षेमेन्द्रस्यौचित्यालंकारे पञ्च पद्यानि दामोदरगुप्तस्य ग्रन्थे कानिचित्पद्यानि संगृहीतानि । सर्वत्र श्रीहर्षदेवस्येति ग्रंथकर्तृनिर्देशो वर्तते । मयूरशतकटीकायां भावबोधिनीसमाख्यायां मधुसूदनश्च "मालवराजोज्जयिनीराजधानिकस्य कविजनमूर्धन्यस्य रत्नावल्याख्यनाटिकाकर्तुर्महाराजश्रीहर्षस्य सभ्यौ महाकविपौरस्त्यौ वाणमयूरावास्तां । तयोर्मध्ये मयूरभट्टः श्वशुरो वाणभट्टः कादम्बरीकर्ता तस्य जामाता" इति स्पष्टं निर्दिशति ।

नारायणशास्त्री तु "नाटककारः श्रीहर्षः" इति नामके स्वीयप्रबन्धे—'१ श्रीहर्षो विक्रमादित्यादभिन्नः । २ रत्नावलीमालविकाग्निमित्रसाम्याद्रत्नावलीमनुसंधाय कालिदासेन विरचितं मालविकाग्निमित्रं । ३ भासो भासको धावकश्चेति नामत्रितयं राजरजकस्य धावकस्यैव । परमस्माद्धावकाद्रत्नावलीं संगृह्य श्रीहर्षेणायं द्रव्येण सत्कृतः सभ्यत्वेन परिषदि परिष्कृतश्च ।' इति मतानि प्रतिपाद्य शा. १८२६ अब्दे परीक्ष्यछात्रोपयोगार्थं प्रकाशिते रत्नावलीपुस्तके चैतेषां मतानामुपष्टंभकमिति राजशेखरकाव्यस्थमेकमवतरणं स्वीचकार, परं न किमप्यधिकं विशदयामास । अंते च केवलं 'कविविमर्शाख्ये ग्रन्थे' इत्येतावानेव राजशेखरकाव्यसंबंधो निर्दिष्टः । तेनोद्धृतेषु सप्तसु पद्येषु प्रथमं शार्ङ्गधरपद्धत्यामन्तिमं सूक्तिमुक्तावल्यां चोपलभ्यते । काव्यस्यास्याधिकवृत्तान्तानुपलंभान्नेदं प्रमाणमंगीकर्तुं शक्यम् ।

श्रीहर्षस्य कवित्वे न वयं संशेमहे । न केवलं प्रियदर्शिका–रत्नावली–नागानन्दनाटकान्येवानेन निबद्धानि किन्तु 'अष्टमहाश्रीचैत्यस्तोत्रम्–सुप्रभातस्तोत्रम्–जातकमाला चेति ग्रन्थत्रितयमस्य नाम्नैव प्रसिद्धमपरं च मधुवनशिलालेखे श्रीहर्षस्य पद्यत्रयमुपलभ्यते ।

यद्यपि कालिदासभवभूतितुलनामयं नार्हति तथापि द्वितीयश्रेण्यामयमुपस्थातुं युज्यते । प्रियदर्शिका रत्नावली च नाटिके नागानन्दन्तु नाटकम् । रत्नावल्याः कथानकं गुणाढ्यस्य बृहत्कथायाः संगृहीतम् । शालिवाहनस्यैकादशशतके विद्यमानयोः सोम–

देवक्षेमेन्द्रयोः कथासरित्सागर–बृहत्कथामंजर्योर्न कोऽप्युपयोगः श्रीहर्षस्य संभाव्यते। यथा उदयनवत्सराजस्य प्रियदर्शिकया प्रणयव्यापारः प्रियदर्शिकायां वर्णितस्तथाऽस्य सागरिकया प्रीतिव्यवसायो रत्नावल्यां चित्रितः। वत्सराजस्य नाखिलं चरितमत्र किंतु द्वितीयविवाहोत्तरकालिकमात्रं वर्णितम्। दंपत्योः परस्परमज्ञानाद्विपाकं गता गृहस्थितिरेवात्र चित्रिता। एतादृशे प्रसंगे पूर्वमभिनिविष्टाऽप्यार्या पतिमेवानुसरतीति प्रकार एवात्र ग्रथितः। द्वितीयेऽङ्के चन्द्रोदयवर्णनं तृतीयेऽङ्के संग्रामवर्णनं च मनोहारि। तस्य समये बुद्धसंप्रदायस्य प्राबल्यादयं ब्राह्मणपंडितैर्बुद्धभिक्षुभिश्च स्वसंसदमलंचकारेति हुवेनत्संगो वर्णयति। ततश्चायं स्वकृतौ बुद्धधर्मकल्पना अंगीकरोतीति नासांप्रतम्। नागानन्दनाटके प्रसंगानेतादृशान्विलोक्याऽयं बौद्ध इति हॉलकॉनेलाभ्यामनुमीयते परन्तु शैवसंप्रदायस्याप्यत्रोल्लेखात्तत्प्रामादिकम्। नागानन्दरत्नावल्योर्नैकः कर्तेति मॅकडोनेलो मन्यते परं न किमपि प्रमाणं पुरस्करोति। नाटकदृष्ट्या तु नोत्तमां श्रेणिं नागानन्दमारोहति। नास्य कृतिषु कालिदासभवभूत्योरुज्ज्वलप्रतिभालाभस्तथापि युद्धादिविविधविषयव्याप्ृतस्यास्य राज्ञः प्रतिभेयं न न्यूनां पदवीमर्हति इति शिवम्।



# INTRODUCTION

Paucity of history in Sanskṛt.

It is remarkable that Sanskṛt literature, which is rich in works in various Departments of human knowledge, should have no work worth the name in history—political, social or personal. There has been no history in it of by-gone dynasties, nor of the personal account of kings except the panygeries of three or four of them by poets who lived on their bounty. Even these works appear to be poems and works of literary merit than history proper. Under such a state of things it becomes very difficult to assert with any definite certainty anything in regard to the life-history of an author. The patient researches of antiquarians and archæologists have been bringing to light several disjointed scraps of information from which the history of an individual has often to be built up. The confusion in this arises from similarity of names. Thus, from stanza 5 of Act I, of *Ratnāvalī* we find that the author of the play was S'rī-Harṣa. From the speech of the Sūtra-dhāra we learn that he was a king; beyond this we have no information in the play itself or anywhere else from the pen of the author.

Five S'ri-Harṣas, which one the author of Ratnāvalī.

Five different persons bearing one and the same name, S'rī-Harṣa, flourished at different periods, and it becomes no easy task to say which of them was the author of the play.

The five S'rī-Harṣas are:—

(1) S'rī-Harṣa the author of the Naiṣhadha Kāvya.
(2) ,, the younger brother of Govind Thakkur the author of the Kāvyapradīpa.
(3) ,, the father of Munjarāja and the grandfather of king Bhoja of Dhārā.
(4) ,, the King of Kāshmere.
(5) ,, the King of Kānyakubja and Sthānes'wara.

Of these, the first two were no kings and it will not be wrong to assume that neither of them was the author of *Ratnāvalī*. There are other chronological evidences for this assertion besides

H. H. Wilson has said that S'rī-Harṣa the king of Kāshmere was the author of *Ratnāvalī*. This king appears to have ruled from A. D. 1113 to 1125. It follows, therefore, that if S'rī-

Harṣa was the author of the play, it must have been written somewhere between 1113 to 1125 or thereabouts *i. e.* in the first quarter of the twelfth century. But st. 8 of Act I, and sts. 2, 3, 4 and 12 of Act II, have been quoted by Kṣemendra in his work called *Auchityālankāra.* From Dr. Bühler's report p. 45 it appears that this Kshemendra flourished about the middle of the eleventh century; and it would not have been possible for him to quote from a work which was written by an author who lived in the first part of the twelfth century. It follows, therefore that *Ratnāvalī* must have been written by some S'rī-Harṣa who lived long before the middle of the eleventh century.

Dāmodaragupta, the minister of King Jayāpīda, has quoted st. 24 from Act I, of *Ratnāvalī* in his work the *Kuttinīmata.* From antiquarian researches it appears that Jayāpīḍa ruled from A. D. 780 to 813.* Pandit Durgāprasāda says, Jayāpīda reigned from A. D. 755 to 786. Whichever of the periods may be the correct one, it follows that *Ratnāvalī* had come into existence before the eighth century, and it must have been written by some king of the name of S'rī-Harṣa. Till now no king other than that of Kānyakubja and called S'rī-Harṣa has been discovered. We may safely, therefore, say that *Ratnāvalī* is the work of S'rī-Harṣa who ruled in the first half of the seventh century at Sthāneshwara and Kānyakubja.

House of S'rī-Harṣa.

The founder of the ruling house of Sthāneshwara has been discovered to have been one Puṣyabhuti, but it is not known how far distant he was from S'rī-Harṣa. One thing is certain–the house of Sthāneshwara came into prominence after the breaking up of the Gupta dynasty by the Huṇas.

In the light of old inscriptions a geneological tree of the princes of Sthāneshwara can be formed from one Naravardhana onward :—




Prabhākaravardhana the father of S'rī-Harṣa was in the en-

* See Dr. Peterson's preface to *Subhāshitāvali.*

joyment of complete domestic felicity and political aggrandisement. From the Madhubana inscriptions we gather that he had taken for himself the title "Paramabhattāraka Mahārājādhirāja". He died in A. D. 604 and was succeeded by his son Rājyavardhana. During the time of his brother S'rī-Harṣa undertook several expeditions against the neighbouring princes. While engaged in one of them—that against Devagupta, king of Mālvā and the murderer of Grihavarmā (the husband of the royal sister Rājyashrī),—S'rī-Harṣa learnt of the murder of his brother Rājyavardhana by S'aśānka king of Gaud, and had to return to take charge of the kingdom, leaving his cousin Bhandi to carry on the war against Devagupta.

Shrī-Harsha as a ruler.

Harṣa did not at once assume regal ensignia but carried on the administration of the state with the title 'Kumāra Rāja'. He transferred his seat of government from the original town of Sthāneshwara* to Kānyakubja in A. D. 606. Hence the celebrated Chinese traveller Heun-Tsang calls him king of Kānyakubja. About 640 A. D. S'rī-Harṣa was at the height of his glory and was the undisputed master of the country from the Himālayās to the River Narmadā; and from the Sutlej on the west to the mouth of the Brahmaputrā on the east. Now came a series of reverses on S'rī-Harṣa on account of his having come in conflict with Pulakeshin II., of Vātāpi (modern Badāmi in Bijāpura). This struggle ended in a complete defeat of Harsha from which he was never able to regain his position. The last years of his reign were full of troubles and he probably fell a victim to the dagger of an assassin. The formation of an Empire began and ended with him and hardly any kingdom worth the name descended to his son.

In spite of the constant and continuous war in which Shrī-Harsha was engaged, he appears to have kept up the general tone of his administration. From the observations of Heun-Ttang we have good grounds to infer that the administration of justice and revenue during his reign was satisfactory; and on the whole his subjects were contented and in a flourishing condition. St. 9 Act I, of the *Ratnāvalī* is a fair picture of the general condition of the Empire anterior to the ruler getting himself involved in the struggles with Pulkeśin.

---

* Modern Thāneshwara situated on the river Shrāvasti at a distance of about 25 miles from the modern town of Ambālā in the Punjāb.

Shrī-Harhsa as an author.

The history of S'rī-Harṣa is of no small interest to the literary world since the reign of his author-king (A. D. 606 to 648) forms the land-mark fixed with a certainty in regard to the history of Kāvya or Artificial poetry.* S'rī-Harṣa took a keen interest in the cultivation of literature. There is ample testimony to show that his court was adorned by men of learning.† Bāṇa the author of the well-known *Kādambarī*, may be said to have been the poet-laureate, at the court of S'rī-Harṣa, from whom he appears to have received exceptionally kind treatment and large presents.

Either Dhāvaka or Bāṇa author of Ratnāvalī.

S'rī-Harṣa not only extended patronage to the learned but devoted the few leisure hours he could snatch, to literary composition. There appears, however, a good deal of unwillingness to allow him the credit of being an author. A few *savānts* relying on the well-known line श्रीहर्षादेर्धावकादीनामिव धनम् in Mammāta's *Kāvyaprakās'a* have conjectured that the actual author of *Ratnāvalī* was Dhāvaka. The commentators of *Kāvyaprakās'a* in explanation of this line say that Dhāvaka obtained immense wealth by allowing his work *Ratnāvalī* to be sent out in the name of his patron. Beyond this there is no information about Dhāvaka. On the contrary, Dr. Peterson in his introdnction to *Kādambarī* observes that it is least likely that the name of a contemporary writing not less than three plays should have been omitted from the list by Bāṇa who has given the names of his companions and contemporaries. One manuscript of the *Kāvyaprakās'a* found in Kāshmere reads श्रीहर्षादेर्बाणादीनामिव धनम्. On the basis of this line Dr. Hall in his introduction to *Vāsavadattā* puts forward a conjecture that *Ratnāvalī* must have been composed by Bāṇa. As further proof in support of this conjecture he has observed that st. 6 Act I, of *Ratnāvalī* is found in the 5th Uchchvāsa of *Harṣacharita*. No such stanza is found in that place in any of the printed editions of *Harṣacharita* but

---

* Dr. Macdonell's History of Sanskrit Literature p. 318.

† Rājas'ekhara in his *S'ārangadharapaddhati* says:—

अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकराः श्रीहर्षस्याभवन्सभ्याः समा बाणमयूरयोः ॥

Likewise Jayadeva says:—

यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः ॥
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः
केषां नैषा कथय कविताकामिनी कौतुकाय ॥ १ ॥

in the 7th Uchchvāsa of that work occurs a stanza* which though speaking of the course of fate, is diametrically opposite to that in *Ratnāvalī*. This, by itself, to say the least, is a very slender argument in favour of the theory of *Ratnāvalī* being composed by Bāṇa.

That Bāṇa composed *Ratnāvalī* and allowed it to pass in his master's name by taking money for it does not seem likely. If Bāṇa was minded to sell his writings, he could have sold his *Kādambarī* and *Harṣacharita*, both of which, being works of extraordinary merit, would have brought him wealth much beyond his most sanguine expectation. From the facts of the life of Bāṇa which have come to light, it appears he was never in pecuniary difficulties; he had inherited much wealth from his father and grandfather. And he received gifts from his patron † but not for selling any of his work to him.

Wherever passages appear from *Ratnāvalī* with the author's name appended, the name of none else but that of Shrī-Harsha appears. Thus in the *Subhāṣitāvalī* there are no less than eight stanzas and in Kṣemendra's *Auchityālankāra* there are five stanzas from *Ratnāvalī*. They all appear as "श्रीहर्षदेवस्य". Likewise Dāmodara Gupta refers to a passage as Shrī-Harsha's. A commentary on the *Mayūraṣaṭaka*,—the Bhāvabodhinī of Madhusūdana—states that *Ratnāvalī* belongs to S'rī-Harṣa, the patron of Bāṇa. It says:—मालवराजोज्जयिनीराजधानिकस्य कविजनमूर्धन्यस्य रत्नावल्याख्यनाटिकाकर्तुर्महाराजश्रीहर्षस्य सभ्यौ महाकविपौरस्त्यौ बाणमयूरावास्तां। तयोर्मध्ये मयूरभट्टः श्वशुरो बाणभट्टः कादम्बरीग्रन्थकर्ता तस्य जामाता।

A brochure titled 'S'rī-Harṣa the dramatist' by Nārāyaṇa S'āstrī.

Before leaving the subject of Shrī-Harsha as an author we must not lose sight of a *brochure* put forward by Nārāyaṇa Shastrigal in 1902 titled 'Shrī-Harsha the dramatist' wherein he had made an effort to prove that (1) Shrī-Harsha and Vikramāditya were one and the same; (2) *Mālvikāgnimitra* of Kālidāsa resembles *Ratnāvalī*, hence Kālidāsa must have taken *Ratnāvalī* for his model; (3) Bhāsa, Bhāsaka, Dhāvaka are names

* द्वीपोपागतगुणमपि समुपार्जितरत्नराशिसारमपि।
पोतं पवन इव विधिः पुरुषमकाण्डे निपातयति॥

† हेम्नो भारशतानि वा मदमुचां वृन्दानि वा दन्तिनां।
श्रीहर्षेण समर्पितानि कवये बाणाय कुत्राद्य तत्॥
या बाणेन तु तस्य सूक्तिनिकरैरुट्टंकिताः कीर्तय-
स्ताः कल्पप्रलयेऽपि यान्ति न मनाङ् मन्ये परिम्लानताम्॥ १॥

of one and the same individual and that Dhāvaka (a poor washer-man at the court) was the author of *Ratnāvalī* for which S'rī-Harṣa gave him money and a seat among the learned *pandits* at his court. The arguments adduced by the S'āstrī are anything but convincing. Probably he himself thought so, since in an edition of the F. A. Sanskrit Text for 1904 published by him he gives an extract from a poem which he says was by Rājashekhara, but does not give any further particulars about his find except only prefixing कविविमर्शाख्ये ग्रन्थे at the end.

The curious feature is that the Shāstrī does not make any mention about these stanzas in his pamphlet published in 1902. If it was a subsequent discovery he should, in all fairness, have given his authority. Of the seven verses the first stanza is found in the *Shārngadharapaddhati* and *Sūktimuktāvali* and the last in the latter only. Under these circumstances and unless a full account of this poem be forthcoming, one is not justified in drawing any conclusions or inferences from it.

We have no hesitation to concede authorship, and that too of no mean order, to S'rī-Harṣa. In addition to the three plays—*Priyadarshikā*, *Ratnāvalī* and *Nāgānanda*, S'rī-Harṣa has left a few other compositions. They are (1) अष्टमहाश्रीचैत्यसंस्कृतस्तोत्र a hymn referring to the eight sacred places of Buddha; (2) सुप्रभात-स्तोत्र a morning hymn to Buddha; (3) जातकमाला a poem containing an account of the difficult feats achieved by Bodhi-Satva in anterior lives.* (4) Three verses appear on the Madhubana plate which are by S'rī-Harṣa.

Thus S'rī-Harṣa, though not be ranked with Kālidāsa or Bhavabhūti, may be conceded to be an author of the second order.

Among the three plays of S'rī-Harṣa *Priya-Darśikā* and *Ratnāvalī* are what are technically called *Nāṭikās*, and *Nāgānanda* is a *Nāṭaka*. The source for the materials of all these must have been the *Brihatkathā* of Guṇāḍhya which was anterior to him.§ The *Kathā-saritsāgara* of Someśvara or the *Brihatkathāmanajarī* of Kṣemendra could not have been used by S'rī-Harṣa since both Someshvara and Kṣemendra flourished in the twelfth century.

The *Priya Darśikā* and the *Ratnāvalī* reflect the court and harem life of the age picturing the loves of Udayana Vatsa for

* Kerne's edition published in 1891 contains 1340 verses giving 34 Jātakas while the Chinese translation extending over four volumes contains only 14 Jātakas. Mr. Thomas has discovered a Tibetan *Jātakamāla*,; see J. R. A. S. 1904 October.

§ Guṇādhya is supposed to have lived in the first century A. D.

Priyadarshikā and Sāgarikā respectively. The parallal between *Ratnāvalī* and *Mālvikāgnimitra* of Kālidāsa as also between it and *Karpūrmanjarī* of Rājashekhara is remarkable.

Time-analysis of Ratnāvalī.

The plot of *Ratnāvalī* is not taken from mythology but is concerned with the second marriage of Vatsarāja, and is, therefore, a small episode connected with the life of the hero, giving us an insight into the domestic life of a Hindu family with occasional little misunderstandings between a husband and his jealous wife, who, in the end, however, like a model Hindu wife, yields to the whims of the husband. Each of the four acts of the play cannot have taken more than a few hours of the day in the afternoon for four consecutive days.

On the whole *Ratnāvalī* is something like an operette and contains several pieces of musical melody and rhythmical harmony together with some charming descriptions of scenic beauty such as the rising of the moon in Act II, and that of the battle in Act III.

Ths Nāgānanda.

The *Nāgānanda* is a peculiarly unique composition—its first three acts being taken up by the ardent love of the hero-Jīmūtavāhana for a princess named Malayāvati; and the last two acts portraying the noble conduct of a dutiful son towards his parents, and the intense feeling of universal benevolence at the cost of everything else. The two portions of the play do not well fit into each other and signally fail in preserving any semblance of 'unity of action'.

Dr. Fitz Edward Hall and Prof. Cowell conjecture from the invocation in the *Nāgānanda* that its author was a Buddha. But instances could be pointed out in the play itself to indicate the predilections of the author for the Shaivāyitta faith. From the writings of Heun-Tsang, the great Chinese traveller, we know that S'rī-Harṣa held frequent meetings and conferences of Brāhmaṇa *pandits* and Bhuddha *bhikṣus* where he listened to their discussions with interest and it is just possible that his opinions may have gradually undergone a change. During his time a great stir and conflict were afoot in regard to religion. Buddhism was gradually gaining a fair hold of the popular mind, and probably S'rī-Harṣa composed this play having a colour of Buddhistic ideas just to humour the public as a practical necessity. Dr. Macdonell says that the author of the *Nāgānanda* "was probably different from that of *Ratnāvalī*" but does not give any grounds for this statement.

As a literary composition the *Nāgānanda* may rank with *Ratnāvalī* and *Priyadars'ikā*, but as a drama it is inferior to both.

S'rī-Harṣa belongs to an epoch which is styled the Pauranic age—an age during which some of the brightest luminaries in literature, such as Kālidāsa and Bhāravi, dazzled forth. S'rī-Harṣa turned the 'accessories of the drama', *viz.* singing and music to very good account. He is neither bold in his conceptions nor does he evince that brightness of poetic genius and flight of imagination which is displayed by Kālidāsa or Bhavabhūti, and, therefore perhaps allows himself to be subservient to the tediously numerous rules of dramaturgy. Even this is no small achievement for one who was the ruler of a kingdom and was involved in continuous warfare and struggle.

VIDYĀŚRAMA,
HEDVI,
*1st February, 1913.*

KRISHNARAO JOGLEKAR.

श्रीः ।

# रत्नावली-प्रभा-काराणां
## श्री ६ वैकुण्ठवासि-विद्यारत्न-गुरुवर्य-
# दत्तात्रेयशास्त्रिणां स्वल्पं चरित्रम् ।



श्रीगुरोश्चरितं वक्तुं स्वल्पोऽयं समुपक्रमः ।
विद्वज्जनान् रञ्जयित्वा पुनातु मम मानसम् ॥

श्रीगुरुवर्याणामेषां कौंकणजनपदवर्ति–सामन्तवाटिकान्तर्गतः सह्याचलोपत्यकास्थः पांग्रडग्रामो जन्मभूमिः । तत्र हि परम्परया श्रुतिपारदृश्वानो निगुडकरोपाभिधा जनार्दनभट्टा एषां पितामहा आहिताग्नयोऽभूवन् । वेदवेदिसेविनामेषां वेदमितास्तनया आसन् । तेषु तृतीया वासुदेवशास्त्रिणोऽधीतवेदविद्या याज्ञिकनिष्णाता ज्योतिःशास्त्रविशारदा एतेषां पितृपदमलमकार्षुः । वासुदेवशास्त्रिभ्योऽम्बिकाभिधानायां सुशीलायां भार्यायां द्वौ सुतौ समजनिषातां दत्तात्रेयजनार्दननामानौ । तत्र प्रथमे श्रीमद्दत्तात्रेयशास्त्रिणः १७८५ तमे शाके फाल्गुनकृष्णत्रयोदश्यां संबभूवुः । उचिते काले व्रतबंधोत्तरमेभिर्ऋक्संहिताऽधीता । ततश्चैते पितृभिः साकं कार्यवशेन मालवणग्रामे निवासं कल्पयांचक्रुः । तत्रैतैः पितृचरणेभ्यो ज्यौतिषं तथा वेदशास्त्रसंपन्नेभ्यो बालकृष्णशास्त्रिभ्यो माइणकरोपाख्येभ्यो व्युत्पत्तिश्चाधीता । तदानीं पुराणकीर्तनाद्युपयोगितया गाथकजनसांनिध्याश्च संगीते रुचिरभवत् । परं गाथकानां निसर्गसिद्धचांचल्यवशान्न यथावत् तज्ज्ञानं संप्राप्तम् । तदा तदुन्मनस्कतया वयसा पंचदशवर्षा अपि ग्वालेरनगरं प्रस्थिताः समानीतमितद्रव्यव्ययवशात् इन्दूरनगरमगच्छन् । तत्र गानवादनविद्याकुशलानां श्रीमतां 'नाना पानशे' इत्येषां संगतिर्भाग्यवशाद्बभूव । तैस्त्वेतेषामखिलं वृत्तं विज्ञाय 'ब्राह्मणोऽयं मा स्वाध्यायात्प्रमादीत्' इत्यनुकम्पयैव तत्रत्यराजकीयशास्त्रपाठशालायां 'निशि संगीतमध्येतुमस्मद्गृहमागन्तव्यं–' इत्यभिसंधिं विधाय व्यापारिताः । शनैः शनैः शास्त्ररुचिरेव संगीतासक्तिनिवर्त्याऽध्यारूढा मानसमेतेषाम् । तस्यां पाठशालायां श्रीमत्पण्डितप्रकाण्डसाठेऽभिख्यगोविन्दशास्त्रिणां सकाशात् सिद्धान्तकौमुदी-प्रौढमनोरमा-शब्दरत्न-काव्यप्रकाशादयो ग्रन्था एभिरधीताः । अनन्तरं गुरुप्रवराणामेषां ग्रामान्तरवासेन तत्र चैतेषामुदरपूर्तिसाधनाभावेन तेषामनुमत्यैव भरतवर्षविज्ञातविद्यानां

ग्वालेरराजसंश्रितानां करहाटकरोपाह्वमहामहोपाध्यायगोपालाचार्यमहाभागानां छात्रतां लेभिरे। तेषां निकटेऽवशिष्टाखिलभाष्यान्तव्याकरणशास्त्रमधीत्य माध्वब्रह्मसूत्रभाष्यादयोऽन्येऽपि ग्रन्था अधीताः। परं प्रेमाऽस्मिन्नेवान्तेवासिन्याचार्याणामासीत्। ततः श्रीमद् १०८उत्तरादिमठाधीशाचार्यचरणसकाशात् माध्वसंप्रदाय(वैष्णवधर्म)दीक्षां संपाद्य १८१० तमे शाके वटोदरनगरे श्रावणमासराजकीयपरीक्षायां समुत्तीर्णा बभूवुः। ततः काँश्चिन्मासान् श्रीमदुत्तरादिमठे ह्यास्थानपंडितत्वेन यापयित्वा काँश्चिन्मासान् भारतमार्तण्डश्रीघ्रकविमहामहोपाध्यायगट्टुलालमहाशयसंनिधौ शास्त्रित्वेन नीत्वा मोहमय्यां जगदीश्वरमुद्रामन्दिरे महाभारतसंशोधनकार्यमपि कानिचिद्दिनानि व्यधुः। अत्रान्तरे महामहोपाध्यायराजारामशास्त्रिभ्यो बोडसोपाख्येभ्यः सांख्ययोगौ चाधिगतौ। एवं विविधविषयाध्ययनं विधाय यदा अध्यापितुकामा इवाभूवँस्तदा श्रीशप्रेरणयैव 'राजापुर'नगरे श्रीमद्भिर्वोरवणकरोपाभिधैरनन्तशर्मभिर्व्यापारव्यापृतैरप्यधिगतविद्यैः १८११ तमे शाके मासोत्तमे मार्गशीर्षे श्रीसंस्कृतपाठशालां प्रतिष्ठाप्येमेऽध्यापकत्वे नियुक्ताः। तदाप्रभृत्यध्यापनक्रमः साकं स्वाध्यायेनाविच्छिन्नतयाऽऽमरणमष्टाविंशतिसमाः समजायत। एकदा श्रावणमासदक्षिणासमये वटोदरनगरे कस्माच्चिन्मीमांसकाज्जैमिनीयन्यायमालाऽधीता। न्यायशास्त्रमध्येतुं नैयायिकशिरोमणीन् पंडितवर्यान् डेगंवेकरोपाख्यबालशास्त्रिणः समाहूय स्वल्पेऽवकाशे न्यायवादत्रितयं चाधीतमेभिस्तेभ्यः। ततश्चावशिष्टं वेदाध्ययनं सांगं समाप्य ऋग्वेदभाष्यं ऐतरेयब्राह्मणारण्यकभाष्ये चाकलयांचक्रुः सह शांकरशारीरकभाष्येण इति किमु वक्तव्यमध्ययनकुतूहलमेतेषाम्। अध्यापनसरणिरपि स्वगुरूणामपेक्षया न न्यूनेत्येतावत्कथनेनैव विनाऽऽयासमनुमिता स्यात्सर्वेषाम्। ऋग्वेदः—तदंगानि वेदवेदांगभाष्याणि-स्मृति-धर्म-व्याकरण-वेदान्त (शांकरमाध्वभाष्ययुता प्रस्थानत्रयी)न्याय-मीमांसा-सांख्य-योग-साहित्य-याज्ञिक्य-कोश-व्युत्पत्ति-पुराण-इतिहास-ज्यौतिषग्रंथाश्चैवमादयो विषया एषामध्यापनेऽन्तरभूवन्। विश्वकोश एवायं मूर्तिमानिति वक्तुर्न स्यादत्युक्तिदोषः। प्रवचनसमये सर्वेऽप्येते समुपातिष्ठन्त। विद्वज्जनेषु राजद्वारे च सुपरिचिता इमे। महामहोपाध्यायराजारामशास्त्रिणां निधनानन्तरं प्राप्ताऽर्थदाऽपि आंग्लविद्यापीठाध्यापकवृत्तिः स्वातन्त्र्यहानिभिया सुदूरमुज्झितेत्यहो निर्लोभता स्वातन्त्र्यप्रीतिश्च। अथापि राजकीयपुरुषैर्नव्यतमे विद्वज्जनसंभावनासमयेऽष्टसु पण्डितेष्वेतेषां योजना कृतेत्यन्यदेतत्। श्रीवाराणसीनिवासिभारतधर्ममहामण्डलेन त्वेतेषां विद्वत्त्वं निर्धार्य 'विद्यारत्न'पदवीप्रदानेन सभाजिताश्चैते। तथा संकेश्वर-

मठाधिष्ठितैः पूज्यपादश्री १०८ मच्छंकराचार्यैर्महावस्त्रदानादिगौरवेण संमानिता इमे। एभिर्विरचितुमुपक्रान्ता नैके गद्यपद्यमया ग्रन्था आसन्। परमेषामाकालिक-वैकुण्ठवासेनेदानीमपूर्णा एव ते स्थिताः। तथापि श्रीशकृपावशतः श्रीरुक्मिणी-हरणाख्यं नाटकं (अप्रकाशितं) श्रीगंगागुणादर्शचंपूः(प्रकाशिता) स्तोत्राणि(अप्र.) जानकीहरणटीका (प्र.) बुद्धचरितटीका (प्र.) तथेयं रत्नावलीटीका प्रभाख्या च संपूर्णतामभजन्। अस्याः प्रभाया आवृत्तिद्वयं तेषां विद्यमानत्व एव प्रसिद्धम्। ततः पश्चात् तेषां प्रधानान्तेवासिभिरनुजैस्तदीयासनमंडितैः श्रीमद्भिर्गुरुवर्यैर्जना-र्दनशास्त्रिभिः संशोधिता तृतीयाऽऽवृत्तिश्चेयं प्रकाश्यते। एते ग्रन्था अपि प्रदर्शयन्ति विद्वद्धौरेयतां प्रतिभां च ग्रंथकारस्य। एवं भक्तिरसायनटिप्पणी स्वल्पावशेषं विरचिता ह्येतैः प्रपूरिता चानुजैर्नाद्यापि प्रकाशिता। "गीर्वाणभाषाविधु" नाम्नी मासिकपत्रिका च प्रकाश्य मासत्रयं योग्यप्रकाशकाभावाच्चिरमस्तंगता। नक्तंदिवमध्यापनं अध्ययनं च विद्यायेदग्ग्रंथनिष्पादनेनैतैरुद्यमशीलतैव प्रकटितेति मनुमहे। अन्यच्चात्रैव पाठशालायां सज्जनसाहाय्येन श्रीसंस्कृतपुस्तकसंग्रहा-लयोऽपि १८२९ तमे शाके शक्रध्वजमहोत्सवे विनिर्मितस्तिष्ठति यत्र संप्रति त्रिसहस्री ग्रंथानाम्। अपरं चाध्येतृणां छात्राणामुदरनिर्वाहो मधुकरवृत्त्यादिना न पर्याप्तो भवतीति समनुभूय छात्रकष्टनिवारणाय सतां साहाय्येनैको 'निधिः' संस्थापितोऽन्तिमे वर्षे इत्यहो वात्सल्यम्। एवमनेकगुणगणमंडिताः पंडित-प्रवराः श्रीगुरुवर्या इमे १८४० तमे शाके कालयुक्तसंवत्सरे ज्येष्ठकृष्णतृतीयायां श्रीहरिणा नीता आत्मसामीप्यमित्यलं पल्लवितेनेति शिवम्॥

दत्तात्रेयजनार्दनौ गुरुवरौ सौभ्रात्रसंदर्शकौ
छात्रव्रातसमन्वितौ समुचिते पात्रे गुणानां सताम्।
राधाकृष्णपदारविन्दनिरतौ विद्वज्जनैः संस्तुतौ
स्यातां वै रघुनाथहृत्कुवलये नित्यं प्रतिष्ठापितौ॥

श्रीगुरुचरणशरणो विद्वज्जनवशंवदो राजापुरनिवासिपाटणकरकुलोत्पन्नकृष्णसूनू

श्रीगुरुपूर्णिमा
१८४७ तमे शाके। }

रघुनाथशर्मा।

महादेव की आराधना में उपस्थित पार्वती ने अपने हाथों में कुछ फूल इस आशय से रखे थे कि अन्त में वे महादेव के मस्तक पर चढ़ाएंगी। इसीलिए ध्यानभावनता पार्वती पैरों के अगले भाग पर खड़ी थी। इसी स्थिति में महादेव ने अपने तीनों सस्पृह नयन उन पर डाल दिए जिससे वह पसीना, रोमाञ्च और कम्प से युक्त होकर लज्जित तथा अपनी घबड़ाहट में कुसुमाञ्जलि को बीच में ही गिराकर बिखेर दिया, वही कुसुमाञ्जलि आप लोगों की रक्षा करे

श्रीः ॥

महाकविश्रीहर्षदेवविरचिता

# रत्नावली ।

रत्नावलीप्रभाख्यव्याख्यासमेता ।

प्रथमोऽङ्कः ।

पादाग्रस्थितया मुहुः स्तनभरेणानीतया नम्रतां
शंभोः सस्पृहलोचनत्रयपथं यान्त्या तदाराधने ।

---

## रत्नावलीप्रभा ।

तमालनीलं कमलालयालं विशालभालं निजलोकपालम् ।
प्रियालकालंकृतिकेलिलोलं प्रवालमालं भज गोपबालम् ॥ १ ॥
पुनर्विवाहादिसुदुर्मताद्रिपवीयमानान्भुवनप्रकाशान् ।
गोपालपादान्सुमहामहोपाध्यायत्वमन्वर्थयितॄन्नमामि ॥ २ ॥

यदुक्तितरुमाश्रित्य साहितीवल्लरी क्षितौ ।
प्रसरीसर्ति तं वन्दे भरतं च महामुनिम् ॥ ३ ॥
जननीमम्बिकां तातं वासुदेवं प्रणम्य च ।
नारायणो वितनुते टीकां रत्नावलीप्रभाम् ॥ ४ ॥

रसान्न जाने न च तर्कशास्त्रं नाऽलंकृतिव्याकृतिजैमिनीयम् ।
तथापि मन्तुं तु निबन्धवन्तं क्षाम्यन्तु सन्तो नितरां महान्तः ॥ ५ ॥

किं च कोविदकृते न चोद्यमस्ते हि सर्वमवगन्तुमीश्वराः ।
किं तु बालकजनोपलालनस्वीयबुद्धिविसरार्थमुद्यते ॥ ६ ॥

यच्च किंचिदिति वेदवाक्यतो विष्णुरूपभुवनं निषेवितुम् ।
प्रेरितोऽहममुना हि विष्णुना मोमुदीमि परिचर्ययाऽनया ॥ ७ ॥
कृतिभिरसुकराः क्व नु प्रबन्धाः क्वं च बत बालिशबुद्धिरेष जन्तुः ।
तदपि विरचनेऽत्र सद्गुरूणां सदयनिरीक्षणमेव मेऽवलम्बः ॥ ८ ॥

अथ तत्रभवान् महाकविः श्रीहर्षदेवः 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवे-

तरक्षतये ॥ सद्यःपरनिर्वृतये कान्तासंमिततयोपदेशयुजे' इत्याद्यालंकारिकसमयसिद्धसत्काव्यनिर्माणजन्यकीर्त्यादिफलप्राप्तये 'काव्यालापांश्च वर्जयेत्' इत्यादिनिषेधानां भाणाद्यसत्काव्यपरतां च निश्चित्य 'पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन् अन्यत् सर्वं तिरोदधदिव ब्रह्मास्वादमिवानुभावयन् 'अलौकिकचमत्कारकारी शृङ्गारादिको रसः' इति काव्यप्रकाशग्रन्थेन 'रसो वै सः' इत्यादिश्रुत्या च उक्तरसाऽनुभव एव परमपुरुषार्थ इति दृढं मन्वानः सन्नङ्गभूतकरुणादिरसकशृङ्गाररसप्रधानां प्रेक्ष्यप्रबन्धभेदं रत्नावलीनाम्नीं नाटिकां रचयामास। तत्र तावत् 'नाटिकासट्टकादीनां नायिकाभिर्विशेषणं' इति विश्वनाथभट्टाचार्योक्तेः प्रकृतकाव्ये सिंहलेश्वरविक्रमबाहोर्दुहिता रत्नावलीनाम्नी नायिका, अत एतत्काव्यस्य रत्नावलीति नाम। अपरश्च विशेषः साहित्यदर्पणे—'नाटिका क्लृप्तवृत्ता स्यात्स्त्रीप्राया चतुरङ्किका॥ प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः॥ स्यादन्तःपुरसंबद्धा संगीतव्यापृताऽथवा॥ नवाऽनुरागा कन्याऽत्र नायिका नृपवंशजा॥ संप्रवर्तेत नेताऽस्यां देव्यास्त्रासेन शङ्कितः॥ देवी भवेत्पुनर्ज्येष्ठा प्रगल्भा नृपवंशजा॥ पदे पदे मानवती तद्वशः संगमो द्वयोः॥ वृत्तिः स्यात्कैशिकी स्वल्पविमर्शा संधयः पुनः' इति। एतल्लक्षणसमन्वयश्च प्रकृतनाटिकायामित्थम्। प्रकृतवस्तुरचनायाः पुराणेष्वनुपलम्भात् गुणाढ्यकविरचितबृहत्कथाधारेण कृतत्वात् क्लृप्तवृत्तत्वं स्पष्टमेव। वासवदत्ताद्यष्टस्त्रीवैशिष्ट्यात्स्त्रीप्रायत्वं। चतुरङ्किकात्वं स्पष्टमेव। अत्र वत्सराजो नृपो नायकः। तस्य च धीरललितत्वं 'राज्यं निर्जित' इति नवमश्लोके प्रथमाङ्के स्पष्टं। नायिका सिंहलेश्वरनृपवंशजा सागरिकाऽपरनाम्नी रत्नावली यौगन्धरायणेन वासवदत्ताहस्ते निक्षिप्ता अतः अन्तःपुरसंबन्धः। प्रथमाङ्कशेषमारभ्य द्वितीयाद्यङ्केषु नायिकाया नवानुरागत्वं स्पष्टमेव। द्वितीयाङ्के 'लीलावधूतपद्म' इत्यादिग्रन्थेन अस्यां नेतृप्रवृत्तिः। द्वितीयाद्यङ्केषु "राजा—(अपवार्य) वयस्य, प्रच्छादय चित्रफलकं' इत्यादिना देवीत्रासः स्पष्टः। देवी वासवदत्ता ज्येष्ठा। अस्याः प्रतिपदं मानवतीत्वं, तयैव सागरिकाया राज्ञो हस्ते अर्पणात् द्वयोः संगमः तद्वशः। इत्यादिलक्षणानि तत्र तत्र सुस्पष्टानि इति तत एव द्रष्टव्यानि। दृश्यकाव्यहृद्यचमत्कृतिसंपादने चतस्रो वृत्तयो योजिता नाट्याचार्यैः। यथाह धनिकः—'शृङ्गारे कैशिकी वीरे सात्वत्यारभटी पुनः॥ रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती' इति। प्रकृतनाटिकायां शृङ्गाररसप्रधानत्वात् कैशिकी वृत्तिः। तल्लक्षणं तु भरतशास्त्रे—'या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसंयुता या बहुनृत्तगीता॥ कामोपभोगप्रभवोपचारा तां कैशिकीं वृत्तिमुदाहरन्ति' इति। कैशिक्याश्चत्वार्यङ्गानि—'नर्म च नर्मस्फूर्जो नर्मस्फोटोऽथ नर्मगर्भश्च॥ चत्वार्यङ्गान्यस्या वैदग्ध्यक्रीडितं नर्म॥ इष्टजनावर्जनकृत्तच्चापि त्रिविधं मतं॥ विहितं शुद्धहास्येन सशृङ्गारभयेन च' इति दर्पणे। तत्र केवलहास्येन विहितं यथा—वासवदत्ता—(फलकमुद्दिश्य सहासं।) एषाप्यपरा तव समीपे यथा लिखिता इदं किमार्यवसन्तकस्य विज्ञानम्। सभयहास्येन यथा—आलेख्यदर्शनावसरे सुसंगता—

ह्रीमत्या शिरसीहितः सपुलकस्वेदोद्गमोत्कम्पया
विश्लिष्यन्कुसुमाञ्जलिर्गिरिजया क्षिप्तोऽन्तरे पातु वः ॥ १ ॥

---

ज्ञातो मयैव सर्वो वृत्तान्तः सहृच्चित्रफलकेन तद्देव्यै निवेदयिष्यामि इति । पञ्चसंधयस्तु तत्र तत्रावसरे स्फुटीभविष्यन्ति । तत्र कविः चिकीर्षिताया नाटिकाया अविघ्नपरिसमाप्तये 'आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखं' इत्यादिवचनेन आशीर्वचनविशिष्टेष्टदेवतानमस्कारेत्युभयविधमङ्गलमाचरन् शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च पूर्वरङ्गाङ्गभूतां नान्दीं सूत्रधारप्रयोज्यां तावदाह—पादाग्रेति । गिरिजया शंभोः शिरसि ईहितः चेष्टितः । अर्पयितुं योजित इति यावत् । अत एव क्षिप्तः अन्तरे उभयोर्मध्ये विश्लिष्यन् शिथिलीभवन् कुसुमाञ्जलिः पुष्पाञ्जलिः वः पातु इत्यन्वयः । व इति 'त्यदादीनि सर्वैर्नित्यं' इत्येकशेषः । युष्मान् अस्मान् अन्यांश्च सर्वानिति यावत् । एतेनात्र व इत्यस्य युष्मानित्यर्थकरणं व्याकरणानभिज्ञत्वमूलकमिति बोधितम् । पालित्याशिषि लोड्विधानेन इतराशीःप्रार्थने सूत्रधारस्य नान्दीपठनफलाभावप्रसङ्गात् । गिरिजेत्यत्र 'ड' प्रत्ययः । कीदृश्या गिरिजया । पादाग्रस्थितया पादाग्रेण प्रपदेन स्थितया, उच्चीभावार्थमित्यर्थः । तथापि स्तनयोर्भरेण भारेण कर्त्रा 'भृ भरणे' अस्मात् 'ऋदोरप्' इत्यप् । मुहुः वारंवारं नम्रतां प्रह्वतां आनीतया प्रापितया । पुनश्च कीदृश्या । तदाराधने तस्य शंभोः आराधने पूजायां सस्पृहलोचनत्रयपथं । स्पृहया इच्छया सहितं सस्पृहं तच्च तल्लोचनत्रयं नेत्रत्रयं तस्य पन्थाः मार्गः 'ऋक्पूरब्धूःपथामानक्षे' इत्यनेन अप्रत्ययः समासान्तः । तं यान्त्या गच्छन्त्या, तद्दृष्ट्येति यावत् । पुनः कथंभूतया । सपुलकस्वेदोद्गमोत्कम्पया, पुलकाः रोमाञ्चाः स्वेदोद्गमः घर्मोत्पत्तिः उत्कम्पः वेपथुः 'पुलकं लोमहर्षणं' 'घर्मो निदाघः स्वेदः स्यात्' 'अथ वेपथुः कम्पः' इत्यमरः । तैः सहितया । अनेन मदनाविर्भावः सूचितः । अत एव ह्रीमत्या लज्जावत्या 'तदस्यास्त्यस्मिन्निति मतुप्' । अत्र पुलकस्वेदोद्गमोत्कम्पलज्जावत्त्वादिभिः शैलसुताया मुग्धात्वं व्यज्यते । तल्लक्षणम्—'प्रथमावतीर्णयौवनमदनविकारा रतौ वामा ॥ कथिता मृदुश्च वामे समधिकलज्जावती मुग्धा' इति । अत्र च श्रृङ्गाररसाविर्भावः । तत्र शिवौ परस्परमालम्बनविभावौ । सस्पृहमित्यनेन पुलकाविर्भावेन च गम्या रतिः स्थायीभावः । स्वेदोद्गमोत्कम्पादि सात्त्विकभावः । ह्रीमत्त्वं व्यभिचारिभावः । परस्परभूषणादि वसंतत्वादि उद्दीपनविभावः । कटाक्षादिरनुभावः । इमौ अत्र श्लोके गम्यमानौ । एवमन्यत्राप्यूह्यम् । एतेषां लक्षणानि प्रमाणानि चाग्रे स्फुटीकरिष्यामः । अत्र कुसुमाञ्जलेः शिरसि प्रेर्यमाणत्वेऽपि विश्लेषपूर्वकं मध्ये पतनं समर्थनापेक्षं तच्च स्तनभरेण नम्रतामानीतया ह्रीमत्या सपुलकस्वेदोद्गमोत्कम्पयेत्यादिभिः समर्थनात् काव्यलिङ्गमलंकारः । तदुक्तं 'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनं' इति । शार्दूलविक्रीडितं वृत्तं । तल्लक्षणं तु 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितं' इति । अत्र वृत्ते आदौ मगणः प्रयोजितः स च शुभः श्रीलाभहेतुत्वात् । तदुक्तं 'मो भूमिस्त्रिगुरुः श्रियं दिशति' इति ॥ १ ॥

बहुविघ्नसंभावनया स्वल्पमङ्गले तन्निरासो न भवति अतः प्रभूतमङ्गलकामनया पुन-

अपि च ।

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥ २ ॥

अपि च ।

क्रोधेद्धैर्दृष्टिपातैर्मुहुरुपशमिता बह्वयोऽमी त्रयोऽपि
त्रासार्ता ऋत्विजोऽधश्चपलगणहृतोष्णीषपट्टाः पतन्ति ।

---

रपि मङ्गलं तनोति । **अपि च । औत्सुक्येनेति ।** अयमेवाभिप्रायः अग्रिमयोः श्लोकयोरपि ज्ञेयः । किंच 'मनाक्काव्यार्थसूचनं' अवश्यं विहितं तच्च चतुर्णामङ्कानां चतुर्भिः श्लोकैः कृतमित्यपि वक्तुं शक्यते । एतच्चोपरिष्टात्स्फुटीभविष्यति । नवे संगमे हसता हरेण श्लिष्टा गौरी वः शिवाय अस्तु इत्यन्वयः । कथंभूता गौरी । उत्सुकायाः भावः औत्सुक्यं ब्राह्मणादित्वात्ष्यञ् । 'इष्टार्थोद्युक्त उत्सुक' इत्यमरः । औत्सुक्यं च पतिसमीपगमने । तेन हेतुना कृतत्वरा कृता त्वरा संभ्रमो यया सा तथापि सहभुवा सह भवतीति सहभूः तया नैसर्गिक्या ह्रिया हेतुना व्यावर्तमाना परावृत्ता । यद्वा सहभुवेति औत्सुक्यविशेषणं तच्चौत्सुक्यं तस्याः अतिप्रसिद्धं । बाल्ये एव विष्ण्वादिनिराकरणपूर्वकहरप्राप्त्यर्थं महाप्रयासकरणात् । पुनश्च कीदृश्या । बन्धुः प्रियः यो वधूजनः स्त्रीजनः सखीजन इति यावत् तस्य । तैस्तैः तच्छब्दो बुद्धिस्थपरामर्शकः अथवा प्रसिद्धार्थपरामर्शकः । तेन तदानीमुचितैरित्यर्थो लभ्यते । तैस्तैरिति वीप्सया तदानींतनगौरीप्रवृत्त्यनुकूलसमग्रैरित्यर्थो लभ्यते । तादृशैः वचनैर्भाषणैः । प्रोत्साहनार्थैरिति तात्पर्यम् । पुनः आभिमुख्यं सांमुख्यं । अत्रापि पूर्ववत्ष्यञ् । नीता प्रापिता । पुनः कथंभूता । अग्रे पुरोदेशे वरं हरं विलोक्य आत्तः साध्वसस्य भीतेः 'भीतिर्भीः साध्वसं भयम्' इत्यमरः । रसः आस्वादो यया सा । अपूर्वदर्शनेन भयचकितेति यावत् । यद्वा आत्तौ स्वीकृतौ साध्वसं भीतिः रसः मनोरागश्च यया । नवोढात्वेन गृहीतभयानुरागेति यावत् । तथापि संरोहन्तः प्रादुर्भवन्तः पुलकाः रोमाञ्चाः यस्याः सा इति । पूर्ववत् अत्रापि गिरिजाया मुग्धात्वं । अत्र संचारिभावः औत्सुक्यपदेनोक्तोऽपि न दोषः । औत्सुक्यशब्द इव तदनुभावो न तथा प्रतीतिकृत् इति मम्मटाचार्येणोक्तत्वात् । एतच्च सविस्तरं काव्यप्रकाशे एव द्रष्टव्यं, विस्तरभयात्तूपरम्यते । अत्रापि शिवौ आलम्बनविभावौ । संरोहत्पुलकेत्यादिसात्त्विकभावः । औत्सुक्येनेति सूचिता रतिः स्थायीभावः । इत्यादि यथायथमूह्यं । अत्र प्रस्तुतगौरीवर्णनप्रस्तावे विशेषणसाम्यादप्रस्तुतस्य नायिकानायकवृत्तान्तस्य प्रतीतेः समासोक्त्यलंकारः । तदुक्तं 'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्' इति । शार्दूलविक्रीडितं वृत्तं ॥ लक्षणमुक्तम् ॥ २ ॥ उक्तरीत्या प्रभूतमङ्गलार्थं तृतीयश्लोकमाह—**क्रोधेद्धैरिति ।** मखमथनविधौ मखस्य दक्षयज्ञस्य मथनं ध्वंसनं तस्य

दक्षः स्तौत्यस्य पत्नी विलपति करुणं विद्रुतं चापि देवैः
शंसन्नित्यात्तहासो मखमथनविधौ पातु देव्यै शिवो वः ॥ ३ ॥

किं च ।

जितमुडुपतिना नमः सुरेभ्यो द्विजवृषभा निरुपद्रवा भवन्तु ।
भवतु च पृथिवी समृद्धसस्या प्रतपतु चन्द्रवपुर्नरेन्द्रचन्द्रः ॥ ४ ॥

---

विधौ विधाने इति वक्ष्यमाणप्रकारेण देव्यै शंसन् कथयन् आत्तः गृहीतः हासो हास्यं येन । स्मितमुख इत्यर्थः । अनेन इयं सर्वा स्वस्य स्वाभाविकलीलापि तेषामभक्तानां भयावहा भक्तानां तु प्रसाद इति द्योतितं । एतादृक् शिवः वः पातु रक्षत्वित्यन्वयः । अत्र देव्यै इति 'क्रियया यमभिप्रैति' इति संप्रदानं । इतीत्युक्तं प्रकारमेव विशदयति । क्रोधेन कोपेन इद्धैः प्रदीप्तैः । 'ञि इन्धी'त्यस्मात् क्तप्रत्ययो नलोपश्च । दृष्टीनां अवलोकनानां पातैः पतनैः अमी पुरोवर्तिनः त्रयोऽपि दक्षिणगार्हपत्याहवनीयनामानं इत्यर्थः । वह्नयः मुहुः वारंवारं उपशमिता निर्वापिताः । त्रासेन भीत्या आर्ताः पीडिताः । वीरभद्रस्योग्ररूपदर्शनेन जनितभया इत्यर्थः । चपलैः चञ्चलैः आदिष्टादधिककार्यतत्परैरिति यावत् । गणैः प्रमथगणैः हृता उष्णीषाणां शिरोवेष्टनानां पट्टा वस्त्राणि येषां ते 'उष्णीषः शिरोवेष्ट'इत्यमरः । ऋत्विजः अध्वर्य्वादयः याजकाः 'ऋत्विजो याजकाश्च ते' इत्यमरः । अधः भूम्यादौ पतन्ति । दक्षः स्तौति अर्थात् हरं । अस्य दक्षस्य पत्नी करुणं दीनं यथा तथा विलपति रोदिति । 'करुणा' इति पाठे भयविह्वला दक्षपत्नीति ज्ञेयं । च देवैरपि विद्रुतं पलायितं । विपूर्वकाद्द्रुधातोर्भावे क्तः । अट्टहास इति पाठे अट्टः अतिशयितः हासो यस्य 'अट्टावतिशयक्षौमौ' इति यादवः । उच्चैर्हसन्नित्यर्थः । 'चापि देवै'रित्यत्र 'क्षोणिदेवै'रिति वा पाठः । ब्राह्मणैरित्यर्थः । 'द्विजात्यग्रजन्मभूदेववाडवाः' इत्यमरः । पुरा किल दक्षप्रजापतिनाऽपमानितः शंकरः जटाताडनोत्पादितेन वीरभद्रेण दक्षयज्ञं विध्वंसयामास पुनश्च ब्रह्मादिभिः प्रार्थितः दक्षादीनुज्जीवयामासेत्यादिकथा **भागवते** चतुर्थस्कन्धे द्रष्टव्या । अत्र रौद्ररसः । तस्य क्रोधः स्थायीभावः । वीरभद्र आलंबनविभावः इत्यादि यथायथमूहनीयम् । स्रग्धरावृत्तं तल्लक्षणं 'म्रभ्नौ यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति ॥ ३ ॥ चतुर्थमाह—**जितमिति ।** उडूनां नक्षत्राणां 'तारकाप्युडु वा स्त्रियां' इत्यमरः । पतिना चन्द्रेण जितं सर्वोत्कर्षेण स्थितं । भावे क्तः । चन्द्रस्य ओषधीशत्वेन तस्योत्कर्षे ओषध्यादिद्वारा प्रजोत्कर्षः अर्थतः सिद्धः । सुरेभ्यो देवेभ्यो नमः । अस्त्विति शेषः । अनेन सर्वदेवतानुकूल्यं प्रार्थ्यते । 'नमःस्वस्ती'त्यादिना चतुर्थी । द्विजवृषभाः ब्राह्मणश्रेष्ठाः 'स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुंजराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' इत्यमरः । निरुपद्रवाः पीडारहिता भवन्तु । ब्राह्मणानां निरुपद्रवत्वे वेदानां रक्षणं ततो धर्मप्रवृत्तिः ततः सुखमित्यर्थात्सिद्धं । पृथिवी समृद्धानि संपन्नानि सस्यानि धान्यानि यस्यां तादृशी भवतु । पृथिव्याः सस्यसंपन्नत्वे यज्ञादिकर्मणः यथायथं प्रवृत्तेः देवादितुष्टिद्वारा वर्षणादिना प्रजासुखमेवानेन प्रार्थ्यते । आह्लादकत्वेन चन्द्र इव वपुः

शरीरं यस्य एतादृशो नरेन्द्रो राजा आह्लादकत्वेन चन्द्र इव । 'उपमितं व्याघ्रादिभिः' इति समासः । प्रतपतु प्रतापविशिष्टो भवतु । अनेन प्रजानां चोरादिपीडाभावः प्रार्थितो भवति । पुष्पिताग्रा वृत्तम् 'अयुजि नयुगरेफतो यकारो युजि च नजौ, जरगाश्च पुष्पिताग्रा' इति लक्षणात् । नान्दीलक्षणे 'मनाक् काव्यार्थसूचन'स्योक्तत्वात्तदत्र सूच्यते । तथाहि—मुहुः पादाग्रस्थितया । अनेन निरन्तरं कार्यव्यापृतत्वेन सकलपादोऽपि भूमिं न स्पृशतीति सूचितम् । तेन निरन्तरकार्यव्यापृततया इत्यर्थो लभ्यते । स्तनभरेण नम्रतामानीतया 'स्तन-गदी देवशब्दे' इति विशेषार्थकत्वेपि धातोः प्रकृते लक्षणया सामान्यशब्दपरत्वं गृह्यते । तेन स्तनभरेणेत्यस्य वासवदत्ताया आज्ञारूपशब्दसमुदायेन इत्यर्थो लब्धः । शंभोरिति अन्तर्भावितण्यर्थस्य भवतेरिदं रूपं तेन शंभुः वासवदत्ता तस्याः तदाराधने तच्च तदाराधनं चेति कर्मधारयेण तच्छब्दस्य बुद्धिस्थपरामर्शकत्वाच्च विलक्षणसेवायामित्यर्थः । सस्पृहलोचनत्रयपथं लोच्यतेऽनेनेति करणल्युटा ज्ञानसाधनत्रयं लभ्यते । तच्च द्वे नेत्रे एकं मनः एतत्त्रयस्य मार्गं यान्त्या । कथमपीयं महाराजस्य दृष्टिपथं मागात् इति नेत्राभ्यां मनसा च आलोचितया । अनेन 'अहो प्रमादः परिजनस्य' इत्यादि 'हस्ते अर्पय' इत्यन्तः काव्यार्थः सूचितः । ह्रीमत्येत्यादि उत्तरार्धेन सागरिका गृहीतकुसुमा इत्यादि काव्यार्थः सूचितः । तत्र गिरिजापदेन सागरिका सूचिता । गिरिजाशब्दादाचारक्विबन्तात्कर्तरि क्विप् । गिरिजातुल्यत्वं वराभिलाषेण । अनेन श्लोकेन प्रथमाङ्कार्थः सूचितः । औत्सुक्येन कृतत्वरेत्यादिपूर्वार्धेन 'हृदय प्रसीद प्रसीद' इत्यादि । सुसंगता—'भर्तः अतिकोपना खल्वेषा तदग्रहस्ते गृहीत्वा प्रसादयैनां' इत्यन्तः काव्यार्थः सूचितः । अग्रे वरं दृष्ट्वा आत्तसाध्वसरसेत्यनेन 'सागरिका—सुसंगते किमिदानीं करिष्ये' इति वासवदत्ताजनितभीतिरूपार्थः सूचितः । अथवा 'सागरिका—( राजानं दृष्ट्वा सहर्षं ससाध्वसं सकम्पं च स्वगतं ) एनं प्रेक्ष्य अतिसाध्वसेन न शक्नोमि पदात्पदमपि गन्तुं तत्किंवाऽत्र करिष्ये' इत्यर्थः सूचितः । श्लिष्टा इत्यत्र समश्लिषज्जतुकाष्ठमितिवत् श्लिष् धातोः संबन्धमात्रमर्थः । अनेन 'राजा ( सानन्दं ) यथाह भवती ( सागरिकां हस्ते गृहीत्वा स्पर्शसुखं नाटयति )' इत्यर्थः सूचितः । अत्र श्लोके हरति सर्वेषां मन इति व्युत्पत्त्या हरशब्देन राजा, गौरवर्णत्वात् गौरीशब्देन सागरिका च सूच्यते । अनेन श्लोकेन द्वितीयाङ्कार्थः सूचितः । क्रोधेद्धैर्दृष्टिपातैरिति पूर्वचरणेन 'वासवदत्ता सरोषं अवगुण्ठनपटमपनीय' इत्यादि वासवदत्ताक्रोधः सूचितः । अत्र वह्नीनामुपशमो नाम वासवदत्ताक्रोधाग्निना वह्नीनामतिक्रमणं । दक्षः क्रोधापनयनकुशलो राजा । 'राजा—( उपविश्य अञ्जलिं बध्वा ) प्रिये वासवदत्ते, प्रसीद प्रसीद' इत्यर्थः सूचितः । अस्य पत्नी करुणं विलपति । अत्र पत्नीशब्देन सागरिका । अनेन 'सागरिका—हा तात हा तात, एषा एषेदानीं अहमनाथाऽशरणा' इत्याद्यर्थः सूचितः । अनेन तृतीयाङ्कार्थः संक्षेपेण सूचितः । जितमुडुपतिना अत्र उडुपतितुल्यत्वादुडुपती राजा । अनेन 'विजयवर्मा—( उपसृत्य ) जयतु जयतु देवः । देव दिष्ट्या वर्धसे रुमण्वतो विजयेन'

( नान्द्यन्ते )

इत्यादि 'राजा—वसुंधरे! उच्यतां यौगंधरायणः, प्रदर्श्यतां मत्प्रसादस्य विभवः' इत्यर्थः सूचितः । नमः सुरेभ्यः अनेन 'राजा—देवि, पश्य एष ब्रह्मा सरोजे' इत्याद्यर्थः सूचितः। द्विजवृषभा इत्यादिचरणत्रयेण 'राजा—किमतः परमपि प्रियमस्ति यतः नीतो विक्रमबाहुः' इत्यादि आसमाप्ति काव्यार्थः सूचितः ॥४॥ **नान्द्यन्ते इति** । रूपकप्रयोगे नान्दी सूत्रधारेण पठनीया 'सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः' इति भरतोक्तेः । यद्यपि नाट्योपक्रमे विघ्नोपशान्तये कुशीलवैः द्वाविंशत्यङ्गसहितः पूर्वरङ्गः कर्तव्यः । तदुक्तं—'प्रथमं पूर्वरङ्गश्च ततः प्रस्तावनेति च ॥ आरंभे सर्वनाट्यानामेतत्सामान्यमिष्यते ॥ यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशांतये ॥ कुशीलवाः प्रकुर्वंति पूर्वरङ्गः स कीर्तित' इति । अन्यच्च **भावप्रकाशिकायां** 'सभापतिः सभा सभ्या गायका वादका अपि । नटी नटश्च मोदन्ते यत्रान्योन्यानुरंजनात् ॥ अतो रङ्ग इति ज्ञेयः पूर्वं यत्स प्रकल्प्यते ॥ तस्मादयं पूर्वरङ्ग इति विद्वद्भिरुच्यते' इति । तथापि द्वाविंशत्यंगसहितरंगमध्ये नान्दीरूपांगस्यैवावश्यं कार्यत्वात् सैव ग्रंथकृता पूर्वं विहिता । इतराण्यंगानि तु यथासंभवं ग्रंथकृत्प्रदर्शयिष्यति । तदुक्तं 'यद्यप्यंगानि भूयांसि पूर्वरंगस्य नाटके॥ तेषामवश्यं कर्तव्या नान्दी नंदीश्वरप्रिया' इति । नान्दीलक्षणं तु 'आशीर्नमस्क्रियारूपः श्लोकः काव्यार्थसूचकः ॥ नान्दीति कथ्यते तस्यां पदादिनियमोऽपि वा ॥ मांगल्या शंखचक्राब्जकोककैरवशंसिनी ॥ नान्दी पदैर्द्वादशभिरष्टाभिर्वाप्यलंकृता' इति । पदशब्देन च सुप्तिङंतं, अवांतरवाक्यार्थरूपं, श्लोकचतुर्थांशरूपं वा । तदुक्तं **नाट्यप्रदीपे** । 'श्लोकपादः पदं केचित्सुप्तिङंतमथापरे ॥ परेऽवांतरवाक्यैकस्वरूपं पदमूचिरे' इति । अपि वा इति पदनियमपक्षोपक्षेपः । तथाह **विद्यानाथः**—'कैश्चिन्नान्द्यां पदनियमो नाभ्युपगत' इति । तेन प्रकृतनान्द्यां उक्तविधपदनियमाभावेऽपि न क्षतिः । नांदीपदव्युत्पत्तिस्तु नाट्यप्रदीपे 'नंदंति काव्यानि कवींद्रवर्गाः कुशीलवाः पारिषदाश्च संतः ॥ यस्मादलं सज्जनसिंधुहंसी तस्मादियं सा कथितेह नान्दी' इति । अत्र उडुपतिनेत्यनेन प्रकृतनान्द्याश्चंद्रनामांकितत्वं । तदुक्तं 'चंद्रनामांकिता कार्या रसानां स यतो निधिः ॥ प्रीते चंद्रमसि स्फीता रसश्रीरिति वाल्गुकिः' इति । समृद्धसस्या शिवाय इति द्वाभ्यां मांगल्यपदांकिता । इयं च पत्रावलीसंज्ञा नान्दी 'यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः । श्लेषेण वा समासोक्त्या नान्दी पत्रावलीति सा' इति **नाट्यदर्पणे** उक्तत्वात् । एतद्बीजसूचनं प्रागुपपादितं । अन्येऽपि तस्य गुणा उक्ता विस्तरभयान्न लिख्यंते। एतादृश्याः नान्द्या अंते । सूत्रधारः, सूत्रं प्रयोगव्यवस्थां धारयतीति सूत्रधारः 'कर्मण्यण्' 'सूत्रं तंतुव्यवस्थयोः' इति मेदिनी । स्थापकनामा नटः प्रविशतीति शेषः । तदुक्तं 'वर्तनीयतया सूत्रं प्रथमं येन सूच्यते ॥ रंगभूमिं समाक्रम्य सूत्रधारः स उच्यते ॥' **दशरूपके** च "पूर्वरंगं विधायादौ सूत्रधारे विनिर्गते ॥ तद्वत्परः प्रविश्यान्यः सूत्रधारगुणाकृतिः" इत्यादि विस्तरः **भरतशास्त्रे** । नांदीपाठकसूत्रधारलक्षणं तु **भरतशास्त्रे** 'चतुरो नाट्यकुशलः शास्त्ररीतिप्रतिष्ठितः ॥ नाना च

**सूत्रधारः**—अलमतिविस्तरेण। अद्याहं वसन्तोत्सवे सबहुमानमाहूय नानादिग्देशागतेन राज्ञः श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तः। यथा—'अस्मत्स्वामिना श्रीहर्षदेवेनापूर्ववस्तुरचनालंकृता रत्नावली नाम नाटिका कृता। सा चास्माभिः श्रोत्रपरम्परया श्रुता। न तु प्रयोगतो दृष्टा। तत्तस्यैव राज्ञः सकलजनहृदयाह्लादिनो बहुमानादस्मासु

---

खंडकार्यज्ञो नीतिशास्त्रार्थवित्तथा॥ वेश्योपचारनिपुणः काव्यशास्त्रविचक्षणः॥ नानागतिप्रचारज्ञो रसभावविशारदः॥ नाट्यप्रयोगकुशलो नानाशिल्पसमन्वितः॥ छंदोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः॥ अवधार्य प्रयोक्ता च शास्त्रश्चैवोपदेशने॥ एवंगुणस्तथाचार्यः सूत्रधारोऽभिधीयत' इति। सूत्रधार इति कविवचनमिदम्। **अलमतिविस्तरेणेति**। अतिविस्तरेण विधेयं नास्तीत्यर्थः। गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका। तेन गम्यमानविधानक्रियां प्रति अतिविस्तरस्य करणत्वात्करणे तृतीया। अतिविस्तरोऽत्र बहुमंगलश्लोकपठनम्। अनेकनान्दीश्लोकपाठकं वैसूत्रिणं प्रति समागतप्रेक्षकरसविच्छेदकारणीभूतविलंबमसहमानस्योक्तिः। अद्याहमित्यादि भारती वृत्तिः। उक्तं **साहित्यदर्पणे** 'भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः' इति 'रंगं प्रसाध्य मधुरैः श्लोकैः काव्यार्थसूचकैः। रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्तयेत्' इति। एतच्च अद्याहमित्यारभ्य यथाभिलषितं संपादयामीत्यंतेन ग्रंथेन प्रायशः सूत्रधारेण प्रदर्शितम्। अद्य वसंतोत्सवे राजसमूहेन सबहुमानमाहूय अहमुक्त इत्यन्वयः। नन्वत्र अस्मच्छब्दादाह्वानक्रियानिरूपितकर्मत्वेन द्वितीयया भवितव्यं, कथमत्र प्रथमेति चेन्न प्रधानीभूतब्रूधातूत्तरवर्तिक्तप्रत्ययेनाऽस्मदर्थस्योक्तत्वात्प्रथमेति गृहाण। तदुक्तं **हरिणा** 'प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्॥ शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यत' इति। किंचाऽस्मदर्थस्य आह्वाने आर्थिकोऽन्वयः, वचने तु शाब्दोऽन्वयः। अत एव पक्त्वा भुज्यते इत्यादि संगच्छते। स्पष्टं चेदं सर्वं **मनोरमायां**। वसंतोत्सव इति कालनिर्देशः। अयं च फाल्गुनपौर्णमासीमारभ्य पंचमीपर्यंतं होडिकाख्यराक्षसीसंतोषेण शिशुसंरक्षणार्थः इति **हेमाद्रिखंडे** भविष्योत्तरपुराणे। अत्र सहकारमंजरीभक्षणं तन्मंत्राश्च धर्मशास्त्रग्रंथे उक्ताः प्रकृतेऽप्रकृता इत्यतो न लिख्यंते। सबहुमानं ससत्कारं। नाना दिशः येषां ते नानादिशः ते च ते देशाश्च तेभ्यः आगतेन 'सुप्सुपे'ति समासः। अनेन परिषदः भिन्नकलाकोविदत्वं ध्वनितं। श्रीहर्षदेवस्य नाम्नो राज्ञः पादपद्मोपजीविना राजसमूहस्य विशेषणमिदं। पादौ पद्मे इव ते उपजीवति तच्छीलेन 'सुप्यजातौ' इत्यादिना णिनिः। उक्तः आज्ञप्तः। किमुक्त इत्याकांक्षायामाह यथेत्यादि नाटयितव्येत्यंतं। अपूर्ववस्तुरचनालंकृता अपूर्वार्थगुंफनशोभिता। श्रोत्रपरंपरया इति न तु प्रत्यक्षमित्यर्थः। प्रयोगतः अभिनयवाचकप्रयोगशब्दाद्याद्यादित्वात्तसिः। बहुमानात् आदरातिशयात्। यथावत्प्रयोगेण दृश्यकाव्याभिनयनियमानुसारेण। नाटयितव्या अभिनेतव्या। नटधातोर्णिजंतात् कर्मणि तव्यत्। यावदिति वाक्यालं-

चानुग्रहबुद्ध्या यथावत्प्रयोगेण त्वया नाटयितव्या' इति । तद्यावदिदानीं नेपथ्यरचनां कृत्वा यथाभिलषितं संपादयामि । अये, आवर्जितानि च मया सकलसामाजिकानां मनांसीति मे निश्चयः । यतः ।

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम् ।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥ ५ ॥

---

कारें । नेपथ्यरचनामिति नेपथ्यं वेषः 'आकल्पवेषौ नेपथ्यं' इत्यमरः । स च 'रामादिव्र्यंजको वेषो नटे नेपथ्यमिष्यते' इत्यादि भरतोक्तः । अयं च मषीभाषा-माल्यभूषणाद्यनेकविधः आकरग्रंथे प्रसिद्धः तत एव द्रष्टव्यः । ग्रंथविस्तरभयादत्र न प्रपंच्यते । अये इति संभ्रमसूचकमव्ययं 'अये क्रोधविषादयोः संभ्रमे' इति हैमः । आवर्जितानि वशीकृतानि । **श्रीहर्ष इति** । निपुणः प्रवीणः 'प्रवीणे निपुणाभिज्ञ' इत्यमरः । एषा परिषदपीत्यन्वयः । परिषत् सभा । परिषदादिशब्दाः स्थलविशेषे तत्रत्यपुरुषविशेषे च 'समज्या परिषद्गोष्ठी' 'चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा' इत्युभयविधप्रयोगदर्शनात् । प्रकृते तत्स्थाः पुरुषा गृह्यंते । गुणग्राहिणीति विशेषणात् । सभ्यस्वरूपमादिभरते 'सभ्यास्तु विबुधैर्ज्ञेया ये दिदृक्षान्विता जनाः ॥ मध्यस्थाः सावधानाश्च वाग्मिनो न्यायवेदिनः ॥ त्रुटितात्रुटिताभिज्ञा विनयानम्रकं-धराः ॥ अगर्वा रसभावज्ञास्तौर्यत्रितयकोविदाः ॥ असद्वादनिषेद्धारश्चतुरा मत्सर-च्छिदः ॥ अमंदरसनिष्यंदहृदया भूषणोज्ज्वलाः ॥ सुवेशा भोगिनो नानाभाषा वीर-विशारदाः ॥ स्वस्वोचितस्थानसुस्थास्तत्प्रशंसापरायणाः' इति । गुणग्राहिणी, गुणान् गृह्णाति तच्छीला इति ताच्छील्ये णिनिः । हारि मनोहरं अवश्यं हरतीति तथा । मनआकर्षकमिति यावत् । वत्सराजः उदयनः 'उदयनस्तु वत्सराजे' इति हैमः । तस्य चरितं अस्तीति शेषः । नाट्यं काव्योपनिबद्धधीरोदात्ताद्यवस्थानुकारश्चतु-र्विधाभिनयेन तादात्म्यापत्तिः, तदुक्तं **दशरूपके** 'अवस्थानुकृतिर्नाट्यं' इति । तत्र दक्षा निष्णाताः । वयमिति 'त्यदादीनी'त्येकशेषः । तेन अनुकारिसर्वपुरुषाणां कौश-ल्यसिद्धिः । अन्यथा सूत्रधार एव बोध्येत, बहुवचनं तु स्वनिष्ठगुणाभिप्रायेण इति संभाव्येत । इह, प्रकृतनाटिकाप्रयोगविधौ । एकैकं वस्तु निपुणकाव्यादि । एकैकमित्यत्र 'एकं बहुव्रीहिवत्' इत्यनेन बहुव्रीहिवद्भावः । वाञ्छितफलप्राप्तेः, वाञ्छितफलं सकलसभामनोवशीकारः तस्य प्राप्तेः लाभस्य पदं स्थानं 'पदं व्यवसितत्राणस्थान-लक्ष्मांघ्रिवस्तुषु' इत्यमरः । मद्भाग्यस्य उपचयः वृद्धिः । अत्र हेतौ पंचमी । समुदितः मिलितः । गुणानां अनुकूलांगानां गणः समूहः । शार्दूलविक्रीडितं वृत्तम् लक्षणं तूक्तं । इयं च भारतीवृत्त्यंगभूता प्ररोचना । तत्स्वरूपं च प्रस्तुतार्थप्रशंसनेन श्रोतॄणां प्रवृत्त्यु-न्मुखीकरणं । तदुक्तं **दशरूपके** 'उन्मुखीकरणं तत्र प्रशंसातः प्ररोचना' इति ॥ ५ ॥

तद्यावद्गृहं गत्वा गृहिणीमाहूय संगीतकमनुतिष्ठामि। (परिक्रम्य नेपथ्याभिमुखमवलोक्य च।) इदमस्मदीयं गृहम्। यावत्प्रविशामि। (प्रविश्य।) आर्ये, इतस्तावत्।

(प्रविश्य।)

**नटी**—अज्जउत्त, इअम्हि। आणवेदु अज्जो को णिओओ अणुचिट्ठीअदु त्ति।

---

१. आर्यपुत्र, इयमस्मि। आज्ञापयत्वार्यः को नियोगोऽनुष्ठीयतामिति।

---

संगीतमेव संगीतकं स्वार्थे कः। तल्लक्षणं **संगीतरत्नाकरे** 'नृत्तं गीतं तथा वाद्यं त्रयं संगीतमुच्यते' इति। **नेपथ्याभिमुखमिति**। नेपथ्यं जवनिका तदभिमुखमवलोक्येति कविवचनं। नटेन अवलोकनकर्मैव कृतं, तदनुवादोयं। एवमग्रेऽपि तत्र तत्र कविवचो बोद्धव्यं। 'नेपथ्यं स्याज्जवनिका रंगभूमिः प्रसाधनं' इत्यजयः। **परिक्रम्येति**। परिक्रमणं इतस्ततो भ्रमणं। अस्माकमिदमस्मदीयं 'वृद्धाच्छः'। इत आरभ्य सज्जीभवाव इत्येतत्पर्यन्तं आमुखं, एतल्लक्षणं साहित्यदर्पणकारेण व्याख्यातम्। 'नटी विदूषको वापि पारिपार्श्वक एव वा॥ सूत्रधारेण सहितः संलापं यत्र कुर्वते॥ चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः॥ आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनेति सा' इति। आर्ये, इतस्तावत्। एहीति शेषः। तावदिति वाक्यालंकारे। आर्ये, इति भार्यां प्रति संबुद्धिः। 'पत्नी चार्येति संभाष्येति' भरतवचनात्। इतः इत्यत्र इदम्शब्दात्सप्तम्यंतात् 'इतराभ्योऽपि दृश्यते' अनेन तसिल् 'इदम इश्' इत्यनेन इशादेशश्च, अत्रेत्यर्थः। **नटी**। अज्जउत्त इअम्हि। आर्यपुत्र इयमस्मि इति छाया। 'सर्वस्त्रीभिः पतिर्वाच्य आर्यपुत्रेति यौवने' इति भरतोक्तेर्नटीसंबुद्धिः स्थापकं प्रति। नाटकादिषु कवीनां प्रायः शौरसेनीभाषैवाऽभिमता। तदुक्तं **मातृगुप्ताचार्यैः** 'प्राक्प्रतीचीभुवोः सिंध्वोर्हिमवद्विंध्यशैलयोः॥ अंतरावस्थितं देशमार्यावर्तं विदुर्बुधाः॥ आर्यावर्तप्रसूतासु सर्वास्वेव हि जातिषु॥ शौरसेनीं समाश्रित्य भाषां काव्ये प्रयोजयेत्' इति। आणवेदु अज्जो को णिओओ अणुचिट्ठिअदु त्ति। आज्ञापयत्वार्यः को नियोगोऽनुष्ठीयतामिति छाया। अत्रेत्थं साधनिका। आर्यपुत्रपदे 'ह्रस्वः संयोगे' इति सूत्रेणाकारस्य ह्रस्वता, 'र्यशय्याभिमन्युषु जः' इत्यनेन रेफयुक्तयकारस्थाने जकारः, 'सर्वत्र लवराणां' इति पुत्रशब्दे रेफस्य लोपः 'कगचजतदपयवानां प्रायो लोपः' अनेन पकारलोपः, 'शेषादेशयोर्द्वित्वमनादौ' अनेन जकारतकारयोर्द्वित्वं। इयमस्मि इत्यत्र 'कगचे'त्यनेन पूर्वोक्तसूत्रेण 'यलोपः' 'मिमोसुमामानां होऽधश्च' अनेन मिप्प्रत्ययस्याधो हकारः अस्तेर्लोपश्च। आज्ञापयतुपदे 'म्नज्ञपंचाशत्पंचदशेषु णः' अनेन ज्ञस्य णकारता, अत्र णादेशस्य अज्जेत्यत्रत्यजकारवत् शेषादेशयोरित्यनेन द्वित्वं न भवति, नेत्यनुवर्तमाने 'आज्ञो ज्ञस्येति' सूत्रेण आङ्परस्य ज्ञादेशणकारस्य द्वित्वनिषेधात्। 'णिच्च एदि'त्यनेन णिच एत्वे 'पो व'

सूत्रधारः—आर्ये, रत्नावलीदर्शनसमुत्सुकोऽयं राजलोकः । तद्गृह्यतां नेपथ्यम् ।

नटी—(सोद्वेगम् ।) [1]अज्जउत्त, णिच्चिन्तो दाणिं सि तुमम् । ता कीस ण णच्चसि । मह मन्दभाआए उण एक्का जेव्व दुहिदा । सा वि तुए कहिंचि देसन्तरे दिण्णा । कहं एव्वं दूरदेसट्ठिदेण जामादुणा सह से पाणिग्गहणं भविस्सदि त्ति इमाए चिन्ताए अप्पा वि ण मे पडिभादि । किं उण णच्चिदव्वम् ।

सूत्रधारः—आर्ये, दूरस्थेनेत्यलमुद्वेगेन । पश्य ।

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ ६ ॥

---

१. आर्यपुत्र, निश्चिन्त इदानीमसि त्वम् । तत्किमिति न नृत्यसि । मम मन्दभाग्यायाः पुनरेकैव दुहिता । सापि त्वया कस्मिंश्चिद्देशान्तरे दत्ता । कथमेवं दूरदेशस्थितेन जामात्रा सहास्याः पाणिग्रहणं भविष्यतीत्यनया चिन्तयात्मापि न मे प्रतिभाति । किं पुनर्नर्तितव्यम् ।

---

इत्यनेन पकारस्थाने वादेशः, 'दुसुमुविध्यादिष्वेकस्मिन्' इति सूत्रेण तोः स्थाने दुरादेशः । एवमग्रेऽपि ऊह्यं, ग्रंथविस्तरभीत्याऽनावश्यकतया च न बालभाषा प्रतिपदं व्याख्यायते । **सूत्रधारः** । रत्नावलीति रत्नावलीनामनाटिकानुकृतिरित्यर्थः । अन्यथा सागरिकापरनाम्न्याः रत्नावलीनायिकाया दर्शनमित्यपि संभाव्येत । राजलोकः, राजजनः 'लोकस्तु भुवने जने' इत्यमरः । तदिति, तस्माद्धेतोरित्यर्थः 'यत्तद्यतस्ततो हेतौ' इत्यमरः । नेपथ्यमत्र वेषः । **नटी** । सोद्वेगं ब्रवीतीति शेषः । सोद्वेगमिति वचनक्रियाया विशेषणं । एवं एवंविधेषु सहर्षं सस्मितं, सविषादं, सादरं इत्यादिषु ज्ञेयं । यद्यपि 'चोरादिसंभूतं भयमुद्वेग उच्यते' इत्युद्वेगपदार्थः प्रसिद्धः तथाप्यत्र विमनस्कत्वं गृह्यते । वक्ष्यमाणनट्युक्तिस्वारस्यात् । (आर्यपुत्र, निश्चित इदानीमसि त्वं । तत्किमिति न नृत्यसि । मम मंदभाग्यायाः पुनरेकैव दुहिता । सापि त्वया कस्मिंश्चिद्देशांतरे दत्ता । कथमेवं दूरदेशस्थितेन जामात्रा सहास्याः पाणिग्रहणं भविष्यतीत्यनया चिंतयात्मापि न मे प्रतिभाति । किं पुनर्नर्तितव्यम् । इति छाया) । मंदभाग्याया इति । मंदं अल्पं भाग्यं यस्याः सा । दुःखावेशेनोक्तिरियं । दत्ता दित्सिता 'कथमेवं' इत्याद्यग्रेतनग्रंथस्वारस्यात् । प्रतिपादितेत्यर्थकरणे तु उत्तरग्रंथविरोधः स्पष्ट एव । आत्मापि शरीरमपि । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरः । **सूत्रधारः** । अलमुद्वेगेनेति तृतीया अलमतिविस्तरेणेतिवत् गम्यमानक्रियानिमित्ता । **द्वीपादिति** । अत्र स्थापकनटो मर्त्यरूपो भूत्वा बीजं सूचयति । तदुक्तं **दशरूपके**—'दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः । सूचयेद्वस्तु

(नेपथ्ये ।)

साधु । भरतपुत्र, साधु । एवमेतत् । कः संदेहः । ('द्वीपात्-'(१।६) इत्यादि पठति ।)

**सूत्रधारः**—(आकर्ण्य । सहर्षम् ।) आर्ये, नन्वयं मम यवीयान्भ्राता गृहीतयौगंधरायणभूमिकः प्राप्त एव । तदेहि । आवामपि नेपथ्यग्रहणाय सज्जीभवावः ।

(इति निष्क्रान्तौ ।)

इति प्रस्तावना ।

---

बीजं वा मुखं पात्रमथापि वा' इति । अन्यस्मात् द्वीपात् द्विर्गता आपो यस्मिन्निति द्वीपं 'द्व्यंतरुपसर्गेभ्योप'ेति ईदादेशः । इतरस्मादंतरीपात् । जलनिधेः जलानि निधीयंते अस्मिन्निति जलनिधिः 'कर्मण्यधिकरणे च' इति किप्रत्ययः तस्य, समुद्रस्य मध्यात् । दिशः अंतादपि, अभिमुखीभूतः संमुखीभूतः, अनुकूल इति यावत् । च्विप्रत्ययः । 'कुगतिरि'ति समासः । विधिः, दैवं । अभिमतं, इष्टं वस्तु । झटिति आनीय घटयति मेलयति । आर्यावृत्तमिदं । तदुक्तं 'यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पंचदश सार्या' इति ॥ **नेपथ्ये** । साधु मनोहारि भवतोक्तमिति शेषः । भरतपुत्रेति सूत्रधारबहुमानसूचिका संबुद्धिः । अत्र द्वीपादन्यस्मादित्यादिना यौगंधरायणो वत्सराजस्य रत्नावलीप्राप्तिहेतुभूतमनुकूलदैवं स्वव्यापारं बीजत्वेनोपक्षिप्तवान् अतः वक्ष्यमाणलक्षणस्य मुखसंधेरुपक्षेपाख्यमंगमिदं । एतल्लक्षणं तु 'काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः' इति भरते । **सूत्रधारः** । सहर्षं । अभिमतनाटिकाप्रयोगदर्शनानुकूलयौगंधरायणभूमिकावलोकनं हर्षकारणं । हर्षलक्षणं 'चेतःप्रसन्नता हर्षः स्यात्प्रियोदर्शनादिभिः' इति । यवीयान् कनिष्ठः 'यवीयोवरजानुजाः' इत्यमरः । गृहीता यौगंधरायणस्य वत्सराजप्रधानस्य भूमिका वेषो येन 'भूमिका रचनायां स्याद्वेशांतरपरिग्रहे' इति मेदिनी । **इति निष्क्रान्तौ इति** । तदुक्तं 'एषामन्यतमेनार्थं पात्रं वाक्षिप्य सूत्रभृत्॥ प्रस्तावनांते निर्गच्छेत्ततो वस्तु प्रपंचयेत्' इति । **इति प्रस्तावना** । तदुक्तं **सुधाकरे** 'विधेर्यथैव संकल्पो मुखतां प्रतिपद्यते ॥ प्रधानस्य प्रबंधस्य तथा प्रस्तावना मता' इति । **दशरूपके** च 'सूत्रधारो नटीं ब्रूते मार्षं वाथ विदूषकं ॥ स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखं ॥ प्रस्तावना वा तत्र स्युः कथोद्घातः प्रवृत्तकं ॥ प्रयोगातिशयश्चाथ वीथ्यंगानि त्रयोदश' इति । प्रकृते कथोद्घातरूपप्रस्तावना । तदुक्तं 'स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः ॥ गृहीत्वा प्रविशेत्पात्रं कथोद्घातो द्विधैव सः' इति । प्रकृते यौगंधरायणः—एवमेतत् कः संदेहः द्वीपादन्यस्मादपि इत्यादि सूत्रधारवाक्यं गृहीत्वाप्रविष्ट इति । ततो वस्तु प्रपंचयेदित्युक्तम् । ततः सूत्रधारनिर्गमनादनंतरं । इत आरभ्य आनाटिकासमाप्तिं वस्तुप्रपंचनं । वस्तुप्रपञ्चने विशेषो **दशरूपके** 'आद्यन्तमेव निश्चित्य पञ्चधा तद्विभज्य च ॥ खंडशः संधिसंज्ञाश्च

( ततः प्रविशति यथानिर्दिष्टो यौगंधरायणः । )

**यौगंधरायणः**—एवमेतत् । कः संदेहः । ('द्वीपात्–' (१।६) इति पुनः पठित्वा । ) अन्यथा क्व सिद्धादेशप्रत्ययप्रार्थितायाः सिंहलेश्वरदुहितुः समुद्रे प्रवहणभङ्गनिमग्नायाः फलकासादनम् । क्व च कौशाम्बीयेन

---

भागानपि च खंडयेत् ॥ चतुःषष्टिस्तु तानि स्युरंगानि' इति । तत्र विभागप्रकारः 'अवस्थाः पंच कार्यस्य प्रारब्धस्य फलार्थिभिः ॥ आरंभयत्नप्राप्त्याशानियताप्ति-फलागमाः ॥ बीजविन्दुपताकाख्यप्रकरीकार्यलक्षणाः ॥ अर्थप्रकृतयः पंच पंचावस्थासमन्विताः ॥ यथासंख्येन जायंते मुखाद्याः पंच संधयः ॥ मुखं प्रति-मुखं गर्भः सावमर्शोऽथ संहृतिः' इति । संधिसामान्यलक्षणं **दर्पणे** 'अंतरैकार्थ-संबंधः संधिरेकान्वये सति' इति । अस्यां नाटिकायां प्रथमांके मुखसंधिः । बीजा-नामुत्पत्तिरनेकप्रकारप्रयोजनस्य रसस्य च हेतुर्मुखसंधिः । तदुक्तं **दर्पणे** 'यत्र बीजसमुत्पत्तिर्नानार्थरससंभवा ॥ प्रारंभेण समायुक्ता तन्मुखं परिकीर्तितं' इति । अस्य च बीजारंभार्थयुक्तानि द्वादशांगानि भवंति । उक्तं च **भरतेन** 'उपक्षेपः परिकरः परिन्यासो विलोभनं ॥ युक्तिः प्राप्तिः समाधानं विधानं परिभावना ॥ उद्भेदः करणं भेदो द्वादशांगानि वै मुखे' इति । एतानि च द्वादशमुखांगानि बीजा-रंभद्योतकानि साक्षात्पारंपर्येण वा विधेयानि । एषां मध्ये उपक्षेपपरिकरपरिन्यास-युक्त्युद्भेदसमाधानानामवश्यंभाविता । अत्र नाटिकायां तु अन्यान्यपि कानि-चित्संभवंति । लक्षणसमन्वयः तत्तदवसरे यथायथं प्रदर्शयिष्यते । इदमहं संपादयामीत्यध्यवसायमात्रमारंभः । यदाह **भरतः** 'औत्सुक्यमात्रं बंधस्य यो बीजस्य निबध्यते ॥ महतः फलयोगस्य सोऽत्र प्रारंभ इष्यते' इति । यथा अस्यां 'प्रारंभेऽस्मिन्स्वामिनो वृद्धिहेतौ दैवे चेत्थं दत्तहस्तावलंबे' इत्यादिना सचिवायत्त-सिद्धेर्वत्सराजस्य कार्यारंभो यौगंधरायणमुखेन दर्शितः । स्तोकोद्दिष्टः कार्यसाधकः पुरस्तादनेकप्रकारं विस्तारी हेतुविशेषो बीजं । अस्यापि लक्षणं तेनैवोक्तं 'स्वल्पमात्रं समुत्सृष्टं बहुधा यद्विसर्पति ॥ फलावसानं यच्चैव बीजं तदिह कीर्तितं' इति । यथात्र वत्सराजस्य रत्नावलीप्राप्तिहेतुरनुकूलदैवो यौगंधरायणव्यापारो विष्कंभके न्यस्तः 'यौगंधरायणः—एवमेतत् । कः संदेहः ( द्वीपादन्यस्मादिति पुनः पठित्वा )' इत्या-दिना 'प्रारंभेऽस्मिन्स्वामिनो वृद्धिहेतौ' इत्यंतेन । **यथानिर्दिष्टो यौगंधरायणः ।** यथानिर्दिष्ट इति द्वीपादन्यस्मादित्यादि पठन्नित्यर्थः । तदेवाह एवमेतदिति । एतत् द्वीपादन्यस्मादिति भरतोक्तं एवं यथार्थमित्यर्थः । तदेव द्रढयति कः संदेह इत्यादिना । द्वीपादन्यस्मादित्यादि भरतोक्तं यत् ( अनुकूलो विधिः दूरमपि अभिमतं वस्तु झटिति घटयति इति ) तत्स्वाभिमतवृत्ते योजयति **अन्यथेत्यादि** । अन्यथा, दैवानुकूलत्वेऽवश्यमिष्टं सिध्यतीत्यनंगीकारे । सिद्धस्य अणिमादिसिद्धिविशिष्टस्य पुरुषस्य, आदेशः कथनं । दिशिरुच्चारणे इति 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति सूत्रे **महाभाष्ये** उक्तत्वात् उच्चारणेऽत्र दिशधातुः । तेन सिद्धपुरुषवचनेन यः प्रत्ययः

वणिजा सिंहलेभ्यः प्रत्यागच्छता तदवस्थायाः संभावनम् । रत्नमाला-चिह्नायाः प्रत्यभिज्ञानादिहानयनं च । ( सहर्षम् । ) सर्वथा स्पृशन्ति नः

विश्वासः । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । तेन प्रार्थितायाः याचितायाः चतुर्थांके 'वसुभूतिः—(सास्रं) देव न शक्यं निवेदयितुमित्यारभ्य परिहरता न दत्ता' इत्यंतेन स्पष्टमिदं । सिंहलो द्वीपविशेषः । स च लंकानिकटवृत्तिः । तदुक्तं भागवते पंचमस्कन्धे एकोनविंशाध्याये । 'जंबुद्वीपस्य च राजनुपद्वीपानष्टौ ह्येक उपदिशंति' इत्युपक्रम्य 'तद्यथा स्वर्णप्रस्थश्चंद्रशुक्ल आवर्तनो रमणको मुदाहरणः पांचजन्यः सिंहलो लंकेति ।' अत्र सिंहलस्य लंकात्वे अष्टद्वीपोपक्रमस्यासंगतिः । एतेन सिंहलं लंकां वदंतो भ्रांता इति वेदितव्यम् । तस्य ईश्वरः अधिपतिः 'स्थेशभास' इत्यादिना ईशेर्वरच् ।'इभ्य आढ्यो धनी स्वामी त्वीश्वरः' इत्यमरः । तस्य विक्रमबाहुनाम्नः दुहितुः पुत्र्याः 'दुहिता तनया पुत्री' इति हलायुधः । 'नप्तृनेष्टृ' इत्यादिना निपातितः । रत्नावल्याः (सागरिकायाः) समुद्रे सागरे समीचीना उद्रा जलचरा यस्मिन् स समुद्रः मुद्रया मर्यादया सहित इति वा 'समुद्रोऽब्धिः' इत्यमरः । प्रवहणं प्रकृष्टं उह्यते अनेन इति प्रवहणं करणे ल्युट् 'कृत्यच' इति णत्वं । ('पोतः प्रवहणं स्मृत'मिति हलायुधात्) । 'पोतः शिशौ प्रवहणे'इत्यनेकार्थसंग्रहकोशाच्च पोतप्रवहणयोः पर्यायताऽवगमात् प्रवहणं नौका तस्य भंगः नाशः तेन निम्नं गभीरं यथा स्यात्तथा गच्छतीति तस्याः 'अन्येष्वपि दृश्यते' अत्रापिदृशिग्रहणात् डप्रत्ययः । नौकाभंगेन उदके निमज्जंत्या इत्यर्थः । निमग्नायाः इति पाठस्तु साधीयान् । फलकासादनं फलकस्य काष्ठविशेषस्य (फळी) आसादनं प्रापणं । आङ्पूर्वकात् प्राप्त्यर्थकात् षद् धातोर्णिजंतात् 'ल्युट् च' इति ल्युट् । 'भावितमासादितं च' इत्यत्रामरे प्राप्त्यर्थकत्वमस्य स्पष्टं । कौशांबीयेन, कुशांबेन निर्वृत्ता कौशांबी नगरी वत्सेश्वरराजधानी 'तेन निर्वृत्तं' इति अण् । अण्णंतात् ङीप् । तत्र भवेन 'वृद्धाच्छः' वणिजा वैश्येन सिंहलेभ्यः द्वीपस्यैकत्वेऽपि तदंतरवर्तिदेशग्रामाभिप्रायकं बहुवचनं । अपादाने पंचमी । प्रत्यागच्छता प्रतिनिवर्तमानेन । तदवस्थायाः, ऊर्मिमालाप्रेरितेतस्ततश्चलत्फलकाधिष्ठितिसंशयितजीवितावस्थायाः । संभावनं सत्कारः आश्वासनादिना स्वीकरणं रत्नमालाचिह्नायाः रत्नमाला हीरकस्रक् चिह्नं लक्ष्म ज्ञापकं यस्याः सा । 'चिह्नं लक्ष्म च लक्षणं' इति कोशः । वक्ष्यते चेदं चतुर्थांके—'वसुभूतिः—( विदूषकस्य कंठे रत्नमालां दृष्ट्वाऽपवार्य ) बाभ्रव्य ! जाने सैवेयं रत्नमाला या देवेन राजपुत्र्यै प्रस्थानसमये दत्ता' इति । प्रत्यभिज्ञानात्, अमूल्यरत्नमालाचिह्नेन राजपुत्रीत्वविषयकज्ञानविशेषात् । इह कौशांब्यां आनयनं प्रापणं । अत्र द्वौ क्वशब्दौ समुद्रपतितायाः सागरिकायाः फलकासादनं, वणिजा तदवस्थायाः संभावनापूर्वकमिहानयनं चेत्यनयोरत्यंताऽसंभवित्वबोधकौ । यथा कैयटे—'भाष्याब्धिः क्वातिगंभीरः क्वाहं मंदमतिस्ततः' इति । अत एव अननुरूपयोर्घटनवर्णनात् विषमालंकारः । तस्माद्दैवानुकूल्येनैवेदं सिद्धमित्यभिप्रायः । सर्वथा सर्वप्रकारेण, स्वामिनं वत्सेश्वरं 'स्वामिन्नैश्वर्ये' इति निपातः । अभ्युदयाः कल्याणानि स्पृशंति प्राप्नुवंतीत्यर्थः । अत्र अन्यथा 'क

स्वामिनमभ्युदयाः । ( विचिन्त्य । ) मयापि चैनां देवीहस्ते सगौरवं निक्षिपता युक्तमेवानुष्ठितम् । श्रुतं च मया बाभ्रव्योऽपि कञ्चुकी सिंहलेश्वरामात्येन वसुभूतिना सह कथं कथमपि समुद्रादुत्तीर्य कोसलोच्छित्तये गतवता रुमण्वता मिलित इति । तदेवं निष्पन्नप्रायमपि प्रभुप्रयोजनं न मे धृतिमावहतीति कष्टोऽयं खलु भृत्यभावः । कुतः ।

---

सिद्धेत्यारभ्य सर्वथा स्पृशंति स्वामिनमभ्युदयाः' इत्यंतेन उत्पन्नार्थस्य वहुलीकरणात् परिकराख्यमंगमिदं मुखसंधेः । तल्लक्षणं 'यदुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरस्तु स' इति । एनां सागरिकां, देवीहस्ते । अत्र देवी वासवदत्ता, तदुक्तं 'देवीति महिषी वाच्या राज्ञा परिजनेन तु' इति, सगौरवं गौरवेण सत्कारेण सहितं निक्षेपणक्रियाया विशेषणमिदं, निक्षिपता अर्पयता, युक्तं योग्यं, अनुष्ठितं आचरितं । योग्यत्वं च प्रकृतकार्यानुकूलत्वेन । बाभ्रव्यः एतन्नामको वत्सेश्वरस्य कंचुकी स च रत्नावलीप्रार्थनार्थं यौगंधरायणेन सिंहलेश्वरसकाशं प्रेषितः । कंचुकीलक्षणमुक्तं भरतेन 'ये विद्यासत्यसंपन्नाः कामदोषविवर्जिताः ॥ ज्ञानविज्ञानकुशलाः कंचुकीयास्तु ते स्मृताः' इति । अन्यत्र च 'अंतःपुरचरो राज्ञो वृद्धो विप्रो गुणान्वितः ॥ उक्तिप्रत्युक्तिकुशलः कंचुकीत्यभिधीयते' इति । सिंहलेश्वरस्य विक्रमबाहोः अमात्येन अमा सह भवः तेन अव्ययात्त्यप्' 'अमांतिकसहार्थयोः' इति मेदिनी । मंत्रिणेत्यर्थः । वसुभूतिना एतन्नामकेन सह । 'सहयुक्तेऽप्रधाने' इति सहार्थे तृतीया । कथं कथमपि । किम्शब्दात् 'किमश्च' इति सूत्रेण प्रकारे थमुप्रत्ययः स च तृतीयांतात् शब्दशक्तिस्वभावात् 'नित्यवीप्सयोः' इति वीप्सायां द्वित्वं, एवं च केन केन प्रकारेण समुद्रादुत्तीर्येति वाक्यार्थः, यथाशक्ति उपलब्धसर्वप्रकारैरिति फलितोऽर्थः । महाप्रयासेनेति यावत् । विंध्यदुर्गावस्थितकोसलेश्वरस्य कोसलदेशाधिपतेः उच्छित्तिः नाशः तस्यै, तन्नाशे तद्राज्यलाभ आर्थिकः । एतच्चतुर्थांके 'विजयवर्मा—देव, श्रूयतामित्यारभ्य, विजयवर्मा—देव, ततो रुमण्वानपि कोसलेषु मद्भ्रातरं ज्यायांसं जयवर्माणं स्थापयित्वा प्रहारव्रणितहास्तिकप्रायमशेषसैन्यमनुवर्तमानः शनैःशनैरागच्छत्येव' इत्येतदंतेन स्पष्टं । गतवता यातवता रुमण्वता एतन्नामकवत्सेश्वरसेनाधिपतिना मिलितः संगतः । अत्र 'मयापि चैनां' इत्यारभ्य 'मिलित' इत्यंतेन अंतःपुरस्थसागरिकाया उदयनस्य सुखेन दर्शनादिप्रयोजनावधारणाद्बाभ्रव्यसिंहलेश्वरामात्ययोः स्वनायकसमागमहेतुप्रयोजनत्वेन संप्रधारणात् युक्त्याख्यमंगमिदं । उक्तं च 'संप्रधारणमर्थानां युक्तिरित्यभिधीयते' इति । एवं, पूर्वोक्तप्रकारेण, निष्पन्नप्रायं निष्पन्नः सिद्धः प्रायः बाहुल्यं यस्य बह्वंशसिद्धमिति यावत् । 'प्रायो मरणानशने मृत्यौ बाहुल्यतुल्ययोः' इति मेदिनी । 'सिद्धे निर्वृत्तनिष्पन्नौ' इत्यमरः । प्रभोः वत्सराजस्य कार्यं सागरिकालाभरूपं, धृतिं धैर्यं संतोषं वा न आवहति न प्रापयति स्वेच्छाचारित्वादिति भावः । अत एवोत्तरश्लोकस्वारस्यं भवति । कष्टः कृच्छ्रः 'स्यात्कष्टं कृच्छ्रम्' इत्यमरः । दुःखद इत्यर्थः । भृत्यभावः

प्रारम्भेऽस्मिन्स्वामिनो वृद्धिहेतौ दैवेनेत्थं दत्तहस्तावलम्बे।
सिद्धेर्भ्रान्तिर्नास्ति सत्यं तथापि स्वेच्छाचारी भीत एवास्मि भर्तुः ॥ ७ ॥

भृत्यस्य सेवकस्य 'भृञोऽसंज्ञायां' इति क्यप्, भावः आत्मा स्वरूपं 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' इति कोशः, सेवकत्वमिति यावत्, तत्र हेतुमाक्षिपति कुत इति। किम्शब्दात्तसिल् 'कु तिहोः' इति क्वादेशः। कस्मात्कारणादित्यर्थः। हेत्वभिप्रायं वर्णयति—**प्रारंभेऽस्मिन्नित्यादि**। स्वामिनः प्रभोः वत्सराजस्य वृद्धिहेतौ वृद्धेरभ्युदयस्य हेतौ कारणे प्रारंभे उद्घाते 'हेतुर्ना कारणं बीजं', 'स्यादभ्यादानमुद्घात आरंभः' इत्युभयत्राप्यमरः। तत्त्वं चास्य चतुर्थांके यौगंधरायणवाक्ये योऽस्याः पाणिग्रहणं करिष्यति स सार्वभौमो राजा भविष्यतीत्यनेन स्पष्टं। हेताविति विषयसप्तमी। वृद्धिहेतुविषयप्रारंभे इत्यर्थः। अथवा प्रारंभ इत्यत्र 'अकर्तरि च कारके' इति कर्मणि घञ्, तत्र संज्ञायामिति प्रायिकमित्युक्तं। अत एव को भवता लाभो लब्ध इति संगच्छते, एवं च वृद्धिहेतौ प्रारभ्यमाण इति फलितोऽर्थः। दैवेन विधिना, इत्थं अनेन प्रकारेण 'इदमस्थमुः' इदम इशादेशः। रत्नावल्याः फलकासादनमित्यादिपूर्वोक्तप्रकारेण वसुभूतिसहितकंचुकिना रुमण्वतः समागमेन च इत्येवं प्रदर्शितप्रकारेण, दत्तहस्तावलंबे दत्तः हस्तस्य अवलंबः आश्रयो येन तस्मिन् सहायीभूते इत्यर्थः, 'अथावलंबित' इत्यमरे क्तप्रत्ययः अत्र घञ् इति विशेषः। धात्वर्थस्त्वेक एव। सिद्धेः उक्तकार्यनिष्पत्तेः भ्रांतिः भ्रमः 'भ्रांतिर्मिथ्यामतिर्भ्रमः' इत्यमरः। संशय इति फलितं। नास्तीति सत्यं। तथापि सिद्धिसंशयाभावेऽपि, स्वस्य इच्छा वांछा, स्वाम्यननुज्ञया एतत्कार्यकरणेच्छेत्यर्थः तया चरति तच्छीलः 'सुप्यजातौ' इति णिनिः। अथवा स्वेच्छया य आचारः उक्तकार्यप्रयत्नकरणं सोऽस्यास्तीति स्वेच्छाचारी 'अत इनिठनौ' इति इनिः। भर्तुः स्वामिनः भीत एव अस्मि भर्तुरिति 'भीत्रार्थाना'मित्यपादानत्वम्। भर्तृहितचिंतनपरोऽप्यहं तदनुज्ञां विना चिकीर्षितमिदं कार्यं तस्यानुमतं स्याद्वा न वेति शंका मदंतःकरणं व्याकुलयतीति भावः। अत्र प्राक्सिद्धप्रारंभस्य दैवानुकूल्यवर्णनात् अनुगुणालंकारः। तदुक्तं 'प्राक्सिद्धत्वगुणोत्कर्षोऽनुगुणः परसंनिधेः' इति। शालिनीवृत्तम्, 'मात्तौ गौ चेच्छालिनी वेदलोकैः' इति लक्षणात् ॥ ७ ॥
अत्र 'कः संदेह' इत्यादिना प्रारंभेऽस्मिन्नित्यंतेन बीजोपन्यासः। एतस्य बीजत्वं तु बीजतुल्यत्वात्। तथा हि बीजाद्वृक्षः वृक्षे पुष्पं पुष्पात्फलं, एतच्च बीजस्यानेकावस्थारूपत्वं पृथिव्युदकादिसंबंधेन, न तु केवलेन बीजेनैव फलपर्यंता अनेकाऽवस्थाः संभवंति इति लोके प्रसिद्धं, तद्वदत्रापि बीजस्य आरंभादियोगेनैवाऽवस्थाः संभवंति। स एव योगोऽत्र संधिपदेन उच्यते। ते च पंच, तत्र आरंभबीजसंबंधो मुखसंधिः, यत्नबिंदुसंबंधः प्रतिमुखाख्यः संधिः, प्राप्त्याशापताकयोर्गर्भसंधिः, नियताप्तिप्रकर्योः संबंधो विमर्शसंधिः, फलागमकार्ययोर्निर्वहणसंधिरिति। एतत्प्रमाणानि पूर्वमेवोक्तानि। इदानीमुक्तबीजस्य 'प्रारंभेऽस्मिन्स्वामिनो' इत्यादिना उक्तस्य यौगंधरायणमुखेन प्रदर्शितस्य सचिवायत्तसिद्धेर्वत्सराजकार्यारंभस्य संबंधात् मुख-

( नेपथ्ये कलकलः । )

**यौगंधरायणः**—(आकर्ण्य ।) अये, मधुरमभिहन्यमानमृदुमृदङ्गानुगतसंगीतमधुरः पुरः पौराणां समुच्चरति चर्चरीध्वनिः । तथा तर्कयामि यदेनं मदनमहमहीयांसं पुरजनप्रमोदमवलोकयितुं प्रासादाभिमुखं प्रस्थितो देव इति । य एष

विश्रान्तविग्रहकथो रतिमाञ्जनस्य
चित्ते वसन्प्रियवसन्तक एव साक्षात् ।

---

संधिरयम् । अत्र प्रारंभेऽस्मिन्निति श्लोकेन यौगंधरायणेन स्वव्यापारदैवयोर्निष्पत्तिरुक्तत्वात् परिन्यासाख्यमंगं । तदुक्तं 'तन्निष्पत्तिः परिन्यासः' इति । नेपथ्ये इति । जवनिकामध्ये कलकलः कोलाहलः भवतीति शेषः । **यौगंधरायणः** । आकर्ण्य आकर्णनाभिनयं कृत्वा स च पार्श्वानतेन शिरसा स्तब्धेन नेत्रेण । अये इति संभ्रमेऽव्ययं । ससंभ्रमं यथा स्यात्तथेत्यर्थः । 'अये क्रोधविषादे च संभ्रमे स्मरणेपि चे'ति मेदिनी । ससंभ्रममग्रिमं वाक्यं पठतीति तात्पर्यं । **मधुरमभिहन्यमानेत्यादि** । अत्र मधुरं इति पदं हित्वा अभिहन्येत्यादिपाठः साधीयान् इति भाति । यथास्थितपाठस्तु व्याख्यायते । मधुरमिति भिन्नं पदं । मधुरं स्वादु यथा स्यात्तथा अभिहन्यमानाः ताड्यमाना ये मृदुमृदङ्गाः कोमलमुरजाः 'मृदू चातीक्ष्णकोमलौ ।', 'मृदङ्गा मुरजा' इति उभयत्राप्यमरः । अत्र मृदङ्गानां मृदुत्वं काष्ठाद्यवयवद्वारा, तैरनुगतं अनुयातं यत्संगीतकं गानं 'गीतं गानमुभे समे' इति कोशः । तेन मधुरः स्वादुः 'स्वादुप्रियौ तु मधुरौ' इति कोशः । पौराणां पुरे भवाः पौराः नागरिकाः तेषां चर्चरीध्वनिः चर्चरी वाद्यविशेष इति केचित्, गीतभेद इत्यन्ये, अनेकशब्दानां मिश्रीभवनमित्यपरे, हर्षक्रीडा इतीतरे, करशब्द इति परे । संभवति चेदं गेयमध्ये (ताल इति लोके) । गेये हि मृदङ्गवादनतालपदवाच्यकराघातशब्दानुकूल्यं लोके प्रसिद्धं । तस्या ध्वनिः अनुरणनवत्पश्चाद्भवः अव्यक्तशब्दः, पुरः अग्रे समुच्चरति उत्पद्यत इत्यर्थः । अत एवाकर्मकत्वेन 'उदश्चरः सकर्मकात्' इत्यस्य नायं विषयः । **तथेति** पूर्वोक्तप्रकारेण तर्कयामि अनुमिनोमि । तमेव तर्कमाह—**यदेनमित्यादिना** । एनं इदानीं संनिकृष्टकाले प्रवर्तमानं । अत्र एनादेशश्चिन्त्यः अन्वादेशाभावात् । एतमिति पाठस्तु यत्रकुत्रोपलब्धश्चेत्समीचीनः । मदनस्य कामदेवस्य महः उत्सवः 'महस्तूत्सवतेजसोः' इति कोशः । तेन महीयांसं महत्तरं महच्छब्दादीयसुन् टेरिति टिलोपः । पुरजनप्रमोदं नागरिकजनहर्षं अवलोकयितुं द्रष्टुं, प्रासादाभिमुखं प्रासादस्य राजमंदिरस्य संमुखं प्रस्थितः कृतप्रस्थानारंभः । आदिकर्मणि क्तः । **देवः** भर्ता । उक्तं च 'देवेति नृपतिर्वाच्यो भृत्यैः प्रकृतिभिस्तथा' इति । अस्मिन् गद्ये अनुप्रासालंकारः । तदुक्तं 'वर्णसाम्यमनुप्रासः' इति । य एष इति पदद्वयं श्लोकस्थवत्सेश्वर इत्यस्य विशेषणीभूतं, विश्रांतिविग्रहेत्यादिविशेषणानि वत्सेश्वरस्य कुसुमचापस्य च ज्ञेयानि । विश्रांताः उपरताः विग्रहस्य युद्धस्य कथाः गोष्ठ्यः यस्य एतादृशो वत्सेश्वरः

पर्युत्सुको निजमहोत्सवदर्शनाय

वत्सेश्वरः कुसुमचाप इवाभ्युपैति ॥ ८ ॥

(ऊर्ध्वमवलोक्य ।) अये, कथमधिरूढ एव देवः प्रासादम् । तद्यावद्गृहं गत्वा कार्यशेषं चिन्तयामि । (इति निष्क्रान्तः ।)

इति विष्कम्भकः ।

---

शत्रोरभावात् । पक्षे विश्रांता विग्रहस्य शरीरस्य कथा यस्य अनंगत्वात् । कुसुमचापः । 'अथ विग्रहः । संग्रामे प्रविभागे च देहविस्तारयोरपि' इति त्रिकांडशेषः । रतिः प्रजाविषयप्रेमा साऽस्यास्तीति तथा । कामपक्षे रतिः तत्प्रिया तद्वान् 'तदस्यास्त्यस्मिन्निति मतुप्' मादुपधत्वाभावाद्वत्वाभावः । जनस्य प्रजायाः चित्ते अंतःकरणे वसन्, उत्तमरक्षकत्ववात्सल्यादिगुणयोगादिति भावः । कामस्तु जनस्य लोकस्य चित्ते वसन्नेव मनसिजत्वादिति भावः । वसन्नित्यत्र लडित्यनुवर्तमाने पुनर्लड्ग्रहणसामर्थ्यात् प्रथमासामानाधिकरण्येऽपि शत्रादेशः । प्रियः वसंतकः नर्मामात्यो विदूषको यस्य एतादृशो वत्सराजः । कामपक्षे वसंतः । वसंत ऋतुरित्यर्थः । 'वसंते पुष्पसमयः' इति कोशः । प्रियः वसंतो यस्य 'शेषाद्विभाषा' इति कप् । पर्युत्सुकजनोत्कंठावृद्धिकरणेन वसंतप्रियत्वं मदनस्य, विभावत्वाच्च शृंगारानुकूल्यद्वारा वसंतप्रियत्वं कामस्य । निजः आत्मीयः 'स्वके नित्ये निजं त्रिषु' इति कोशः । यो महोत्सवः महांश्चासावुत्सवश्च महोत्सवः । सन्महदित्यादिना समासः । आन्महदित्यादिनाऽऽत्वं । तस्य दर्शनाय पर्युत्सुकः उत्कंठितः 'क्रियार्थोपपदस्ये'त्यादिना चतुर्थी । दर्शनं विधातुमित्यर्थः । 'इष्टार्थोद्युक्त उत्सुकः' इति कोशः । साक्षात् कुसुमचाप इव कुसुमं चापो यस्य 'धनुश्चापा'वित्यमरः । 'पुष्पधन्वा रतिपति'रिति च । मदन इव साक्षात् प्रत्यक्षं निजमहोत्सवदर्शनाय, निजः आत्मीयः आत्मप्रवर्तित इति यावत् यो महोत्सवः तदवलोकनाय पर्युत्सुकः वत्सेश्वरः अभ्युपैति प्राप्नोति । अत्र वसन् वसन् इति व्यञ्जनसंघस्य साम्याच्छेकानुप्रासोऽलंकारः । विवित्सत्स इति व्यञ्जनसाम्यादनुप्रासश्च । तदुक्तं 'छेकी व्यञ्जनसंघस्य सकृत्साम्यमनेकधा ॥ अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्' इति । श्लेषालंकारः उत्प्रेक्षालंकारश्चेत्यर्थालंकारद्वयं । लक्षणं तु 'नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयाश्रयः' इति । प्रकृते अखंडपदश्लेषः । 'संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना' इति प्रकृते वस्तूत्प्रेक्षा । श्लेषस्य उत्प्रेक्षानिरूपितांगत्वादंगांगिभावः संकरः । वसंततिलकावृत्तम् 'ज्ञेयं वसंततिलकं तभजा जगौ गः' इति लक्षणात् ॥ ८ ॥ ऊर्ध्वं अवलोकनक्रियाया विशेषणमिदं । अवलोक्य कत्व्युक्तिरियं । अये कथं इति च संभ्रमद्योतकमव्ययद्वयं, द्योतकानां समुच्चय इति न्यायात् । 'अये क्रोधविषादयोः । कथं प्रश्ने प्रकारार्थे संभ्रमे संभवेऽपि च' इत्यनेकार्थः । यावत्किंचिद्वर्णयामि तावदागत एवेति संभ्रमः । अधिरूढ इत्यत्र अधिपूर्वकाद्रुहेः 'गत्यर्था-

( ततः प्रविशत्यासनस्थो गृहीतवसन्तोत्सववेषो राजा विदूषकश्च । )

**राजा**—( सहर्षमवलोक्य । ) सखे वसन्तक ।

**विदूषकः**—आणवेदु भवम् ।[1]

**राजा**—

राज्यं निर्जितशत्रु योग्यसचिवे न्यस्तः समस्तो भरः

सम्यक्पालनलालिताः प्रशमिताशेषोपसर्गाः प्रजाः ।

---

१. आज्ञापयतु भवान् ।

---

कर्मके'त्यादिना कर्तरि क्तः । प्रासादमित्यत्र 'कर्मणि द्वितीया' इत्यनेन द्वितीया । तत् तस्मात्कारणात्, यावदित्यवधारणे 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इति कोशः । कार्यशेषं, रत्नावलीप्राप्तिहेतुभूतं यत्कार्यं तस्य योऽवशिष्टभागस्तं चिंतयामि विचारयामि इत्येव मे निश्चितमित्यर्थः । शेष इत्यत्र भावे घञ् । चिंतनं कोलाहले न संभवति अतो गृहगमनमिति भावः । निष्क्रांत इति । निस्पूर्वकात्क्रमे'र्गत्यर्थाकर्मके'-त्यनेन कर्तरि क्तः 'अनुनासिकस्ये'त्यनेनोपधादीर्घः । निष्क्रमणं अत्र जवनिकांतर्ग-मनं । **विष्कंभक इति** । विष्कंभकलक्षणमुक्तं **श्रीकृष्णकविना** । 'वृत्तवर्तिष्यमा-णानां कथांशानां निदर्शकः ॥ संक्षेपार्थस्तु विष्कंभो मध्यपात्रप्रयोजितः ॥ शुद्धः संकीर्णकश्चेति विष्कंभो द्विविधो मतः ॥ एकद्विमध्यपात्रोक्तः शुद्धः स्यात्संस्कृतात्मकः' इति । प्रकृते यौगंधरायणरूपमध्यमपात्रेण प्रयोजितत्वात् शुद्धः । ततः प्रविशति इत्यादि कविवचनं । आसने तिष्ठतीति आसनस्थः 'सुपि स्थः' इत्यनेन कः । गृहीतः वसंतोत्सवस्य वेषः लब्धाभरणरक्तवसनादिरूपः येन तथाभूतः । एतद्विशेषणं विदूष-कस्यापि । **विदूषकलक्षणं** 'नर्मभेदप्रयोगज्ञो हास्यकृन्नायकस्य च ॥ नर्मवादी स वै नर्मसचिवश्च विदूषकः' । **दर्पणेऽपि** 'कुसुमवसंताभिधः कर्मवपुर्वेषभाषाद्यैः ॥ हास्यकरः कलहरतिः विदूषकः स्यात्स्वकर्मज्ञः' इति । 'विकृतांगवचोवेषैर्हास्यकारी विदूषकः' इति **सुधाकरे** । **राजा** । सहर्षमित्यादि कव्युक्तिः । हर्षकारणं तु अग्रिम-श्लोकार्थेन स्पष्टीभविष्यति । अवलोक्येत्यस्य वसंतोत्सवमित्यार्थिकं कर्म । सखे वसंत-केति 'वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः' इत्युक्तत्वाद्विदूषकं प्रति नाम्ना संबुद्धिः । **विदूषकः** । 'विदूषकविटादीनां पाठ्यं तु प्राकृतं भवे'दिति वचनात् अस्य प्राकृतं भाषणं । आज्ञापयतु भवान् इति छाया । **राजा** । राज्यमिति । निर्जिताः निःशेषेण जिताः अभिभूताः शत्रवो रिपवो यस्मिन् । निःसपत्नमित्यर्थः । एवंभूतं राज्यं अस्तीति शेषः । समस्तः निखिलः भरः राज्यसंबंधिसकलव्यवस्थाया भर इत्यर्थः । योग्यस-चिवे । योग्यः प्रवीणः स चासौ सचिवः मंत्री 'योग्यः प्रवीणयोगार्होपायशक्तेषु वाच्य-वत्' इति मेदिनी । तस्मिन् न्यस्तः स्थापितः । प्रजाः जनाः 'प्रजाः स्यात्संततौ जने' इति कोशः । सम्यक् प्रशस्तं तच्च तत्पालनं रक्षणं 'सम्यग्दृढप्रशंसयोः' इति मेदिनी । तेन लालिताः विलासिताः 'लड विलासे' डलयोर्लरयोश्चैकत्वस्मरणाल्ललतीति स्वाम्यादयः ।

प्रद्योतस्य सुता वसन्तसमयस्त्वं चेति नाम्ना धृतिं
कामः काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः ॥ ९ ॥

**विदूषकः**—(सहर्षम् ।) [1]भो वअस्स, एव्वं णेदं । अहं उण जाणामि ण भवदो ण कामदेवस्स मम ज्जेव्व एकस्स बम्हण वडुअस्स अअं मअणमहू-

१. भो वयस्य, एवं नेदम् । अहं पुनर्जानामि न भवतो न कामदेवस्य

अतः ललधातोर्णिजंतात्कर्मणि क्तप्रत्ययः । पुनः किंभूताः प्रजाः । प्रशमिताशेषोपसर्गाः प्रकर्षेण शमिताः नाशिताः अशेषाः समग्राः । शमित इत्यत्र णिजंतात्क्तः 'मितां ह्रस्वः' इति ह्रस्वः । 'विश्वमशेषं कृत्स्नं' इति कोशः । उपसर्गाः उपप्लवा यासां ताः । 'उपसर्गः पुमान्रोगभेदोपप्लवयोरपि' इति मेदिनी । एतादृशाः संतीति शेषः । प्रद्योतस्य मगधेश्वरस्य सुता वासवदत्ता अर्थात् मम पत्नीति योग्यतया गम्यते । वसंतस्य समयः कालः 'समयाः शपथाचारकालसिद्धांतसंविदः' इति कोशः । त्वं च राज्ञो विदूषकं प्रति उक्तेः ममेत्यस्य प्रतिवाक्यं संबंधाच्च मदीयस्त्वमित्यर्थः फलितः । अर्थात् मद्धितकारी त्वं सुहृदित्यर्थः । इति, पूर्वोक्तषड्हेतुभिरित्यर्थः । 'इति हेतुप्रकरणप्रकाशादिसमाप्तिषु' इति कोशः । कामः मदनः नाम्ना मदनमहोत्सव इति नाममात्रेणैव धृतिं तुष्टिं 'धृतिर्नेष्टौ स्त्रियां तुष्टौ' इति मेदिनी । कामं पर्याप्तं 'कामं प्रकामं पर्याप्तं' इति कोशः । उपैतु प्राप्नोतु । उपपूर्वकादिणः प्राप्तकाले लोट् । मदनस्य पूर्वोक्तोत्सवेन संतोषस्य प्राप्तकाल इत्यर्थः । अयं महानुत्सवः मम पुनः अस्तीति मन्ये । पुनःशब्दोऽत्र भेदे 'किंपुनर्ब्राह्मणाः पुण्या' इतिवत् । उत्सवदर्शनेन मदननिष्ठः संतोषो भवतु । महानुत्सवस्तु ममेति भिन्नो विषय इत्यर्थः । 'पुनरप्रथमे भेदे' इति कोशः । अत्र मन्ये इत्यस्य महानुत्सवोऽस्ति इति वाक्यार्थः कर्म । तेन 'पश्य मृगो धावती'त्यादिवत् विशिष्टस्य प्रातिपदिकत्वाभावात् द्वितीयाभावः । मदनमहोत्सव इति निजनाम्ना पूज्यमानत्वात् मदनः धृतिं संतोषं प्राप्नोतु । वस्तुतः पूर्वोक्तषड्हेतुभिः लोभशोकभयादिजनितोपप्लवनिवारणकारणीभूतचित्तवृत्तिविशेषरूपधृतेर्ममैव विद्यमानत्वान्ममैवाऽयं महानुत्सव इति तात्पर्यं । अत्र शक्तितो धृतिः । तदुक्तं 'संतोषो ज्ञानशक्त्यादेर्धृतिरव्यग्रभोगकृत्' इति । अत्र ममैव महानुत्सव इत्यस्य समर्थनापेक्षत्वं तच्च पूर्वोक्तषड्हेतुभिः समर्थनात्काव्यलिङ्गमर्थालङ्कारः । लक्षणमुक्तं । अत्र सचिवादिविहितयोगक्षेमत्वाच्चिंतारहितः । अत एव गीतादिकलाविष्टो भोगप्रवणश्च, शृङ्गारप्रधानत्वाच्च सुकुमारसत्वाचारो मृदुः । अतोऽत्र नेता प्रख्यातो धीरललितः । लक्षणं तु 'निश्चिंतो धीरललितः कलासक्तः सुखैकभूः' इति । शार्दूलविक्रीडितं छंदः । लक्षणं प्रागुक्तं ॥ ९ ॥ **विदूषकः** । सहर्षमिति । हर्षकारणं तु उपरितनविदूषकवाक्येनैव स्पष्टीभविष्यति । भो वयस्य, एवं नेदं । अहं पुनर्जानामि न भवतो न कामदेवस्य ममैवैकस्य ब्राह्मणवटुकस्यायं मदनमहो-

स्सवो जेण पिअवअस्सेण एव्वं मान्तीअदि । (विलोक्य ।) ता किं उण इमिणा । पेक्ख दाव इमस्स महुमत्तकामिणीजणसअंगाहगहिदसिंगकजलप्पहारणच्चंतणाअरजणजणिदकोदूहलस्स समंतदो सुवत्तमद्दलुद्दामचच्चरीसद्दमुहररत्थामुहसोहिणो पइण्णपडवासपुंजपिंजरिज्जंददिसामुहस्स सिरिअं मअणमहूस्सवस्स ।

---

ममैवैकस्य वटुकस्यायं मदनमहोत्सवो येन प्रियवयस्येनैवं मंत्र्यते । तत्किं पुनरनेन । प्रेक्षस्व तावदेतस्य मधुमत्तकामिनीजनस्वयंग्राहगृहीतश्रृङ्गकजलप्रहारनृत्यन्नागरजनजनितकौतूहलस्य समन्ततः सुवृत्तमर्दलोद्दामचर्चरीशब्दसुखरथ्यामुखशोभिनः प्रकीर्णपटवासपुञ्जपिञ्जरीकृतदिशामुखस्य श्रियं मदनमहोत्सवस्य ।

---

त्सवो यस्य कृते प्रियवयस्येनैवं मंत्र्यते । तत्किं पुनरनेन । प्रेक्षस्व तावदेतस्य मधुमत्तकामिनीजनस्वयंग्राहगृहीतश्रृङ्गकजलप्रहारनृत्यन्नागरजनजनितकौतूहलस्य समंततः सुवृत्तमर्दलोद्दामचर्चरीशब्दसुखररथ्यामुखशोभिनः प्रकीर्णपटवासपुंजपिंजरीकृतदिशामुखस्य श्रियं मदनमहोत्सवस्य । इति छाया । भो वयस्येति । 'वयस्य राजन्निति वा भवेद्वाच्यो महीपतिः ॥ विदूषकेण' इति भरते । एवं नेदमिति । इदं त्वदुक्तं एवं त्वदभिप्रेतार्थकं नेत्यर्थः । स्वाभिप्रायं प्रकटयति । अहं पुनरित्यादि । अत्रापि पुनःशब्दो भेदे एव, त्वदभिप्रायान्मदभिप्रायो भिन्न इत्यर्थः । एकस्य मुख्यस्य 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा' । स्वस्य मुख्यत्वं तु स्वाभिमतत्वेनैव, अथवा एकस्य केवलस्य ब्राह्मणश्चासौ वटुश्च ब्राह्मणवटुः । कडारादित्वाद्ब्राह्मणशब्दस्य पूर्वनिपातः । वटुशब्दो ब्रह्मचारिवाची 'ब्रह्मचारी वटुः समौ' इति त्रिकांडशेषात् । तथापि सदृशलक्षणया प्रकृते वटुशब्देन क्षुद्रो गृह्यते । क्षुद्रब्राह्मण इत्यर्थः । अनुकंपितः ब्राह्मणवटुः ब्राह्मणवटुकः । 'अनुकंपायां' इति कन् । राज्ञः प्रीतिविषयत्वादेतस्याऽनुकंपाविषयत्वं । ब्राह्मणस्येति पाठस्तु साधीयान् । यस्य कृते यस्य कारणाय । कृधातोः संपदादित्वाद्भावे क्विप् । 'काव्यं यशसेऽर्थकृते' इति श्लोकस्थटीकायां काव्यप्रकाशे स्पष्टमिदं । एवं त्वं मम सखा इत्यभिप्रायकवसंतसमयस्त्वं चेत्यत्रोक्तप्रकारेण । मंत्र्यते भाष्यते । मत्रि गुप्तपरिभाषणे इत्युक्तावपि अत्र केवलभाषणार्थो मंत्रधातुः । मन्यते इति पाठः श्रेयान् । विलोक्य इति मदनमहोत्सवमिति शेषः । अनेन कस्योत्सव इति विचारेण । किं, किं प्रयोजनमित्यर्थः । गम्यमानक्रियानिमित्ता तृतीया । प्रेक्षस्व, मदनमहोत्सवस्य श्रियं प्रेक्षस्वेत्यन्वयः । मदनमहोत्सवस्य त्रीणि विशेषणानि । मधुमत्तेत्यादि । मधुना मद्येन 'मधु मद्ये पुष्परसे' इति कोशः । मत्तः क्षीवः यः कामिनीनां कामोऽस्ति यासां तासां 'अत इनिठनौ' इति इनिः 'ऋन्नेभ्यो ङीप्' इति ङीप् । जनः लोकः 'जनो लोके' इति मेदिनी । तस्य यः स्वयंग्राहः, पुरुषाणां हस्तग्रहणं आलिंगनं वा 'ग्रहे ग्राहः' इत्यमरः । ग्राह इत्यत्र निवृत्तप्रेषणाण्णिजं-

**राजा**—(सहर्षं समन्तादवलोक्य ।) अहो, परां कोटिमधिरोहति प्रमोदः पौराणाम् । तथा हि ।

कीर्णैः पिष्टातकौघैः कृतदिवसमुखैः कुङ्कुमक्षोदगौरै-
र्हेमालंकारभाभिर्भरनमितशिरःशेखरैः कैङ्किरातैः ।

ताद्वहेर्भावे 'एरजि'ति अच् । जनस्येत्यत्र कर्तरि षष्ठी । मधुमत्तत्वेन लज्जाया अभावात् कामिनीजनकर्तृकस्वयंग्रहणमिति यावत् । तेन हेतुना अर्थादसुलभस्वयंग्रहणजनितानंदातिरेकेण गृहीतानि यानि शृङ्गाण्येव शृङ्गकाणि, क्रीडाजलयंत्राणि 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडांबुयंत्रके' इति मेदिनी । तत्संबंधिनो ये जलस्य प्रहाराः ताडनानि तैर्हेतुभिः नृत्यंतः ये नागराः नगरसंबंधिजनाः तैर्जनितं उत्पादितं कौतूहलं यस्मिन् तस्य । पुनः कथंभूतस्य । समंततः परितः सुवृत्तं वर्तुलं येषां ते सुवृत्ताः 'वृत्तोऽधीतेऽप्यतीतेऽतिवर्तुलेऽपि' इति मेदिनी । तथाभूता ये मर्दलाः मृदङ्गसदृशवाद्यविशेषाः (तबला इति भाषायां) तेषां, उद्दामायाः बन्धरहितायाः यथेष्टं प्रवर्तिताया इति यावत् 'उद्दामो बन्धरहिते' इति मेदिनी । चर्चर्याश्च गीतविशेषस्य च 'चर्चरी गीतभेदे च' इति कोशांतरं । यः शब्दः ध्वनिः 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इति कोशः । तेन मुखरं अनर्गलमुखं शब्दायमानमिति यावत् 'दुर्मुखे मुखरावद्धमुखौ' इति कोशः । 'खमुखकुंजेभ्य' इति रप्रत्ययः । यत् रथ्यायाः ग्रामाभ्यंतरमार्गस्य 'तद्वहतीति' यत् । मुखं तेन पुनः पुनः अतिशयेन वा शोभते इति तस्य । 'बहुलमाभीक्ष्ण्ये' इति णिनिः । पुनः कथंभूतस्य । प्रकीर्णः विक्षिप्तः । कृ विक्षेपे कर्मणि क्तः । यः पटवासः पिष्टातः (बुका इति भाषायां) 'पिष्टातः पटवासकः' तस्य पुंजैः समूहैः पिंजरीकृतानि पीतीकृतानि 'पिंजरोऽश्वांतरे पीते' 'अभूततद्भावे च्विः,' कुगतीति समासः । दिशां मुखानि आननानि यस्मिन् एतादृशस्य मदनस्य कामदेवस्य महोत्सवस्य महतः उत्सावस्य 'सन्महदिति' समासः, आन्महदित्यात्वं । श्रियं शोभां । अस्मिन्नुत्सवे मदनमूर्तेः पूजाः जलक्रीडा वनक्रीडा नृत्यगीतवाद्यप्रचुराः माल्यादिधारणानि क्रियंते इति । अत्र वर्णसाम्यादनुप्रासः शब्दालङ्कारः । लक्षणं तूक्तं । **राजा** । अत्र सहर्षमित्यादि अवलोक्येत्यंता अभिनयबोधिका कवेरुक्तिः । उत्सवपराकाष्ठादर्शनेन च राज्ञो हर्षः तदेवाह अहो इत्यादि । अहो इति आश्चर्ये 'अहो ही च विस्मये' इत्यमरः । परां श्रेष्ठां कोटिं अत्युत्कर्षं 'अत्युत्कर्षाश्रयः कोट्यो' इत्यमरः । अधिरोहति प्राप्नोति । प्रमोदः संमदः 'प्रमोदामोदसंमदाः' इत्यमरः । पौराणां पुरे भवाः पौराः तेषां 'तत्र भव' इत्यण् तथा हि इति अव्ययं निदर्शनेऽर्थे । उक्तार्थप्रतिपादने इति यावत् । यथा **गणरत्नावलीविवृतौ** 'दुर्गुणाद्भवति त्याज्यो विशिष्टगुणवानपि । तथाहि लशुनो गंधादुग्रात्सद्भिर्न गृह्यते' इति । **कीर्णैरिति** । एषा कौशांबी, शातकुंभद्रवखचितजनेव । शातकुंभे पर्वतविशेषे भवं शातकुंभं सुवर्णं 'तपनीयं शातकुंभं' इत्यमरः । तस्य द्रवो रसः 'द्रवः प्राद्रवनर्मणोः । रसेऽपि' इति मेदिनी । तेन खचिता व्याप्ताः जनाः

एषा वेषाभिलक्ष्यस्वविभवविजिताशेषवित्तेशकोशा
कौशाम्बी शातकुम्भद्रवखचितजनैवैकपीता विभाति ॥ १० ॥

अपि च।

धारायन्त्रविमुक्तसंततपयःपूरप्लुते सर्वतः
सद्यः सान्द्रविमर्दकर्दमकृतक्रीडे क्षणं प्राङ्गणे।

यस्यां सा इव। एकपीता, एकः प्रधानः पीतवर्णो यस्यां सा 'एकोऽन्यार्थे प्रधाने च' इत्यभिधानं। सर्वपीतेति यावत्। विभाति विशेषेण शोभते। शातकुंभद्रवखचितत्वभानप्रतिपादकहेतूनाह—कीर्णैरित्यादिना। कीर्णैः विक्षिप्तैः कुंकुमक्षोदगौरैः कुंकुमस्य घुसृणस्य 'कुंकुमं पीतकावेरं घुसृणं' इति हारावली। क्षोदः चूर्ण 'चूर्णे क्षोद' इति कोशः। तेन गौरैः अरुणैः 'गौरोऽरुणे' इत्यमरः। अत एव कृतदिवसमुखैः दिवसस्य मुखं आरंभः प्रत्यूषः 'प्रत्यूषोऽहर्मुखं' इत्यमरः। कृतं संपादितं दिवसमुखं यैः। प्रत्यूषो हि संध्यया अरुणो भवति तद्वत्सर्वदा अरुणवर्णपिष्टातकव्याप्त्या दिवसमुखत्वमिति भावः। एतादृशैः पिष्टातकौघैः पिष्टातकानां पटवासानां ओघैः समूहैः पुंजैरिति यावत्। 'स्तोमौघनिकरव्राते'त्यमरः। 'हेतौ' इति हेत्वर्थे तृतीया। एवमग्रेऽपि ज्ञेयं। हेमालङ्कारभाभिः। हेम्नः सुवर्णस्य ये अलङ्काराः कटकादयः तेषां भाभिः दीप्तिभिः। भरनमितशिरःशेखरैः। भरेण भारेण प्रयोजककर्त्रा अर्थात् पुष्पाणामिति लभ्यते। नमितानि नम्रीकृतानि 'णमुधातोर्णिजंतात्' कर्मणि क्तः "मितां ह्रस्वः" इति ह्रस्वत्वं "निष्ठायां सेटीति" णिलोपः। तानि च तानि शिरांसि च तेषां शेखरैः आपीडैः 'शिखास्वापीडशेखरा'वित्यमरः। एतादृशैः कैंकिरातैः किंकिरातानां अशोकानां विकाराः तैः 'तस्य विकारः' इति विकारार्थेऽण् स च योग्यतया पुष्परूपविकारे एव। एतेन स्त्रीणां अशोकपुष्पमाल्यभारधारित्वमुक्तं। कथंभूता कौशांबी, वेषेण तत्कालोचितवस्त्रालङ्कारादिधारणेन अर्थात् नगरीस्थस्त्रीपुंसानामित्यर्थः। अभिलक्ष्यः ज्ञातुं शक्यः यः स्वस्य विभवः धनं 'विभवो निर्वृतौ धने' इति विश्वः। तेन विजितः पराभावितः अशेषः संपूर्णः वित्तेशस्य राजराजस्य 'राजराजो धनाधिपः' इति कोशः। कोशः अर्थौघः यया। 'कोशोऽस्त्री कुड्मले खड्गपिधानेर्थौघदिव्ययोः' इति कोशः। अत्र नगरीसमृद्धेः वर्णनात् उदात्तालंकारः। तदुक्तं 'उदात्तमृद्धेश्वरितं' इति। पिष्टातौघादिव्यापनेन शातकुंभद्रवखचितत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा। सा च इवशब्दवाच्या। तदुक्तं 'मन्ये शंके ध्रुवं प्रायो नूनमित्येवमादिभिः॥ उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोपि तादृशः' इति। स्रग्धरावृत्तं लक्षणं तूक्तं ॥ १० ॥

अपि चेति। अन्यदपीत्यर्थः। अपिः समुच्चये 'गर्हासमुच्चयप्रश्नशंकासंभावनास्वपि' इत्यमरः। **धारेत्यादि**। सर्वतः विष्वक् 'सर्वतो विष्वगित्यपि' इत्यमरः। जनेन अर्थान्नागरेण क्षणं अल्पकालं 'कालाध्वनोरत्यंतसंयोगे' इति द्वितीया। धाराणां यंत्राणि पूर्वोक्तानि शृङ्गकाणि तैः करणैः विमुक्तः उज्झितः अत एव संततः निरंतरः यः पयःपूरः जलप्रवाहः। जलप्रवाहो हि अविच्छिन्न एव धारारूपेण पततीति

उद्दामप्रमदाकपोलनिपतत्सिन्दूररागारुणैः
सैन्दूरीक्रियते जनेन चरणन्यासैः पुरः कुट्टिमम् ॥ ११ ॥

विदूषकः—(विलोक्य।) एवं पि सुविअद्धजणजलभरिदसिंगकजलप्पहारमुक्कसिक्कारमणोहरं वारविलासिणीजणविलसिदं आलोएदु पिअवअस्सो।

१. एतदपि सुविदग्धजनजलभरितशृङ्गकजलप्रहारमुक्तसीत्कारमनोहरं वारविलासिनीजनविलसितमालोकयतु प्रियवयस्यः।

सुप्रसिद्धं। तेन प्लुते प्रप्लुते आर्द्रे इति यावत्। पूरप्लुते इति पाठे पूरेण प्लुते व्याप्ते, सद्यः तत्क्षणे पूरप्लुतिक्षणे इत्यर्थः। 'सद्यः सपदि तत्क्षणे' इति कोशः। सांद्रो निबिडो यो विमर्दः पूर्वोक्तकुंकुमक्षोदादिमर्दनं तेन यः कर्दमः तस्मिन् कृता क्रीडा यस्मिन् तत्। एतादृशे प्रांगणे प्रकृष्टे अंगणे 'अंगणं चत्वराजिरे' इत्यमरः। उद्दाम्नां अप्रतिबद्धानां यथेच्छं क्रीडंतीनामित्यर्थः। प्रमदानां कपोलेभ्यः गंडेभ्यः निपतन् गलन् 'सुप्सुपे'ति समासः। सिंदूरस्य यो रागः रक्तिमा 'रागस्तु मात्सर्ये लोहितादिषु' इति मेदिनी। तेन अरुणाः अव्यक्तरागाः 'अव्यक्तरागस्त्वरुणः' इति कोशः। तैः चरणन्यासैः। चरणानां न्यासाः विक्षेपाः तैः पुरः अग्रे प्रासादाग्रभागे इति यावत्। कुट्टिमं बद्धभूमिः (पापडी इति भाषायां) अनेन लोकेन सैंदूरीक्रियते। सिंदूरेण व्याप्ता सैंदूरी। शेषेऽर्थे अण्। सिंदूरमयं क्रियते इत्यर्थः। 'अभूततद्भावे' इत्यादिना च्विः। अत्र सैंदूरीकरणस्य समर्थनापेक्षत्वात्तस्य च उद्दामप्रमदेत्यादिना समर्थनात् काव्यलिङ्गमलङ्कारः। लक्षणं तूक्तं। वर्णसाम्यादनुप्रासः शब्दालङ्कारश्च। शार्दूलविक्रीडितं छंदः ॥ ११ ॥ विदूषकः। विलोक्येत्यस्य आहेति शेषः। तेन क्त्वाप्रत्ययोपपत्तिः। एवं एवंविधेऽन्यस्थलेऽप्यूह्यं। कव्युक्तिरियं। एतदपि सुविदग्धजनजलभरितशृङ्गकजलप्रहारमुक्तसीत्कारमनोहरं वारविलासिनीजनविलसितमालोकयतु प्रियवयस्यः। इति च्छाया। सुविदग्धेत्यादि। सुविदग्धाः सुतरां विद्वांसः क्रीडाविषये इत्यार्थिकं 'छेको विदग्ध' इत्यभिधानं। ये जनाः तेषां कर्तॄणां ये जलभरितशृङ्गकजलप्रहाराः। जलेन भरिताः, भरणं भरः 'ऋदोरप्' स संजातः एषां 'तदस्य संजातं तारकादिभ्य इतच्' इति इतच्। जलपूर्णा इत्यर्थः। एतादृशो ये शृङ्गकाः तैः करणैः ये जलप्रहाराः जलताडनानि तैः हेतुभिः मुक्ताः उत्सृष्टाः ये सीत्काराः सीत् इति शब्दाः भयपीडादिभ्यो मुखाद्यो ध्वनिर्निर्गच्छति तस्य सीदित्यनुकरणं तस्य ये काराः उच्चारणानि 'कर्मण्याक्रोशे कृञः खमुञ्' इत्यत्रैव करोतिरुच्चारणार्थः। भावे घञ्। तैर्मनोहरं मनोज्ञं। विलसंति क्रीडंति तच्छीलाः विलासिन्यः 'सुप्यजातावि'ति णिनिः। वारस्य समूहस्य 'वारसंघातसंचयाः' इत्यमरः। विलासिन्यः गणिकाः। सर्वसामान्या इत्यर्थः, तासां यो जनः तस्य विलसितं क्रीडनं आलोकयतु पश्यतु प्रार्थनायां लोट्। प्रियश्चासौ वयस्यश्च प्रियवयस्यः। जलताडनजन्यसीत्कारादिकायिकशृंगारभावाः कामिजनचित्ताऽऽकर्षण-

**राजा**—( विलोक्य । ) वयस्य, सम्यग्दृष्टं भवता । कुतः ।

अस्मिन्प्रकीर्णपटवासकृतान्धकारे
दृष्टो मनाङ्मणिविभूषणरश्मिजालैः ।
पातालमुद्यतफणाकृतिशृङ्गकोऽयं
मामद्य संस्मरयतीव भुजङ्गलोकः ॥ १२ ॥

**विदूषकः**—( विलोक्य । ) भो वअस्स; पेक्ख पेक्ख । एसा खु

१ भो वयस्य, प्रेक्षस्व प्रेक्षस्व । एषा खलु मदनिका मदनवशविसंष्ठुलं

समर्थाः, त्वमपि विलासचतुरस्तदिदं पश्येति प्रियवयस्येत्यनेन ध्वनितं । **इदानीं अस्य मदनमहोत्सवस्य होलिकोत्सवे एव किंचिदंशेन अंतर्भाव इति भाति ।** तत्र हि एतादृशो वारस्त्रीविलासो बहुषु देशेषु प्रायेण दृश्यते । **राजा ।** विलोक्येति, क्त्वाप्रत्ययोपपत्तिः पूर्ववत् ज्ञेया । सम्यग्दृष्टं भवता, भवतेत्यत्र कर्तरि षष्ठी न भवति 'न लोकाव्यये'ति निषेधात् किंतु 'कर्तृकरणे' इति कर्तरि तृतीया । कुतः इति सम्यग्दर्शनं कथमिति प्रश्नः । तदेवोत्तरत्वेन प्रतिपादयति—**अस्मिन्नित्यादि ।** अस्मिन्मदनमहोत्सवे प्रकीर्णः सर्वत्र विक्षिप्तः पटवासः पिष्टातः । पटं वासयतीति तथा । एवं व्युत्पत्तिः **व्याख्यासुधायां ।** वास उपसेवायामिति चुरादेः कर्मण्यण् । उपसर्गार्थोऽत्र सुगंधोत्पादनं, धातूनामनेकार्थत्वादिति तदाशयो भाति । तेन कृतः स चासौ अंधकारश्च तस्मिन् । धूलिपटलेनेव अतिप्रभूतविक्षिप्तपिष्टातपटलेन सूर्यकिरणव्यवधानात् अंधकारोऽत्र वर्णितः । एतेन 'परां कोटिमधिरोहति प्रमोदः पौराणां' इति यदुक्तं तत्समर्थितं भवति । मणीनां रत्नानां विभूषणानि अलंकाराः तेषां रश्मिजालैः किरणसमूहैः 'किरणप्रग्रहौ रश्मी' 'जालं समूहः' इत्युभयत्राप्यमरः । मनाक् ईषत् 'किंचिदीषन्मनागल्पे' इति कोशः । दृष्टः अवलोकितः, उद्यतफणाकृतिशृंगकः उद्यता ऊर्ध्वीकृताः फणा इव आकृतिः आकारो येषां ते 'आकारावेंगिताकृती' । तथाभूता शृंगका येन । अयं संनिकृष्टः 'इदमस्तु संनिकृष्टं' । भुजंगलोकः भुजेन कौटिल्येन गच्छंतीति भुजंगाः विटाः । भुजो कौटिल्ये घञर्थे कविधानमिति भावे कः 'गमेः सुपि' 'खच डिद्वा' आभ्यां खचि डित्त्वे च टिलोपः । तेषां लोकः जनः 'भुजंगोऽहौ च षिङ्गे च' इति मेदिनी । सर्पपक्षे । फणाकृतयः फणानामाकाराः शृंगका इव फणाकृतिशृंगकाः । व्याघ्रादेराकृतिगणत्वात् 'उपमितं व्याघ्रादिभि'-रिति समासः । उद्यता ऊर्ध्वीकृताः फणाकृतिशृंगका येन । भुजंगलोकः सर्पलोकः । मां पातालं अधोभुवनं 'अधोभुवनपातालं' इति कोशः । संस्मरयतीव, अभिज्ञपयतीव । स्मृ आध्याने इति घटादौ पाठात् मित्त्वेन 'मितां ह्रस्वः' इति ह्रस्वः । 'गतिबुद्धी'ति सूत्रेण स्मरणरूपज्ञानार्थकस्मृधातोरण्यंतावस्थायामस्मदर्थस्य कर्तुः ण्यंते कर्मत्वम् । अंधतमसरत्नकान्त्युन्नमितफणाशृंगकसाम्यात् पातालस्मरणं, तेन च स्मृतिमदलंकारः । उक्तं च 'स्यात्स्मृतिभ्रांतिसंदेहैस्तदंकालंकृतित्रयं' इति । श्लेषालंकारोऽप्यत्र । लक्षणमुक्तं । वसंततिलकावृत्तं । लक्षणमभिहितं ॥ १२ ॥ **विदूषकः ।** भो

मअणिआ मअणवसविसंठुलं वसंताभिणअं णच्चंती चूदलदिआए सह इदो जेव्व आअच्छदि त्ति अवलोएदु पिअवअस्सो ।

(ततः प्रविशतो मदनलीलां नाटयन्त्यौ द्विपदीखण्डं गायन्त्यौ चेट्यौ ।)

मदनिका—(गायति ।)

कुसुमाउहपिअदूअओ मउलीकिदबहुचूदओ ।
सिढिलिअमाणग्गहणओ वाअदि दाहिणपवणओ ॥ १३ ॥

---

वसन्ताभिनयं नृत्यन्ती चूतलतिकया सहेतएवागच्छतीत्यवलोकयतु प्रियवयस्यः ।

१. कुसुमायुधप्रियदूतको मुकुलीकृतबहुचूतकः ।
शिथिलितमानग्रहणको वाति दक्षिणपवनकः ॥ १३ ॥

---

वयस्य, प्रेक्षस्व प्रेक्षस्व । एषा खलु मदनिका मदनवशविसंष्ठुलं वसंताभिनयं नृत्यंती चूतलतिकया सहेतएवागच्छतीत्यवलोकयतु प्रियवयस्यः । इति च्छाया । प्रेक्षस्व प्रेक्षस्व इति संभ्रमे द्विरुक्तिः सा च न्यायसिद्धा । यथा सर्प सर्प, बुध्यस्व बुध्यस्व इति । मदनिका एतन्नामिका चेटी मदनस्य कामस्य वशेन आयत्तत्वेन, कामाधीनत्वेनेति यावत् । 'वशावंध्यासुतायोषास्त्रीगवीकरणीषु च ॥ त्रिष्वायत्ते क्लीवमायत्तत्वे चेच्छाप्रभुत्वयोः' इति मेदिनी । विसंष्ठुलं व्याकुलं । मदनपरवशमित्येव पाठः शोभनः । मदनस्य परवशमधीनं एतादृशं । वसंतस्य अभिनयः 'व्यंजकाभिनयौ समौ' यस्मिन्यथा स्यात्तथा, नृत्यंती गात्रविक्षेपं कुर्वती । मदनाधीनत्वेन वसंताभिनयप्रदर्शकगात्रविक्षेपं कुर्वतीत्यर्थः । चूतलतिकया एतन्नाम्न्या चेट्या सह 'सहयुक्तेऽप्रधाने' इति तृतीया । इतः । 'इतराभ्योऽपि दृश्यंते' इत्यनेन इदं शब्दात्सप्तम्यंतात्तसिल् । 'इदम इश्' इति इशादेशः । अत्रैवेत्यर्थः । आगच्छतीत्यवलोकयतु । अत्रापि पूर्ववदेव लोट् । मदनिकाकर्तृकाऽगमनं अवलोकने कर्म । **मदनिका ।** गायति कै गै शब्दे इति धातुः । कुसुमायुधप्रियदूतको मुकुलीकृतबहुचूतकः । शिथिलितमानग्रहणको वाति दक्षिणपवनकः ॥ विकसितवकुलाशोककः उत्कंठितप्रियमेलकः । प्रतिपालनासमर्थकस्ताम्यति युवतीसार्थकः । इति च्छाया । दक्षिणपवनकः वातीत्यन्वयः । दक्षिणः दक्षिणदिगुद्भूतः 'दक्षिणो दक्षिणोद्भूतसरलच्छंदवर्तिषु' इति मेदिनी । स चासौ पवनकः । अल्पेऽर्थे कः । अनेन सुगंधमंदत्वं सूचितं । कथंभूतः । कुसुमायुधस्य मदनस्य प्रियश्चासौ दूतकश्च दूतकइत्यत्र अनुकंपायां कन् । प्रियशब्दकन्प्रत्ययाभ्यां मदनप्रसादभाजनत्वं सूचितं । तेन च मदनस्य अतीवसहकारित्वं ध्वन्यते । मुकुलीति । अतिशयिता मुकुला एषु ते मुकुलिनः कुड्मलिनः 'कुड्मलो मुकुलोऽस्त्रियां' इति कोशः । 'भूमनिंदे'त्यादिना अतिशयेऽर्थे 'अत इनिठनौ' इति इनिप्रत्ययः । अमुकुलिनोऽपि तादृशाः कृताः इति अभूततद्भावे च्विः ।

विअसिअवउलासोअओ उक्कंठिअपिअमेलओ।
पडिवालणअसमत्थओ तम्मइ जुवईसत्थओ ॥ १४ ॥

१. विकसितबकुलाशोकक उत्कण्ठितप्रियमेलकः।
प्रतिपालनासमर्थकस्ताम्यति युवतीसार्थकः ॥ १४ ॥

'च्वौ चे'ति दीर्घः। 'कुगती'ति समासः। मुकुलीकृता वहवः चूता आम्राः येन। शैषिकः कप्। दक्षिणवायुसंबंधेन हि आम्राणां कलिकोत्पत्तिरिति प्रसिद्धं। शिथिलितं स्रस्तं न्यूनीकृतमिति यावत्। मानस्य नायकविषये प्रणयाभिमानस्य ग्रहणं स्वीकरणं येन। शैषिकः कप्। वसंततौं दक्षिणदिगुद्भूतवायोः मदनोद्दीपकत्वेन कामिन्यः मानं त्यजंतीत्यर्थः। अनेन च उद्दीपनविभाववर्णनं, लक्षणं तूक्तं ॥ १३ ॥

**विकसितेत्यादि**। विकसिताः पुष्पिताः 'फुल्लश्चैते विकसिते' बकुलाश्च अशोकाश्च येन सः। 'शेषाद्विभाषा' इति कप्। उत्कंठा संजाता येषां ते उत्कंठिताः 'तदस्य संजातं तारकादिभ्य इतच्' अनेन तारकादित्वादितच्। 'उत्कंठोत्कलिके समे'। ते च ते प्रियाः नायका तेषां मेलकः संगमयिता मिल संगमे कर्तरि ण्वुल्, शेषषष्ठ्या समासः 'तृजकाभ्यामि'ति निषेधस्तु कर्तृषष्ठ्या इति सिद्धांतः। वसंतसंबंधिदक्षिणानिलः कामोद्दीपकः। अतस्तस्मिन्वाति सति उत्कंठया पथिकाः गृहे आयांतीति तात्पर्यम्। प्रतिपालने प्रतीक्षायां अर्थात्प्रोषितनायकानामित्यर्थः। पालधातुरत्र प्रतीक्षायां। तथा च वेणीसंहारे भीमसेनं प्रति सहदेवोक्तिः 'अत्रोपविश्यार्यः पालयतु कृष्णागमनं' इति। असमर्थाः अनीश्वरा येन। 'सप्तमी विशेषणे'इति ज्ञापकात् व्यधिकरणपदो वहुव्रीहिः। तादृशवायुस्पर्शेन विरहोत्कंठितस्त्रीणां प्राणधारणं दुःशकं भवतीति तात्पर्यं। अत एव युवतीसार्थकः। अर्थेन प्रयोजनेन पतिसमागमरूपेण सहिताः सार्थाः 'तेन सहेति तुल्ययोगे' इति वहुव्रीहिः। 'वोपसर्जनस्ये'ति सहस्य सादेशः। तादृशीः करोतीति सार्थकः। सार्थशब्दात् 'तत्करोती'ति णिजंतात् ण्वुल्। युवतीनां तरुणीनां 'तरुणी युवतिः समे' इत्यमरः। सार्थकः पतिसमागमरूपप्रयोजनकारीति यावत्। अथवा युवतीः सार्थयतीति युवतीशब्दे उपपदे सार्थशब्दप्रकृतिकप्रातिपदिकणिजंतात् कर्मण्यण्। उपपदसमासः। स्वार्थे कश्च। उत्कंठितेति विशेषणोक्तार्थ एव भंग्यंतरेणाऽत्र प्रतिपादितो वेदितव्यः। ताम्यति, तमधातुरंतर्भावितण्यर्थः। ग्लपयतीत्यर्थः। वसंते मलयानिलेन ग्लपनं विरहोत्सुकानां भवतीति प्रसिद्धं। अतस्तादृशकर्मणः प्रसिद्धेरकर्मकत्वं। देवो वर्षति इति यथा। उक्तं च 'प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया' इति। **यद्वा** युवतीनां तरुणीनां सार्थः समूहः 'संघसार्थौ तु जंतुभिः' इति कोशः। कप्रत्ययः स्वार्थे। ताम्यति ग्लायति। तमु ग्लानौ श्यनि 'शमामष्टानामि'ति दीर्घः। पूर्वश्लोकोक्तदक्षिणवायुः ग्लानेर्हेतुः। कथंभूतो युवतीसमूहः। विकसिताः पुष्पिताः वकुला अशोकाश्च येन 'शेषाद्विभाषा' इति कप्। बकुलाशोकविकासे स्त्रीणां हेतुत्वं च मदिरागण्डूषसेकपादताडनद्वारा। तथा हि **कविवर्णनसंप्रदाये**–'स्त्रीणां स्पर्शात्प्रियं-

अहवा[1]

इह पढमं महुमासो जणस्स हिअआइं कुणइ मिउलाइं।
पच्चाविद्धइ कामो लद्धप्पसरेहिं कुसुमबाणेहिं॥ १५॥

राजा—(निर्वर्ण्य।) अहो, मधुरोऽयमासां निर्भरः क्रीडारसः। तथाहि

---

१ अथवा।
इह प्रथमं मधुमासो जनस्य हृदयानि करोति मृदुलानि।
पश्चाद्विध्यति कामो लब्धप्रसरैः कुसुमबाणैः॥ १५॥

---

गुर्विकसति वकुलः सीधुगंडूषसेकात्पादाघातादशोकस्तिलककुरवकौ वीक्षणालिंगनाभ्यां॥ मंदारो नर्मवाक्यात्पटुमधुहसनाच्चंपको वक्त्रवाताच्चूतो गीतान्नमेरुर्विकसति च पुरोनर्तनात् कर्णिकारः' इति। पुनः कथंभूतः। प्रियाणां मेलकः संगमः 'मेलके संगसंगमौ' इत्यमरः। प्रियसंगमे उत्कंठितः उत्कंठितप्रियमेलकः। सप्तमीति योगविभागात् साधनं कृता वहुलमिति वा समासः। राजदंतादेराकृतिगणत्वात् 'राजदंतादिषु परं' इत्यनेन परनिपातः। प्रतिपालने प्रतीक्षणे अर्थात् प्रोषितनायकानां असमर्थकः अनीश्वरः। सुप्सुपेति समासः स्वार्थे कः। एतादृशः ताम्यति ग्लायति। यद्वेत्याद्युक्तोऽर्थ एव श्रेयान्। पूर्वोक्तार्थस्तु क्लिष्टः। समाप्तपुनरादानदोषग्रस्तश्च॥ १४॥ अथवा इह प्रथमं मधुमासो जनस्य हृदयानि करोति मृदुलानि॥ पश्चाद्विध्यति कामो लब्धप्रसरैः कुसुमवाणैः। इति च्छाया। **अथवेति**। प्रकारांतरद्योतकमिदं प्रकारांतरेण वर्णयामीति यावत्। इहेत्यादि। इह अस्मिन्वसंततौ। मधुश्चासौ मासश्च चैत्रमास इत्यर्थः। 'स्याच्चैत्रे चैत्रिको मधुः' इति कोशः। प्रथमं आदौ। क्रियाविशेषणमिदं 'प्रथमस्तु भवेदादौ' इति मेदिनी। जनस्य लोकस्य हृदयानि अंतःकरणानि मृदुलानि कोमलानि 'कोमलं मृदुलं मृदु' इति कोशः। वसंताविर्भावे तच्छोभावीक्षणेन कामशरभेदार्हाणि भवंति इति तात्पर्यं। पश्चात् हृदयमार्दवकरणानंतरं कामः मदनः। लब्धप्रसरैर्लब्धः प्रसरः शैथिल्यात् प्रवेशावकाशो येषां तादृशैः कुसुमबाणैः, कुसुमान्येव बाणास्तैर्विध्यति अर्थात्तानि पूर्वोक्तहृदयानि, यथा लोके दूतेन सहकारिणा समीपमृगधावनाद्यानुकूल्ये कृते सति पश्चाद्राजा तान् मृगान् विध्यति तद्वत् मधुना दूतेन सकलहृदयमार्दवरूपसहाये कृते मदनो निजवाणैः तानि विध्यति रागोद्दीपनेन व्याकुलयतीति तात्पर्यम्। अत्र बहुवचनेन वाणानां बहुत्वं गम्यते। ते च 'अरविंदमशोकं च चूतं च नवमल्लिका॥ नीलोत्पलं च पंचैते पंचबाणस्य सायकाः' इति। अत्र कुसुमवाणैरिति रूपकं। तदुक्तं 'विषय्यभेदताद्रूप्यरंजनं विषयस्य यत्' इति। तच्चेह प्रथममित्यादि प्रकृतकामवृत्तांतवर्णनेनाप्रकृतराजमृगयावृत्तांतस्य वर्णनस्फूर्त्या समासोक्त्यलंकारस्यांगं। लक्षणं प्रागुक्तम्॥ १५॥ **राजा**। निर्वर्ण्य निरीक्ष्य सूक्ष्मावलोकनं कृत्वेति फलितं। अहो इति आश्चर्ये, आसां स्त्रीणां पुरो दृश्यमानः मधुरः प्रियः 'स्वादुप्रियौ तु मधुरौ'

स्रस्तः स्रग्दामशोभां त्यजति विरचितामाकुलः केशपाशः
क्षीवाया नूपुरौ च द्विगुणतरमिमौ क्रन्दतः पादलग्नौ ।
व्यस्तः कम्पानुबन्धादनवरतमुरो हन्ति हारोऽयमस्याः
क्रीडन्त्याः पीडयेव स्तनभरविनमन्मध्यभङ्गानपेक्षम् ॥ १६ ॥

विदूषकः—[1]भो वअस्स, अहं वि एदाणं वहूपरिजणाणं मज्झे णच्चंतो मअणमहूस्सवं माणइस्सं ।

१. भो वयस्य, अहमप्येतेषां वधूपरिजनानां मध्ये नृत्यन् मदनमहोत्सवं मानयिष्यामि ।

इत्यमरः । क्रीडाया रसः 'गुणे रागे द्रवे रसः' इति कोशः । निर्भरः अतिमात्रः । तथाहीति । एतद्व्याख्यानं पूर्ववज्ज्ञेयम् ॥ स्रस्त इति । क्षीवायाः मत्तायाः वसंतोत्सवकाले मधुसेवनात् कामाविर्भावाच्चेति भावः । 'मत्ते शौंडोत्कटक्षीवाः' इति कोशः । 'अनुपसर्गात्फुल्लक्षीवकृशोल्लाघाः' इति निपातनात्साधुः । आकुलः व्यस्तः उद्दामक्रीडावशाच्छिथिलीभूत इति यावत् 'व्यस्ते त्वप्रगुणाकुलौ' इत्यमरः । अत एव स्रस्तः अधःपतितः 'स्रस्तं ध्वस्तं भ्रष्टं' केशपाशः केशानां पाशः समूहः 'पाशः कचार्थे संघार्थः' इति त्रिकांडशेषः । केशपाशः धम्मिल्लः विशेषेण रचितां कृतां स्रग्दामशोभां । दामेव स्रक्, दामेव विचित्ररचनारचितेत्यर्थः । 'माल्यं मालास्रजौ' इति कोशः । तस्याः या शोभा कांतिः तां त्यजति । तथा इमौ पुरो दृश्यमानौ पादयोर्लग्नौ संवद्धौ नूपुरौ पादभूषणविशेषौ (पैंजण इति भाषायां) 'मंजीरो नूपुरोऽस्त्रियां' इति कोशः । द्विगुणतरं द्वौ गुणौ आवृत्ती यस्य 'गुणो मौर्व्यामप्रधाने रूपादौ सूद इंद्रिये । त्यागशौर्यादिसत्वादिसंध्याद्यावृत्तिरज्जुषु' इति मेदिनी । अतिशयेन द्विगुणं द्विगुणतरं, स्वाभाविकगत्युत्पन्नशब्दापेक्षया प्रमत्तस्वैरपादन्यासात् प्रभूततरमित्यर्थः । क्रंदनक्रियाया विशेषणमिदं । क्रंदतः शिंजाते, यद्यपि क्रंदधातोः शिंजनमर्थो नास्ति, क्रदि आह्वाने रोदने चेत्युक्तत्वात् तथापि योग्यतया धातूनामनेकार्थत्वाच्छिंजनमत्रार्थः । तथा क्रीडंत्याः खेलंत्याः अस्याः पुरोवर्तिन्याः तरुण्याः कंपानुबंधात् कंपस्य अनुबंधः बंधनं संबंध इत्यर्थः । 'अनुबंधस्तु संबंधे स्यात्' इति मेदिनी । क्रीडावशेन इतस्ततोऽङ्गचलनात्कंपसंभवः । कंपानुबंधात् व्यस्तः आकुलः अयं हारः मुक्तावली 'हारो मुक्तावली'त्यमरः । पीडयेव कंपजन्यनिजाकुलत्वपीडयेवेत्यर्थः । श्रेष्ठानां स्वस्थानभ्रंशे हि दुःखं प्रसिद्धं । हेत्वर्थे तृतीया । स्तनयोर्यो भरः तेन विशेषेण नमन् प्रह्वो यो मध्यः अवलग्नं कटिप्रदेश इति यावत् । 'मध्यमं चावलग्नं च मध्ये'इति कोशः । तस्य भंगो नाशः तस्य अनपेक्षा अनवधानं यस्मिन् । हननक्रियाविशेषणमिदं, उरः वक्षःस्थलं अनवरतं संततं हंति ताडयति । हन धातोर्योग्यतया ताडनमर्थः । दुंदुभिं हंति इतिवत् । अत्र अंगचलनेन हारकर्तृकोरस्ताडनस्य पीडाहेतुत्वेनोत्प्रेक्षणात् हेतूत्प्रेक्षालंकारः । स्रग्धरावृत्तं ॥ १६ ॥ विदूषकः । भो वयस्य,

राजा—(सस्मितं ।) वयस्य एवं क्रियताम् ।

विदूषकः—[1]जं भवं आणवेदि (उत्थाय चेट्योर्मध्ये नृत्यति ।) भोदि मअणिए, भोदि चूदलदिए, मं पि एदं चच्चरिअं सिक्खावेध ।

उभे—भो [2]वअस्स हदास, ण हु एसा चच्चरी, द्विपदीखण्डं खु एदं ।

विदूषकः—(सहर्षं ।) [3]किं एदिणा खंडेण मोअआ करिअन्ति ।

मदनिका—(विहस्य ।) [4]णहि णहि । पट्टीअदि खु एदं ।

---

१. यद्भवानाज्ञापयति । भवति मदनिके, भवति चूतलतिके, मामप्येतच्चर्चरिकं शिक्षापयथ ।

२. भो वयस्य हताश, न खलु एषा चर्चरी । द्विपदीखण्डं खलु एतत् ।

३. किमेतेन खण्डेन मोदकाः क्रियंते ।

४. नहि नहि । पठ्यते खल्वेतत् ।

---

अहमप्येतेषां वधूपरिजनानां मध्ये नृत्यन्मदनमहोत्सवं मानयिष्यामि । इति च्छाया । वध्वः स्त्रियः एतादृशः ये परिजनाः परितः समंततः विद्यमाना ये जनाः सेवकाः तेषां परिचारिकाणां । मानयिष्यामि सत्करिष्यामि । मान पूजायामित्यस्मात् लृट् । माने-र्जिज्ञासायामेव सन् । पूजार्थे तु स्वार्थे णिजेवेति स्पष्टं **सिद्धांतकौमुद्यां** । अत्र मदनमहोत्सवस्य सत्कारो नाम तदनुकूलवेषादिधारणपूर्वकं क्रीडादिकरणमेव । **राजा** । सस्मितमिति । स्मितकारणं तु विदूषकलक्षणत्वेन प्राप्तमेतस्य विचित्रवेष-भाषाद्यस्मिन्नुत्सवे सफलं भविष्यति । अत एव तद्दिदृक्षयाऽऽह—वयस्येत्यादि । **विदूषकः** । यद्भवानाज्ञापयति । भवति मदनिके, भवति चूतलतिके, माम-प्येतच्चर्चरिकं शिक्षापयथ । इति च्छाया । राजकर्तृका कामचारानुज्ञा स्वस्याऽभीष्ट-त्याह—यद्भवानित्यादि । चर्चरिकं गीतभेदं । **उभे** । भो वयस्य हताश, नैषा भवति चर्चरी । द्विपदी खंडं खलु एतत् । इति च्छाया । हताशेति पिशुन, दुर्जनेति यावत् । विदूषकं प्रति संबुद्धिः । 'हताशो निर्दये चाशारहिते पिशुनेऽपि च' इति मेदिनी । नैषा भवति चर्चरी, अयं भवदुक्तो गानविशेषो नेत्यर्थः । किंतु, द्विपदीखंडं खल्वेतत् त्वत्संमतगानविशेषादन्योऽयं गानविशेषः । **विदूषकः** । किमेतेनं खंडेन मोदकाः क्रियंते । इति च्छाया । सहर्षमिति हर्षका-रणं तु इदं मोदककरणसाधनमिति संभावना, तदेवाह—किमेतेनेत्यादिना । मोदको नारिकेलांतर्गतरसद्रव्यमिश्रशर्करापूर्णपिष्टकपक्वान्नविशेषः । अत एव शर्कराविशेष-वाचकखंडशब्दश्रवणेन विदूषकस्य मोदककरणप्रश्नः । **मदनिका** । नहि नहि । पठ्यते खल्वेतत् । इति च्छाया । विहस्येति । सर्वमपि वाक्यमेतस्य भोजनपरमिति

**विदूषकः**—(सविषादम्।) जइ पट्टीअदि ता अलं एदिणा। वरं पिअवअस्सस्स जेव्व सआसं गमिस्सम्। (गन्तुमिच्छति।)

**उभे**—एहि कीलिम्ह। वसंतअ, कहिं गच्छसि। (इति बहुविधं वसन्तकमाकर्षतः। विदूषकश्च बलाद्गच्छति।)

**विदूषकः**—(राजानमुपसृत्य।) वअस्स, णच्चिदोम्हि। णहि णहि, कीलिअ पलाइदोम्हि।

**राजा**—साधु कृतम्।

**चूतलतिका**—हञ्जे मअणिए चिरं खु अम्हेहिं कीलिदम्। ता एहि णिवेदेम्ह दाव भट्टिणीए संदेसं महाराअस्स।

**मदनिका**—एँहि, त्वरम्ह।

---

१. यदि पठ्यते तदलमेतेन। वरं प्रियवयस्यस्यैव सकाशं गमिष्यामि।

२. एहि क्रीडामः। वसन्तक, कुत्र गच्छसि।

३. वयस्य, नर्तितोऽस्मि। नहि नहि, क्रीडित्वा पलायितोऽस्मि।

४. हञ्जे मदनिके, चिरं खल्वावाभ्यां क्रीडितम्। तदेहि निवेदयावस्तावत् भट्टिन्याः संदेशं महाराजस्य।

५. एहि, त्वरावः।

---

विस्मयेन हासः। नहि नहि इति द्विरुक्त्या सर्वथा निषेधो गम्यते। **विदूषकः**। यदि पठ्यते तदलमेतेन वरं प्रियवयस्यस्यैव सकाशं गमिष्यामि। इति च्छाया। सविषादमिति। स्वानभिमताभिप्रायश्रवणाद्विषादः। एतेन द्विपदीखंडेन। अलं निषेधे 'अलं भूषणपर्याप्तिशक्तिवारणवाचकं' इति कोशः। उपयोगो नास्तीत्यर्थः। पूर्ववत् गम्यमानक्रियात्वात्तृतीया। वरमिति राजनिकटगमनस्य विशेषणं। अत्र स्थित्यपेक्षया राजनिकटगमनमेव श्रेष्ठमिति यावत् 'देवाद्वृते वरः श्रेष्ठे त्रिष्वि'ति कोशः। **उभे**। एहि, क्रीडामः। वसंतक, कुत्र गच्छसि। इति च्छाया। बहुविधमिति। बहवः विधाः प्रकारा यस्य 'विधा विधौ प्रकारे च' इत्यमरः। आकर्षणक्रियाया विशेषणम्। **विदू०**। वयस्य नर्तितोऽस्मि नहि नहि क्रीडित्वा पलायितोऽस्मि। नर्तितोऽस्मि इति। नृतधातोर्णिजंतात्कर्मणि क्तः। नर्तितं इत्यनेन पुत्तिकावत् इतरेण नर्तनं प्राप्तं। तथा च दासीकर्तृकं स्वनर्तनं व्रीडावहमित्यभिप्रेत्याह—नहि नहीति। पलायित इति। वयस्यांतिकं शीघ्रप्राप्त्यर्थं पलायनं। **चूतलतिका**। हंजे मदनिके, चिरं खल्वावाभ्यां क्रीडितं, तदेहि निवेदयावस्तावत् भट्टिन्याः संदेशं महाराजस्य। हंजे इति। चेटीं प्रत्याह्वाने हंजे इति नाट्यभाषायां प्रयुज्यते। 'समा हलेति प्रेष्या च हंजे' इति **दशरूपके**। चिरं खल्विति। अत्र खल्विति वाक्यालंकारे 'निषेधवाक्यालंकारजिज्ञासानुनये खलु' इत्यमरः। महाराजस्येति 'षष्ठी शेषे' इति संबंधसामान्ये षष्ठी। **मदनिका**। एहि त्वरावः। इति च्छाया। **उभे**। जयतु जयतु भर्ता। भर्तः, देव्या-

उभे—(उपसृत्य ।) [1]जेदु जेदु भट्टा। भट्टा, देवी आणवेदि। (इत्यर्धोक्ते लज्जां नाटयन्त्यौ) णहि णहि, विण्णवेदि ।

राजा—(सहर्षं विहस्य सादरम् ।) नन्वाज्ञापयतीत्येव रमणीयं । विशेषतोऽद्य मदनमहोत्सवे । तत्कथय किमाज्ञापयति देवी ।

विदूषकः—[2]आः दासीए धीए । किं देवी आणवेदि ।

चेट्यौ—[3]एवं देवी विण्णवेदि । अज्ज खु मए मअरंदुज्जाणं गदुअ रत्तासोअपाअवतलसंट्ठाविदस्स भअवदो कुसुमाउहस्स पूआ णिवत्तइदव्वा । तहिं अज्जउत्तेण संणिहिदेण होदव्वम् ।

राजा—(सानन्दम् ।) वयस्य, ननु वक्तव्यमुत्सवादुत्सवान्तरमापतितम् ।

---

१. जयतु जयतु भर्ता। भर्तः, देवी आज्ञापयति। नहि नहि, विज्ञापयति ।

२. आः दास्याः पुत्रि । किं देवी आज्ञापयति ।

३. एवं देवी विज्ञापयति । अद्य खलु मया मकरन्दोद्यानं गत्वा रक्ताशोकपादपतलसंस्थापितस्य भगवतः कुसुमायुधस्य पूजा निर्वर्तयितव्या । तत्र आर्यपुत्रेण संनिहितेन भवितव्यम् ।

---

ज्ञापयति । नहि नहि, विज्ञापयति । इति च्छाया । आज्ञापनं हि स्वापेक्षनिकृष्टं प्रति भवति । तच्च वासवदत्ताया अयुक्तं, अतः आज्ञापयतीत्यनंतरं लज्जानाटनम् । अतएव आज्ञापयतीति पदं त्यक्त्वाऽऽह—नहि नहीत्यादिना । **राजा** । सहर्षमिति । हर्षकारणं प्रियसंदेशः । विहस्येति हासकारणं दासीभाषणे वैपरीत्यं । सादरमित्यादरकारणं दासीविपरीतोच्चारणमपि कामुकस्य मम प्रीतिकरमित्यभिप्रायः । तमेवाभिप्रायमाह—नन्वाज्ञापयतीत्यादिना । **विदू०** । आः दास्याः पुत्रि, किं देव्याज्ञापयति इति च्छाया । विदूषकस्तु यथाश्रुतं चेटीवाक्यार्थं गृहीत्वा पत्नीकर्तृकं पत्याज्ञापनमयुक्तं इत्यभिप्रेत्य चेटीं निर्भर्त्सयति—आः इत्यादिना । आः इति कोपेऽव्ययं 'आस्तु स्यात्कोपपीडयोः' इत्यमरः । दास्याः पुत्रि इति वाक्ये 'पुत्रेऽन्यतरस्यां' इति षष्ठ्या अलुक् वा । **चेट्यौ** । एवं देवी विज्ञापयति । अद्य खलु मया मकरंदोद्यानं गत्वा रक्ताशोकपादपतलसंस्थापितस्य भगवतः कुसुमायुधस्य पूजा निर्वर्तयितव्या । तत्रार्यपुत्रेण संनिहितेन भवितव्यं । इति च्छाया । रक्ताशोकेत्यादि । रक्तः एतत्संज्ञको योऽशोकपादपः । एतस्य रक्तसंज्ञा तु आमूलाग्रं पुष्पितत्वेन केवलरूढ्या वा । तस्य तले संस्थापितस्य कुसुमायुधस्य कुसुमायुधप्रतिकृतेः पूजा निर्वर्तयितव्या संपादनीया । **राजा** । सानंदमिति । आनंदकारणं स्वयमेव प्रकटयति—वयस्येत्यादिना । उत्सवात् मदनमहोत्सवात् उत्सवांतरं अन्यः उत्सवः उत्सवांतरं । मयूरव्यंसकादित्वादन्यार्थकांतरशब्देन समासः । स च अस्वपदविग्रहः, अत एव तद्योगे 'अन्यारादितरर्ते' इत्यादिना उत्सवशब्दात्पंचमी । 'अंतरमवकाशावधिपरिधानांतर्धिभेदतादर्थ्ये' इति ।

विदूषकः—भो वअस्स, ता उट्ठेहि तहिं ज्जेव गच्छम्ह जेण तहिं गदस्स बम्हणवालअस्स मे सोत्थिवाअणं किंपि भविस्सदि।

राजा—मदनिके, गम्यतां देव्यै निवेदयितुं अयमहमागत एव मकरन्दोद्यानमिति।

चेट्यौ—जं भट्टा आणवेदि। (इति निष्क्रान्ते)

राजा—वयस्य, आदेशय मकरन्दोद्यानस्य मार्गम्।

विदूषकः—एदु एदु भट्टा।

(इति परिक्रामतः)

विदूषकः—(अग्रतोऽवलोक्य) एदं मअरन्दुज्जाणं ता एहि पविसम्ह।

(इति प्रविशतः)

विदूषकः—(अवलोक्य सविस्मयम्) भो महाराज, पेक्ख पेक्ख दाव एदं खु मलअमारुदान्दोलिदमउलन्तसहआरमञ्जरीरेणुपडलपडिबद्धपडविआणं मत्तमहुअरमुक्कझंकारमिलिदकोइलालावसंगीदसुहावहं तुहागमणदंसिआअरं विअ मअरंदुज्जाणं लक्खीअदि। ता पविसदु भवं।

---

१. भो वयस्य, तदुत्तिष्ठ तत्रैव गच्छावः येन तत्र गतस्य ब्राह्मणबालकस्य मम स्वस्तिवायनं किमपि भविष्यतीति।

२. यद्भर्ताऽऽज्ञापयति।

३. एतु एतु भर्ता।

४. एतत्तन्मकरन्दोद्यानं तदेहि प्रविशावः।

५. भो महाराज, प्रेक्षस्व प्रेक्षस्व तावदेतत् खलु मलयमारुतान्दोलितमुकुलायमानसहकारमञ्जरीरेणुपटलप्रतिबद्धपटवितानं मत्तमधुकरमुक्तझङ्कारमिलितकोकिलालापसंगीतसुखावहं तवागमनदर्शितादरमिव मकरन्दोद्यानं लक्ष्यते। तत्प्रविशतु भवान्।

---

विदू०। भो वयस्य, तदुत्तिष्ठ तत्रैव गच्छावः, येन तत्र गतस्य ब्राह्मणबालकस्य मे स्वस्तिवायनं किमपि भविष्यति। इति च्छाया। तत्रैव मकरंदोद्याने एव। स्वस्तिवायनमिति। स्वस्तिवाचनमितिपठित्वा पुण्याहवाचनमिति अर्थं केचित्कुर्वंति, सर्वकार्यारंभे हि प्रायशः पुण्याहवाचनं विहितं तत्र ब्राह्मणानां दक्षिणादिकं भवतीति। स्वस्तिवायनमितिपाठस्तूचितः, 'सांप्रतं त्वमपि स्वस्तिवायनं प्रतीच्छे'ति वक्ष्यमाणग्रंथस्वारस्यात्। चेट्यौ। यद्भर्ताज्ञापयति। विदू०। एतु एतु भर्ता। परिक्रामत इति। इतस्ततो भ्रमत इत्यर्थः। विदू०। एतन्मकरंदोद्यानं, तदेहि प्रविशावः। इति च्छाया। विदू०। भो महाराज,

**राजा**—( समन्तादवलोक्य ) अहो मकरन्दोद्यानस्य परा श्रीः । इह हि

उद्यद्विद्रुमकान्तिभिः किसलयैस्ताम्रां त्विषं बिभ्रतो
भृङ्गालीविरुतैः कलैरविशदव्याहारलीलाभृतः ।
घूर्णन्तो मलयानिलाहतिचलैः शाखासमूहैर्मुहु-
र्भ्रान्तिं प्राप्य मधुप्रसंगमधुना मत्ता इवामी द्रुमाः ॥ १७ ॥

---

प्रेक्षख प्रेक्षख तावत् । एतत्खलु मलयमारुतांदोलितमुकुलायमानसहकारमंजरीरेणुपटलप्रतिबद्धपटवितानं मत्तमधुकरमुक्तझंकारमिलितकोकिलालापसंगीतसुखावहं तवागमनदर्शितादरमिव मकरंदोद्यानं लक्ष्यते । तत्प्रविशतु भवान् । इति च्छाया । सविस्मयं इति । विस्मयकारणं तु भो महाराजेत्यादितद्वाक्येनैव स्पष्टीभविष्यति । प्रेक्षखेति द्विरुक्तिः संभ्रमे । मलयस्य दक्षिणदिक्स्थितस्य पर्वतविशेषस्य यो मारुतः शेषषष्ठ्या समासः । तेन आंदोलिताः कंपिताः या मुकुलायमानसहकारमंजर्यः । मुकुलाः कुड्मला इव आचरंतीति मुकुलायमानाः 'मुकुलशब्दादाचारक्यङन्ताच्छानच्' सहकाराणां अतिसौरभाम्रवृक्षाणां या मंजर्यः वल्लर्यः 'वल्लरिर्मंजरिः स्त्रियां' इत्यमरः । तासां रेणवः परागाः तेषां पटलं समूहः 'समूहे पटलं नने'ति कोशः । तेन प्रतिबद्धं सन्नद्धं पटस्य सुचैलस्य वितानं उल्लोचो यस्मिन् तत् । मत्ताः अर्थान्मधुपानेन ये मधुकराः भ्रमरास्तैर्मुक्तः उत्सृष्टः यो झंकारः तत्स्वरानुकरणमिदं गुंजारव इति यावत् । तेन मिलितः संगतो यः कोकिलानां पिकानामालापः विरावः तदेव संगीतं तेन यत्सुखं तस्य आवहं प्रापकं । 'आङ्पूर्वकाद्वह प्रापण' इत्यस्मात् पचाद्यच । तव आगमनेन दर्शितः आदरो येन तदिव । अत्र तवेत्येतत्सापेक्षत्वेऽपि आगमनदर्शितेत्यनयोः समासः । देवदत्तस्य गुरुकुलमितिवत् । कारकाणां क्रियां प्रति नित्यसापेक्षत्वमिति सिद्धांतः । लोके राजागमने उल्लोचादिभिर्गृहं भूष्यते, तत्प्रीत्यर्थं गेयादिकं विधीयते, तद्वन्मकरंदोद्यानेन करणात्त्वद्विषये दर्शितादरत्वं तस्य स्पष्टमेव । **राजा** । समंतादिति अव्ययं 'परितः सर्वतो विष्वक् समंतात्च समंततः' इति हेमचंद्रः । अहो इति आश्चर्ये, मकरंदोद्यानरम्यताविषयकमाश्चर्यमित्यर्थः । तदेव स्पष्टयति—इह हीत्यादिना । हि हेतौ 'हि हेतावधारणे' इत्यमरः । इह अस्मिन्मकरंदोद्याने । **उद्यद्विद्रुमकांतिभिरिति** । उद्यतां उदयं प्राप्नुवतां 'उत्पूर्वकादिणः शतरि रूपं' । विद्रुमाणां प्रवालानां 'विद्रुमो रत्नवृक्षेऽपि प्रवालेऽपि पुमानयं' इति मेदिनी । कान्तय इव कांतयो येषां तैः किसलयैः पल्लवैः हेतुभिः 'हेत्वर्थे तृतीया 'ताम्रां लोहितवर्णां त्विषं कांतिं बिभ्रतः धारयन्तः बिभर्तेः द्विले शतरि श्लौ द्विलेऽभ्यांसस्येत्वं 'नाभ्यस्तादि'ति नुम्निषेधः। अभिनवपल्लवा ईषत्ताम्रा भवंतीति प्रसिद्धं । अनेन मधुना मत्तानां ताम्रत्वमाविष्कृतं कलैः । अस्पष्टमधुरैः 'ध्वनौ तु मधुरास्फुटे कल' इति कोशः । भृंगाणामाल्यः पंक्तयः 'वीथ्यालिरावली'त्यत्र दीर्घांतोऽप्यस्ति । तासां विरुतानि शब्दितानि गुंजारवा इति यावत् तैः हेतुभिः अविशदः अस्पष्टः स चासौ व्याहारश्च भाषितं च 'व्याहार

अपि च

मूले गण्डूषसेकासव इव वकुलैर्वास्यते पुष्पवृष्ट्या
मध्वाताम्रे तरुण्या मुखशशिनि चिराच्चम्पकान्यद्य भान्ति ।
आकर्ण्याशोकपादाहतिषु च रसितं निर्भरं नूपुराणां
झङ्कारस्यानुगीतैरनुकरणमिवारभ्यते भृङ्गसार्थैः ॥ १८ ॥

---

उक्तिर्लपितं भाषितं' इत्यमरः । तस्य लीलां बिभ्रतीति व्याहारलीलाभृतः सुप्युपपदे भृञः, 'क्विप् चे' ति क्विप् । अनेन मधुमत्ततुल्यशब्दकारित्वं बोधितं । तथा मलयसंबंध्यनिलस्याहतिभिः ताडनैः चलैः लोलैः शाखानां शिफानां समूहैः मुहुः पुनः पुनः घूर्णतः भ्रमंतः । घुणघूर्ण भ्रमणे । अनेन मधुमत्तवद्घूर्णनं बोधितम् । अनेन विशेषणत्रयेण द्रुमेषु मधुप्रसंगमधुहेतुकं मत्तत्वं उत्प्रेक्षते मधुप्रसंगेत्यादिना । अमी किंचिद्विप्रकृष्टाः 'अदसस्तु विप्रकृष्ट' इतिवचनात् द्रुमाः वृक्षाः मधोः वसंतस्य 'मधुश्चैत्रर्तुदैत्येषु' इत्यनेकार्थसंग्रहः । यः प्रसंगः संबंधः तस्य संबंधि यन्मधु पुष्परसः तेन 'मधु मद्ये पुष्परसे' इत्यमरः । वसंतप्राप्तिहेतुकपुष्परसेनेति यावत् । अथ च मधोः वसंतस्य यः प्रसंगः प्रकृष्टः संगः संबंधो लोकानां यस्मिन् स प्रसंगः उत्सव इत्यर्थः । उत्सवे हि लोकानां संगमो भवतीति प्रसिद्धं । तत्संबंधि यन्मधु मद्यं तेन भ्रांतिं उन्मादं प्राप्य मत्ताः शौंडा इव दृश्यंते इति शेषः । उत्प्रेक्षालंकारः श्लेषश्च । लक्षणं प्रागुक्तं, किंच स्वभावोक्त्यलंकारः, तदुक्तं 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनं' इति । शार्दूलविक्रीडितं छंदः ॥ १७ ॥ अपि चेति, अन्यदपि वर्णनीयमस्तीत्यर्थः । तदेवाह—**मूलेत्यादि** । वकुलैः वकुलवृक्षैः कर्तृभिः । 'कर्तृकरणयोरि'ति तृतीया । 'अथ केसरे वकुलः' इत्यमरः । मूले बुध्ने 'मूलं बुध्नोङ्घ्रि' इत्यमरः । गंडूषश्चासौ सेकश्च मुखपूर्तिसेचनं तस्य य आसवः मद्यं 'मैरेयमासवः सीधुः' इत्यमरः । अग्रे आसवोक्त्या प्रत्यासत्त्या गंडूषोपि तस्यैवेति ज्ञेयं । पुष्पवृष्ट्या पुष्पाणां वर्षणेन वास्यते । अथवा गंडूषसेकासवे इति सप्तम्यंतं । तथा च गंडूषसेकासवे सतीव वकुलैः मूले पुष्पवृष्ट्या वास्यते आच्छाद्यते । 'वस आच्छादने' । पूर्वस्मिन्नर्थे तु वसधात्वर्थः सुगंधिकरणं धातूनामनेकार्थत्वात् । वाम्यते इति पाठो मुद्रितेषु पुस्तकेषु क्वचित् दृश्यते स तु न युक्तः । निष्ठ्यूतोद्गीर्णवांतादिशब्दानां ग्राम्यत्वात् । अद्य अस्मिन्नहनि तरुण्याः युवत्याः मध्वाताम्रे ईषत्ताम्रः आताम्रः प्रादिसमासः । मधुना मद्येन आताम्रः ईषद्रक्तवर्णः तस्मिन् 'तृतीया तत्कृतार्थे'तिसमासः । 'आङीषदर्थेऽभिव्याप्तौ' इत्यमरः । मुखमेव शशी चंद्रः मयूरव्यंसकादित्वात् समासः । उपमितसमासस्तु न । आताम्र इति सामान्यधर्मप्रयोगात् । तस्मिन् चंपकानि चंपकपुष्पाणि, चंपकशब्दात्पुष्परूपविकारे विहितस्याणः 'पुष्पमूलेषु बहुलं' इति लुप् । चिरात् चिरकालपर्यंतं भांति शोभंते । च किंचेत्यर्थः 'चान्वाचयसमाहारेतरेतरसमुच्चये' इत्यमरः । अशोकेषु पादाभ्यामाहतिषु ताडनेषु नूपु-

**विदूषकः**—( श्रुत्वा ) भो वअस्स, ण एदे महुअरा णेउरसद्दं अणुहरंदो । णेउरसद्दो जेव्व एसो देवीए परिअणस्स ।[1]

**राजा**—वयस्य, सम्यगुपलक्षितं भवता ।

( ततः प्रविशति उज्ज्वलवेषा वासवदत्ता काञ्चनमाला च पूजोपकरणहस्ता सागरिका च । )

**वास०**—हंञ्जे कंचणमाले, आदेसेहि मअरंदुज्जाणस्स मग्गम् ।[2]

**काञ्च०**—एदु एदु भट्टिणी ।[3]

**वास०**—( परिक्रम्य ) हंञ्जे कंचणमाले, अध केत्तिअदूरे सो रत्ता-[4]

---

१. भो वयस्य, नैते मधुकरा नूपुरशब्दमनुहरन्तः । नूपुरशब्द एवैष देव्याः परिजनस्य ।

२. हञ्जे कांचनमाले, आदेशय मकरन्दोद्यानस्य मार्गम् ।

३. एतु एतु भट्टिनी ।

४. हञ्जे काञ्चनमाले, अथ कियद्दूरे स रक्ताशोकपादपो यत्र मया

---

राणां मंजीराणां 'मंजीरो नूपुरोऽस्त्रियां' इत्यमरः । निर्भरं अतिमात्रं 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरं' इति कोशः । यत् रसितं क्वणितं तदाकर्ण्य श्रुत्वा भृंगाणां भ्रमराणां सार्थैः समूहैः कर्तृभिः । 'संघसार्थौ तु जंतुभिः' इत्यमरः । अनुगीतैः गानैः करणैः गुंजारवैरिति यावत् । झंकारस्य नूपुरशिंजितस्य नूपुरशिंजितानुकृतिशब्दोऽयं । अनुकरणमनुकृतिः आरभ्यत इव । आङ्पूर्वकाद्रभेः कर्मणि लुट् । अशोकवकुलयोः स्त्रीपादताडनं तद्गंडूषमदिरा च दोहदमिति कविप्रसिद्धिः । तदुक्तं 'पादाहतः प्रमदया विकसत्यशोकः शोकं जहाति वकुलो मुखसीधुसिक्त' इति । अन्यदपि प्रमाणं पूर्वं व्याख्यातं । उत्प्रेक्षालंकारः । स्रग्धरावृत्तं लक्षणमुक्तं ॥ १८ ॥ **विदू०** । भो वयस्य, नैते मधुकरा नूपुरशब्दमनुहरंतः नूपुरशब्द एवैष देव्याः परिजनस्य । अनुहरंत इति । अनुकुर्वन्तः, अनुपूर्वो हरतिः सादृश्ये । यथा **सिद्धांतकौमुद्यां** 'मातुरनुहरति' इति । देव्याः वासवदत्तायाः । **राजा** । उपलक्षितं ज्ञातं । उज्ज्वलः शुभ्रः वेषः यस्याः सा, पूजोपकरणं पूजासाहित्यं हस्ते यस्याः सा । 'सप्तमीविशेषण'इति ज्ञापकात् व्यधिकरणबहुव्रीहिः । पूजोपकरणेति विशेषणं सागरिकाया न कांचनमालायाः । अग्रे 'एतदपि सर्वं पूजोपकरणं कांचनमालाया हस्ते समर्पय' इति वासवदत्तोक्तेः । **वासवदत्ता** । हंजे कांचनमाले, आदेशय मकरंदोद्यानस्य मार्गं । इति च्छाया । हंजे इति चेटींप्रति वासवदत्ताकृता संबुद्धिः 'हंडे हंजे हलाह्वाने नीचां चेटीं' इति कोशः । आदेशय कथयेत्यर्थः, प्रदर्शयेति यावत् । **कांचनमाला** । एतु एतु भट्टिनी । इति च्छाया । एतु एतु इति संभ्रमे द्विरुक्तिः संभ्रमो मार्गप्रदर्शनस्य । भट्टिनीति । दासीकर्तृका राज्ञीं प्रति संभाषारीतिरियं । यदुक्तं भरतेन 'राजपत्न्यस्तु संभाष्याः सर्वाः परिजनेन तु । भट्टिनी स्वामिनी देवी'ति । **वासवदत्ता** । हंजे कांचन-

सोअपाअवो जहिं मए भअवदो कुसुमाउहस्स पूआ णिव्वत्तइदव्वा ।

काञ्च०—भट्टिणि, आसण्णो ज्जेव किं ण पेक्खदि भट्टिणी । इयं क्खु सा णिरन्तरुब्भिण्णकुसुमसोहिणी भट्टिणीए पडिग्गहीदा माहवीलदा । एस्सा अवरा णोमालिआलदा जाए अआलकुसुमसम्मुग्गमसद्धालुणा भट्टिणा, अणुदिणं आआसीअदि अप्पा । ता एदं अदिक्कमिअ दीसदि ज्जेव सो रत्तासोअपाअवो जहिं देवी पूआं णिव्वट्टइस्सदि ।

---

भगवतः कुसुमायुधस्य पूजा निर्वर्तयितव्या ।

१. भट्टिनि, आसन्न एव किं न प्रेक्षते भट्टिनी । इयं खलु सा निरन्तरोद्भिन्नकुसुमशोभिनी भट्टिन्या परिगृहीता माधवीलता । एषाऽपरा नवमालिकालता यस्या अकालकुसुमसमुद्गमश्रद्धालुना भर्त्रानुदिनमायास्यत आत्मा । तदेनामतिक्रम्य दृश्यत एव स रक्ताशोकपादपो यत्र देवी पूजां निर्वर्तयिष्यति ।

---

माले । अथ कियद्दूरे स रक्ताशोकपादपो यत्र मया भगवतः कुसुमायुधस्य पूजा निर्वर्तयितव्या । इति च्छाया । अथेति शब्दः प्रश्ने 'मंगलानंतरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इति कोशः । निर्वर्तयितव्या निष्पादयितव्या । **कांचनमाला** । भट्टिनि, आसन्न एव किं न प्रेक्षते भट्टिनी । इयं खलु सा निरंतरोद्भिन्नकुसुमशोभिनी भट्टिन्या परिगृहीता माधवीलता । एषाऽपरा नवमालिकालता यस्या अकालकुसुमोद्गमश्रद्धालुना भर्त्रानुदिनमायास्यत आत्मा । तदेनामतिक्रम्य दृश्यत एव स रक्ताशोकपादपो यत्र देवी पूजां निर्वर्तयिष्यति । इति च्छाया । इयं संनिकृष्टा । निर्गतं अंतरं येषां तानि निरंतराणि तानि च तानि उद्भिन्नानि उत्पन्नानि च एतादृशैः कुसुमैः शोभते तच्छीला । परिगृहीता आत्मीयत्वेन स्वीकृता माधवीलता वासंतीलता एषा समीपतरवर्तिनीत्यर्थः । 'समीपतरवर्ति चैतदो रूपं' इत्युक्तत्वात् । नवमालिका सप्तला 'सप्तला नवमालिका' इत्यमरः ( वटमोगरा इति भाषायां ) । अकालेति । अत्र नञ् अन्यत्वद्योतकः 'तत्सादृश्यं तदन्यत्वं' इति वचनात् । तेन अकाले, स्वाभाविककुसुमोत्पत्तिकालान्यकाले यः कुसुमानां समुद्गमः समुद्भवः तस्मिन् श्रद्धालुना श्रद्धाशालिना 'श्रद्धालुः श्रद्धया युक्ते' इत्यमरः । 'स्पृहिगृही'त्यादिना श्रच्छब्दोपपदे डुधाञ् धातोस्ताच्छील्ये आलुच् । अनुदिनं, प्रतिदिनं 'अव्ययं विभक्ती'त्यादिना वीप्सारूपार्थेऽव्ययीभावः । आयास्यते । यसु प्रयत्ने आङ्पूर्वकोऽयं खेदे । अस्माण्णिजंतात्कर्मणि लट् । आत्मा बुद्धिः 'आत्मा यत्नो धृतिर्बुद्धिः' इत्यमरः । कथमेतस्या अकालपुष्पोद्गमो भवतीति चिंतया अंतःकरणं पीड्यत इत्यर्थः । दृश्यते इति कर्मणि लट् । द्रष्टृभिरिति देव्या इति वा तृतीयांतः कर्ता अध्याहर्तव्यः । एवं द्रष्टृभिरेनामतिक्रम्य रक्ताशोकपादपो दृश्यते अवलोक्यते इत्यर्थः ।

वास०—ता एहि तहिं ज्जेव लहुं गच्छम्ह।¹

काञ्च०—एदु एदु भट्टिणी।²

( सर्वाः परिक्रामन्ति। )

वास०—अअं सो रत्तासोअपाअवो जहिं अहं पूआं णिवत्तइस्सं। ता पूआणिमित्ताइं उवअरणाइं मे उवणेहि।³

साग०—( उपसृत्य ) भट्टिणि, एदं सव्वं सज्जम्।⁴

वास०—( निरूप्यात्मगतं ) अहो पमादो परिअणस्स। जस्स ज्जेव दंसणपधादो पअत्तेण रक्खीअदि तस्स ज्जेव दिट्ठिगोअरे पडिदा भवे। मोदु। एवं दाव भणिस्सं। ( प्रकाशम्। ) हञ्जे साअरिए, कीस तुमं

---

१. तदेहि तत्रैव लघु गच्छामः।

२. एतु एतु भट्टिनी।

३. अयं स रक्ताशोकपादपो यत्राहं पूजां निर्वर्तयिष्ये। तत्पूजानिमित्तान्युपकरणानि मे उपनय।

४. भट्टिनि, एतत्सर्वं सज्जम्।

५. अहो प्रमादः परिजनस्य। यस्यैव दर्शनपथात्प्रयत्नेन रक्ष्यते तस्यैव दृष्टिगोचरे पतिता भवेत्। भवतु। एवं तावद्भणिष्यामि। हञ्जे सागरिके,

---

एवं च अतिक्रम्येति समानकर्तृकत्वात् क्त्वाप्रत्ययोपपत्तिः। **वासवदत्ता**। तदेहि तत्रैव लघु गच्छामः। इति च्छाया। तदिति हेतौ 'यत्तद्यतस्ततो हेतौ' इत्यमरः। लघु शीघ्रं 'लघु क्षिप्रमरं द्रुतं' इत्यमरः। **कांचनमाला**। एतु एतु भट्टिनी। इति च्छाया। **वासवदत्ता**। अयं स रक्ताशोकपादपो यत्राहं पूजां निर्वर्तयिष्यामि। तत् पूजानिमित्तान्युपकरणानि मे उपनय। इति च्छाया। तत् तस्मात्कारणात्। यत्र पूजा चिकीर्षिता तादृशवृक्षस्य पुरो दृश्यमानत्वात् पूजाकालः प्राप्तः तस्मादित्यर्थः। तेन हीति पाठेऽपि तेनेति हेतुतृतीययोक्त एवार्थः प्रतिपद्यते। पूजाया निमित्तानि हेतुभूतानि 'निमित्तं हेतुलक्ष्मणोः' इति कोशः। उपकरणानि साधनानि, गंधपुष्पादिपूजासामग्रीमिति यावत्। मे मह्यं संप्रदाने चतुर्थी। अथवा मे मम संबंधसामान्ये षष्ठी, उपनयेति पूर्वकल्पे उपनयेत्यस्य देहीत्यर्थः। षष्ठीपक्षे तु समीपं प्रापयेत्यर्थः। **सागरिका**। उपसृत्येति समीपं गत्वेत्यर्थः। भट्टिनि, एतत्सर्वं सज्जम्। इति छाया। सज्जं संभृतं। 'सज्जौ सन्नद्धसंभृतौ' इति हैमः। **वासवदत्ता**। निरूप्य विलोक्य अर्थात्सागरिकामित्यर्थः। आत्मगतं स्वगतमित्यर्थः। तदुक्तं 'सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतं' इति। अहो प्रमादः परिजनस्य। यस्यैव दर्शनपथात्प्रयत्नेन रक्ष्यते तस्यैव दृष्टिगोचरे पतिता भवेदियं। भवतु। एवं तावद्भणिष्यामि। हंजे सागरिके, कस्मात् त्वमद्य मदनमहोत्सवपराधीने परि-

अज्ज मअणमहूस्सवपराहीणे परिअणे सारिअं उज्झिअ इहागदा। ता तहिं ज्जेव लहु गच्छ। एदं वि सव्वं पूओवअरणं कंचणमालाए हत्थे समप्पेहि।

सागo—[1]जं भट्टिणी आणवेदि। (इति कतिचित्पदानि गत्वा आत्मगतम्।) सारिआ मए उण सुसंगदाए हत्थे समप्पिदा। एदं वि अत्थि मे पेक्खिदुं कोदूहलं। किं जहा तादस्स अन्तेउरे भअवं अणंगो अच्चिअदि। इह वि तह ज्जेव किं अण्णहेति। ता अलक्खिआ भविअ पेक्खिस्सम्। (परिक्रम्यावलोक्य च।) ता जाव इह पूआसमओ होदि ताव अहं पि भअवन्तं अणंगं ज्जेव पूअइदुं कुसुमाइं अवचिणिस्सं (इति कुसुमावचयं नाटयति।)।

---

कस्मात्त्वमद्य मदनमहोत्सवपराधीने परिजने सारिकामुज्झित्वेहागता। तत्तत्रैव लघु गच्छ। एतदपि सर्वं पूजोपकरणं काञ्चनमालाया हस्ते समर्पय।

१. यद्भट्टिन्याज्ञापयति। सारिका मया पुनः सुसङ्गताया हस्ते समर्पिता। एतदप्यस्ति मे प्रेक्षितुं कौतूहलं। किं यथा तातस्यान्तःपुरे भगवाननङ्गोऽर्च्यते। अत्रापि तथैव किमन्यथेति। तदलक्षिता भूत्वा प्रेक्षिष्ये। तद्यावदिह पूजासमयो भवति तावदहमपि भगवन्तमनङ्गमेव पूजयितुं कुसुमान्यवचेष्यामि।

---

जने सारिकामुज्झित्वेहागता। तत्तत्रैव लघु गच्छ। एतदपि सर्वं पूजोपकरणं कांचनमालाया हस्ते समर्पय। इति च्छाया। प्रमादः अनवधानता दर्शनस्य पंथा दर्शनपथः तस्मात् 'ऋक्पूरब्धूःपथा'मिति अप्रत्ययः। दर्शनपथादिति 'भीत्रार्थाना' मित्यपादानत्वं। दृष्टिगोचरं गावः इंद्रियाणि चरंति यस्मिन् 'गोचरसंचरे'त्यादिनाऽधिकरणे घः। दृष्टेः गोचरं विषयं यथा स्यात्तथा पतिता प्राप्ता। गोचरमिति पतनक्रियाया विशेषणं। क्रियाविशेषणानां कर्मत्वं 'कर्मणि द्वितीये'ति सूत्रे शब्दरत्ने उक्तं। अतएव कर्मणि द्वितीया भवति मृदु पचतीतिवत्। गोचरे इति सप्तम्यंतपाठे तु दृष्टिगोचरे दृष्टिविषये इत्यर्थः। एवमिति, वक्ष्यमाणमित्यर्थः। भणिष्यामि वक्ष्यामि। 'अणरण' इत्यादिप्रघट्टके भणधातुः शब्दार्थकः। प्रकाशमिति। एतल्लक्षणं तु अनंतरमेवोक्तं। परस्मिन्नधीति पराधीनः, अधिशब्दोऽत्र परायत्तत्वद्योतकः 'अषडक्षे'-त्यादिना अध्युत्तरपदत्वात्स्वार्थे खः। मदनमहोत्सवस्य पराधीनः तस्मिन्। 'परतंत्रः पराधीनः' इत्यमरः। मदनमहोत्सवपरिहीने परिजने इति पाठे मदनमहोत्सवहेतुना परिहीने अपगत इति यावत् एतादृशे परिजने सतीत्यन्वयः। सारिकां पक्षिविशेषं (सालुंकी इति भाषायां)। तत् तस्मात्कारणात् सारिकाया एकाकिस्थितिरूपकारणात्। पूजोपकरणं, पूजासामग्री। **सागरिका**। यद्भट्टिन्याज्ञापयति, सारिका पुनर्मया सुसंगताया हस्ते समर्पिता। एतदप्यस्ति मे प्रेक्षितुं कौतूहलं, किं यथा तातस्यांतःपुरे भगवाननंगोऽर्च्यते, अत्रापि तथैव किमन्यथेति। तदलक्षिता भूत्वा

वास०—[1]कंचणमाले, पडिट्ठावेहि असोअमूले भअवंतं पज्जुण्णम् ।

काञ्च०—[2]जं भट्टिणी आणवेदि । (इति तथा करोति ।) ।

विदू०—(परिक्रम्यावलोक्य च ।) [3]भो वअस्स, जधा वीसंतो णेउ-रसद्दो तहा तक्केमि आअदा देवी असोअमूलं त्ति ।

राजा—वयस्य, सम्यगवधारितम् । पश्येयं देवी । या किलैषा

१. काञ्चनमाले, प्रतिष्ठापयाशोकमूले भगवन्तं प्रद्युम्नम् ।
२. यद्भट्टिन्याज्ञापयति ।
३. भो वयस्य, यथा विश्रान्तो नूपुरशब्दस्तथा तर्कयाम्यागता देव्यशोकमूलमिति ।

प्रेक्षिष्ये । तद्यावदिह पूजासमयो भवति तावदहमपि भगवंतं अनङ्गमेव पूजयितुं कुसुमान्यवचेष्यामि । इति च्छाया । यद्भट्टिन्याज्ञापयति, तत्करोमीति शेषः । दृष्टश्च वाक्यार्थे वाक्यैकदेशप्रयोगः 'प्रविश पिंडीं' इतिवत् । स्पष्टतरं चैतत् 'इग्यणः संप्रसारण'मिति सूत्रे **महाभाष्ये** । पदानि गत्वा । गत्वेत्यत्र गमधातुरन्तर्भावितण्यर्थः । अत एव पदानीत्यस्य कर्मत्वसिद्धिः । पदानीत्यस्य पादप्रक्षेपयोग्यदेशानिति वा । मया पुनरिति मया त्वित्यर्थः । अव्ययानामनेकार्थत्वात् प्रकृते तथैवोचितत्वात् । सुसंगतायाः एतन्नाम्न्या दास्याः समर्पितेति । एतेन सारिकाऽनवस्थानिमित्तवासवदत्ताक्रोधानवकाशः सूचितः । इदमपीति, अपिः समुच्चये, सारिकासंबंधिचिंताभावः । एतत्प्रेक्षणकौतुकं चास्तीत्यर्थः । यत्प्रेक्षणविषयं कौतूहलं तदेवाह—किं यथा इत्यादिना । किमन्यथेति किंशब्दो वितर्के 'किं कुत्सायां वितर्के च' इति मेदिनी । तत् मदनपूजादिदृक्षाहेतोः, तावत् यावत्तावच्छब्दौ अवधौ 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः । अत्र वासवदत्ता—उपनय मे पूजोपकरणानि इत्यारभ्य तत् अलक्षिता प्रेक्षिष्ये इत्यंतेन वासवदत्ताया रत्नावलीवत्सराजयोर्दर्शनप्रतीकारात् सारिकायाः सुसंगतार्पणेन अलक्षितप्रेक्षणेन च वत्सराजसमागमहेतोर्बीजस्योपादानात् बीजागमरूपं समाधानं नाम मुखसंधेरंगं । तल्लक्षणं भरते 'बीजार्थस्योपगमनं तत्समाधानमुच्यते' इति । **वासवदत्ता** । कांचनमाले, प्रतिष्ठापयाशोकमूले भगवंतं प्रद्युम्नं । इति च्छाया । प्रद्युम्नं मदनं । **कांचनमाला** । यद्भट्टिन्याज्ञापयति । इति च्छाया । **विदूषकः** । भो वयस्य, यथा विश्रांतो नूपुरशब्दस्तथा तर्कयाम्यागता देवी अशोकमूलं इति । इति च्छाया । यथा, यत इत्यर्थः । तथा, तस्मादित्यर्थः । 'यथा निदर्शने द्वौ तूद्देशे निर्देशसाम्ययोः । हेतूपपत्तौ च' इत्यनेकार्थः । **राजा** । अवधारितं निश्चितं ज्ञातमित्यर्थः । पश्येयं देवीति, इयं देवी दृश्यत इति शेषः । पश्येत्यस्य कर्म तु विशिष्टो वाक्यार्थः, पश्य मृगो धावतीतिवत् इति सप्रपञ्चमावेदितं प्राक् । या किल । किल संभाव्ये 'वार्तासंभाव्ययोः किल' इत्यमरः । यैषा चाप्यग्निरिव संभावनविषया

कुसुमसुकुमारमूर्तिर्दधती नियमेन तनुतरं मध्यम् ।
आभाति मकरकेतोः पार्श्वस्था चापयष्टिरिव ॥ १९ ॥

तदेहि उपसर्पावः । (उपसृत्य ।) प्रिये वासवदत्ते ।

वास०—(विलोक्य ।) कधं अज्जउत्तो । जअदु जअदु अज्जउत्तो । अलंकरेदु इमं देसं आसणपडिग्गहेण । एदं आसणं । एत्थ उवविसदु अज्जउत्तो ।

(राजा नाट्येनोपविशति ।)

काञ्च०—भट्टिणि, सहत्थदिण्णेहिं कुसुमकुंकुमचंदणवासेहिं सोहिदं रत्तासोअपाअवं गदुअ अच्चीअदु भअवं पज्जुण्णो ।

---

१. कथमार्यपुत्रः । जयतु जयतु आर्यपुत्रः । अलंकरोत्विमं देशमासनपरिग्रहेण । एतदासनं । अत्रोपविशत्वार्यपुत्रः ।

२. भट्टिनि, स्वहस्तदत्तैः कुसुमकुङ्कुमचन्दनवासोभिः शोभितं रक्ताशोकपादपं गत्वार्च्यतां भगवान्प्रद्युम्नः ।

---

आभातीति वक्ष्यमाणेनान्वयः । **कुसुमेत्यादि** । कुसुममिव सुकुमारा पेलवा मूर्तिः कायो यस्याः सा 'मूर्तिः काठिन्यकाययो'रिति कोशः । एतादृशी देवी, चापयष्टिरपि कुसुमान्येव सुकुमारा मूर्तिर्यस्याः सा । पुष्पधन्वेत्यस्य मदनवाचकत्वात् मदनधनुःपुष्पमित्यर्थात्सिद्धम् । नियमेन उपवासादिव्रतहेतुना 'नियमो व्रतमस्त्री'त्यमरः । चापपक्षे नियमेन निश्चयेन निश्चितप्रमाणादिनेति यावत् । तनुतरं क्षीणतरं सूक्ष्मतरं वा 'श्लक्ष्णं दभ्रं कृशं तनु' इति कोशः । मध्यं अवलग्नं लस्तकं च 'मध्यमं चावलग्नं चे'त्यमरः । दधती धारयती । धाधातोः शतृप्रत्ययांतात् 'उगितश्चे'ति ङीप् । मकरो मत्स्यः केतुर्यस्य तस्य मदनस्य पार्श्वस्था पार्श्वे समीपे तिष्ठतीति तथा । पार्श्वोपपदे स्थाधातोः कप्रत्ययः । चापयष्टिरिव चापास्त्रमिव 'यष्टिर्भार्ग्यां मधुयष्ट्यां ध्वजदंडेऽस्त्रहारयोः' इति हेमचंद्रः । वस्तुतस्तु शरीरयष्टिरित्यादिप्रयोगानुरोधेन मतल्लिकादिवत् प्रशंसावोधकत्वं यष्टिशब्दस्य युक्तमिति भाति । अत्र कोशानुग्रहश्चिंतनीयः । एषा देवी अशोकपादपतले स्थापितस्य कामदेवस्य समीपे स्थिता तस्य चापयष्टिरिव शोभते इति भावः । श्लेषानुप्राणितोत्प्रेक्षालंकारः । आर्यावृत्तम् ॥ १९ ॥ तत् तस्मात् कारणात् वासवदत्तासंनिधानरूपकारणादित्यर्थः । **वासवदत्ता** । कथमार्यपुत्रः । जयतु जयत्वार्यपुत्रः । अलंकरोत्विमं देशमासनपरिग्रहेण । एतदासनं । अत्रोपविशत्वार्यपुत्रः । इति च्छाया । कथमिति शब्दः संभ्रमे, अकस्माच्छब्दश्रवणेन संभ्रमः । 'कथं प्रश्ने प्रकारार्थे संभ्रमे संभवेऽपि च' इति हेमचंद्रः । अत एव जयतु जयतु इति द्विरुक्तिः, अलंकरोतु भूषयतु 'अलं भूषणपर्ये'ति कोशः । आसनपरिग्रहेण आसनस्वीकारेण 'परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः' इति हैमः । एतदासनमिति अस्तीत्यर्थः । तथा च 'अस्तिर्भवंतीपरोऽप्रयुज्यमानोऽप्यस्ती'ति **महाभाष्यकारः** । आर्यपुत्रेति संबुद्धिः भर्तारं प्रति । प्रमाणं तूक्तं । **कांचनमाला** ।

**वास०**—उवणेहि मे पूओवअरणाइं।

(काञ्चनमाला उपनयति। वासवदत्ता तथा करोति।)

**राजा**—प्रिये,

प्रत्यग्रमज्जनविशेषविविक्तकान्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपिप्रभवा लतेव॥ २०॥

---

१. उपनय मे पूजोपकरणानि।

---

मर्दिनि, स्वहस्तदत्तैः कुसुमकुंकुमचंदनवासोभिः शोभितं रक्ताशोकपादपं गत्वाच्र्यतां भगवान्प्रद्युम्नः। शोभितं रक्ताशोकपादपं गत्वा स्वहस्तदत्तैः कुसुमकुंकुमचंदनवासोभिः भगवान्प्रद्युम्नः अर्च्यतामित्यन्वयः। रक्ताशोकपादपमित्यस्य गंगायां घोष इतिवत् तत्समीपदेशे लक्षणा। दृष्टश्चैवं प्रयोगो लोके 'गच्छत्ययं मार्गो देवदत्तगृहं' इति। शोभितं कृत्वा इति पाठे रक्ताशोकपादपं गत्वा स्वहस्तदत्तैः कुसुमकुंकुमचंदनवासोभिः शोभितं कृत्वा भगवान्प्रद्युम्नः अर्च्यतां इत्यन्वयः। कृत्वेत्यस्यार्थिकं प्रद्युम्नमिति, तत् पक्त्वौदनो भुज्यते इतिवत्। तस्य च शोभितमिति विशेषणं। इदं च सप्रपंचं पूर्वमेव निरूपितं। **वासवदत्ता**। उपनय मे पूजोपकरणानि। तथा करोति। यथावत्पूजयतीत्यर्थः। **राजा**। हे प्रिये दयिते, 'दयितं वल्लभं। प्रियं' इत्यमरः। अत्र वत्सराजेन शृंगारे स्वभार्यां संबोधितत्वात्प्रिये इति संबोधनं 'प्रियेति भार्या शृंगारे वाच्या राज्ञेतरेण वे'ति भरतः। **प्रत्यग्रेति**। त्वं लतेव विभ्राजसे शोभसे इत्यन्वयः। कीदृशी? प्रत्यग्रो नूतनो यो मज्जनविशेषः स्नानविशेषः तेन विविक्ता शुद्धा मूर्तिः शरीरं यस्यास्तादृशी। लतापक्षे, प्रत्यग्रं नूतनं यन्मज्जनं सेचनं उदकेन मूलपूरणमिति यावत्। तेन विशेषतो विविक्ता स्वच्छा मूर्तिर्यस्यास्तादृशी। मूलसेचनेन हि वृक्षस्य शोभाविशेषः (टवटवी इति भाषायां) दृश्यते। कौसुंभेन कुसुंभसंबंधिना 'स्यात्कुसुंभं वह्निशिखं महारजतमित्यपि' इत्यमरः 'तस्येद'-मित्यण्। रागेण लौहित्येन रुचिरः सुंदरः स्फुरन् देदीप्यमानः अंशुकस्य वस्त्रस्यान्तः प्रांतो यस्यास्तादृशी। लतापक्षे। कुसुंभमेव कौसुंभं पुष्पं 'प्रज्ञादित्वात्स्वार्थेऽण्' तद्वद्रागो लौहित्यं तेन रुचिरा चासौ स्फुरद्भिः अंशुभिः किरणैः कांता च रमणीया। मकरकेतनं कामदेवं। 'प्रद्युम्नो मीनकेतनः' इति कोशः। अर्चयंती पूजयंती। लतापक्षे। मकराणां केतनं सदनं 'केतनं सदने चिह्ने' इति हैमः। एवं च मकरकेतनं समुद्रं 'पाथोधिसिंधुमकरालयवारिराशिः' इति त्रिकांडशेषः। अर्चयंती शोभयंती। कथंभूता लता। बालानि नूतनानि प्रवालानि किसलयानि यस्य 'प्रवालोऽस्त्री किसलये वीणादंडे च विद्रुमे' इति मेदिनी। तादृशो यो विटपी वृक्षः सः प्रभवः उत्पत्तिस्थानं यस्यास्तथाभूता। 'प्रभवो जन्मकारणे' इति हैमः। प्रभवत्यस्मिन्निति प्रभवः 'ऋदो-

अपि च ।

स्पृष्टस्त्वयैव दयिते स्मरपूजाव्यापृतेन हस्तेन ।
उद्भिन्नापरमृदुतरकिसलय इव लक्ष्यतेऽशोकः ॥ २१ ॥

उत्प्रेक्षालंकार

अपि च ।

अनङ्गोऽयमनङ्गत्वमद्य निन्दिष्यति ध्रुवम् ।
यदनेन न संप्राप्तः पाणिस्पर्शोत्सवस्तव ॥ २२ ॥

काञ्च०—भट्टिणि, अच्चिदो भअवं पज्जुण्णो । ता करेहि भत्तणो उइदं पूआसक्कारम् ।

वास०—तेणं हि उवणेहि मे कुसुमाइं विलेवणं च ।

---

१. भट्टिनि, अर्चितो भगवान् प्रद्युम्नः । तत्कुरु भर्तुरुचितं पूजासत्कारम् ।
२. तेन ह्युपनय मे कुसुमानि विलेपनं च ।

---

रप्' इत्यनेन अधिकरणे अप् प्रत्ययः । एवंच प्रत्यग्रेत्यादिविशेषणत्रयमुभयसाधारणं । बालेत्यादि लताविशेषणमेव । उपमालंकारः । यद्यपि काव्यप्रकाशे दशमोल्लासे उपमादोषप्रकरणे इदं पद्यमुदाहृत्य 'अत्र लता विभ्राजते नतु विभ्राजसे इति संबोध्यमाननिष्ठस्य परभागस्य असंबोध्यमानविषयतया व्यत्यासात्पुरुषभेदः' एवंच भग्नप्रक्रमतयैवायमर्थो व्याप्त इति काव्यप्रकाशाभिप्रायः, तथापि विभ्राजते इति पाठकल्पने स दोषो नास्ति । विभ्राजते इत्यस्याः क्रियाया भवतीति कर्तृपदमध्याहार्यं । प्रिये, भवती विभ्राजते इत्यन्वयात् । वसंततिलकावृत्तम् ॥ २० ॥ **स्पृष्टेति** । हे दयिते, त्वया स्मरपूजायां, स्मरस्य अशोकमूलस्थापितकामदेवप्रतिमायाः पूजायां अर्चने व्यापृतेन नियुक्तेन हस्तेन स्पृष्ट एव एष समीपतरवर्ती अशोकः । उद्भिन्न उद्भूतः अपरः अन्यः मृदुतरः कोमलतरः एतादृशः किसलयो यस्येति अनेकपदबहुव्रीहिः । तादृशो लक्ष्यते ज्ञायते । उत्प्रेक्षालंकारः । आर्यावृत्तम् ॥ २१ ॥ **अनंगेत्यादि** । अयं सन्निकृष्टः सर्वांतर्गत इत्यर्थः । अनंगः नास्ति अंगं यस्य सः अनंगः कामः । अद्य अस्मिन्नहनि अनंगत्वं अंगरहितत्वं अर्थात् स्वकीयं ध्रुवं निश्चितं निंदिष्यति । यत्, यस्मात् अनेन कामेन तव पाणिस्पर्शः तेन उत्सवः महः, स एव उत्सव इति वा न संप्राप्तः नोपलब्धः । त्र्यंबकभालस्थतृतीयनेत्रोत्पन्नाग्निना कामो दग्ध इति पुराणप्रसिद्धा कथा मदनस्यानंगत्वे हेतुरनुसंधेयः । अत्राप्युत्प्रेक्षालंकारः । अनुष्टुप् वृत्तम् ॥ २२ ॥ **कांचनमाला** । भट्टिनि, अर्चितो भगवान् प्रद्युम्नः । तत्करोतु भर्तुरुचितं पूजासत्कारं । इति च्छाया । पूजासत्कारमिति । पूजायाः सत्कारं, पूजामेव सत्कारमिति वा । **वासवदत्ता** । तेन ह्युपनय मे कुसुमानि विलेपनं च । इति च्छाया । **कांचन-**

काञ्च०—भट्टिणि, एदं सव्वं सज्जम् ।

(वासवदत्ता नाट्येन राजानं पूजयति ।)

साग०—( गृहीतकुसुमा । ) हद्धी हद्धी । कहं कुसुमलोहोक्खित्तहिअआए अदिचिरं ज्जेव मए किदं । ता इमिणा सिंदुवारविडवेण ओवारिअसरीरा भविअ पेक्खामि । ( विलोक्य ) कधं पच्चक्खो ज्जेव अपूव्वो कुसुमाउहो । अम्हाणं तादस्स अन्तेउरे चित्तगदो अच्चीअदि । इह पच्चक्खीकिदो । ता अहं पि इमेहिं कुसुमेहिं इह ट्ठिदा ज्जेव भअवन्तं कुसुमाउहं पूअइस्सं । ( इति कुसुमानि प्रक्षिपति । ) णमो दे भअवं कुसुमाउह, सुभदंसणो मे भविस्ससि । दिट्ठं जं दिट्ठव्वं । अमोघदंसणो मे भविस्ससि । ( इति प्रणमति । ) अच्चरिअं अच्चरिअं । दिट्ठोवि पुणो पेक्खिदव्वो । ता जाव ण कोवि मं पेक्खदि दावज्जेव गमिस्सं । ( इति कतिचित् पदानि गच्छति । )

---

१. भट्टिनि, एतत् सर्वं सज्जम् ।

२. हा धिक् हा धिक् । कथं कुसुमलोभोत्क्षिप्तहृदययातिचिरमेव मया कृतम् । तदनेन सिन्धुवारविटपेनापवारितशरीरा भूत्वा प्रेक्षे । कथं प्रत्यक्ष एवापूर्वः कुसुमायुधः । अस्माकं तातस्यान्तःपुरे चित्रगतोऽर्च्यते । इह प्रत्यक्षीकृतः । तदहमप्येभिः कुसुमैरिह स्थितैव भगवन्तं कुसुमायुधं पूजयिष्ये । नमस्ते भगवन् कुसुमायुध, शुभदर्शनो मे भविष्यसि । दृष्टं यद्द्रष्टव्यम् । अमोघदर्शनो मे भविष्यसि । आश्चर्यमाश्चर्यम् । दृष्टोऽपि पुनः प्रेक्षितव्यः । तद्यावन्न कोऽपि मां प्रेक्षते तावदेव गमिष्यामि ।

---

माला । भट्टिनि, एतत्सर्वं सज्जं । इति च्छाया । सज्जं संभृतं । सागरिका । हा धिक् हा धिक् । कथं कुसुमलोभोत्क्षिप्तहृदययाऽतिचिरमेव मया कृतं, तदनेन सिंधुवारविटपेनापवारितशरीरा भूत्वा प्रेक्षे । कथं प्रत्यक्ष एवापूर्वः कुसुमायुधः । अस्माकं तातस्यांतःपुरे चित्रगतोऽर्च्यते । इह प्रत्यक्षीकृतः । तदहमप्येभिः कुसुमैरिह स्थितैव भगवंतं कुसुमायुधं पूजयिष्ये । नमस्ते भगवन् कुसुमायुध, शुभदर्शनो मे भविष्यसि, दृष्टं यद्द्रष्टव्यं । अमोघदर्शनो मे भविष्यसि । आश्चर्यमाश्चर्यं । दृष्टोऽपि पुनः प्रेक्षितव्यः । तद्यावन्न कोऽपि मां प्रेक्षते तावदेव गमिष्यामि । इति च्छाया । हा धिक् हा धिगिति । दुःखनिर्भर्त्सनाद्योतके अव्यये इमे 'हा विषादशुगर्तिषु' 'धिङ् निर्भर्त्सननिंदने' इत्युभयत्राप्यमरः । संभ्रमे द्विर्वचनं । कथमिति । एतद्विवरणं पूर्वमुक्तं । कुसुमानां यो लोभस्तेन उत्क्षिप्तं ऊर्ध्वीकृतं प्रमादविशिष्टमिति यावत् ।

**काञ्च०**—अंज्ज वसंतअ, एहि संपदं तुमं पि सोत्थिवाअणं पडिच्छेहि ।

(विदूषकः उपसर्पति । )

**वासवदत्ता**—( विलेपनकुसुमाभरणदानपूर्वकम् । ) अज्ज, सोत्थिवाअणं पडिच्छ । ( इत्यर्पयति । )

**विदू०**—( सहर्षं गृहीत्वा । ) [3]सोत्थि भोदीए ।

---

१. आर्य वसन्तक, एहि सांप्रतं त्वमपि स्वस्तिवायनं प्रतीच्छ ।
२. आर्य स्वस्तिवायनं प्रतीच्छ ।
३. स्वस्ति भवत्यै ।

---

हृदयं यस्याः सा । अतिचिरमेव मया कृतं अतिकालो यापित इत्यर्थः । सिंधुवारविटपेन निर्गुंडीवृक्षेण 'सिंधुवारेंद्रसुरसौ निर्गुंडींद्राणिकेत्यपि' इत्यमरः । अपवारितशरीरा पिहितदेहा अलक्ष्येति यावत् । अलक्ष्यत्वे कारणं वासवदत्तायाः क्रोधो माभूदिति । कथं हर्षे । 'कथं हर्षे च गर्हायां' इति मेदिनी । हर्षकारणमपूर्वदर्शनं तदेवाह–प्रत्यक्षेत्यादिना । अपूर्वः । नञर्थः अन्यत्वं । पूर्वस्मादन्य इत्यर्थः । पूर्वः चित्ररूपः, अयं तु प्रत्यक्षः इति पूर्वभिन्नत्वं स्पष्टमेव । तदेवाह–अस्माकमित्यादिना । तातस्य विक्रमबाहोः अंतः अभ्यंतरे पुरं गृहं इत्यंतःपुरं 'पुरं शरीरे नगरे गृहपाटलिपुत्रयोः' इति हैमः । अंतःपुरं स्त्रीगृहं 'स्त्र्यगारं भूभुजामंतःपुरं स्यादवरोधनं' इत्यमरः । चित्रगतः चित्रलिखितः प्रत्यक्षः मूर्तिमान् । नमस्ते इति । 'नमःस्वस्तिस्वाहे'त्यादिना चतुर्थी । शुभदर्शनः कल्याणदर्शनः, अमोघदर्शनः सफलदर्शनः । आभ्यां पदाभ्यां सागरिकाया वत्सराजे रतिर्ध्वन्यते । आश्चर्यमाश्चर्यमिति । अलौकिकलावण्यदर्शनमाश्चर्यकारणं तदेवाह—दृष्टोऽपीत्यादिना । अलौकिकमेवासेचनकं भवतीति तात्पर्यं । कतिचित् पदानीति । एतस्योपपत्तिः पूर्वमेवोक्ता तत एव द्रष्टव्या । अत्र 'कथं प्रत्यक्ष एव' इत्यारभ्य 'कुसुमायुधं पूजयिष्ये' इत्यंतेन वत्सराजस्यानंगरूपतयापह्नवात् अनंगस्य च प्रत्यक्षस्य पूजाग्रहणस्य लोकोत्तरत्वात् अद्भुतरसावेशरूपं परिभावनाख्यं मुखसंधेरंगं । उक्तं च भरतेन 'कुतूहलोत्तरावेशो विज्ञेया परिभावना' इति । **कांचनमाला** । आर्य वसंतक, एहि । सांप्रतं त्वमपि स्वस्तिवायनं प्रतीच्छ । स्वस्ति पुण्याय वायनं स्वस्तिवायनं 'सुप्सुपेति' समासः । अव्ययेभ्यः सर्वविभक्तीनां एकवचनोत्पत्तिरिति मतेन षष्ठ्येकवचनोत्पत्तिसंभवात् अश्वघासादिवत्षष्ठीसमासो वा । पुण्यजनकं वायनमित्यर्थः । 'स्वस्ति स्यान्मंगले पुण्ये' इति मेदिनी । स्वस्तिशब्दोऽनव्ययमपीति'नमःस्वस्ती'ति सूत्रे **शब्देन्दुशेखरे** तदा षष्ठीसमासः सुलभ एव । प्रतीच्छ गृहाण । वसंतकस्य ब्राह्मणत्वादार्येति संबुद्धिः । 'आर्येति ब्राह्मणं ब्रूयात्' इति भरतः । **वासवदत्ता** । आर्य, स्वस्तिवायनं प्रतीच्छ । इति च्छाया । **विदूषकः** ।

(नेपथ्ये वैतालिकः पठति ।)

अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा-
वास्थानीं समये समं नृपजनः सायंतने संपतन् ।
संप्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ॥ २३ ॥

**साग०**—(श्रुत्वा सहर्षं परिवृत्य राजानं दृष्ट्वा सस्पृहम् ।) कहं अअं सो राआ उदअणो जस्स अहं तादेण दिण्णा । ता परप्पेसणकरिसिदं वि

---

१. कथमयं स राजा उदयनो यस्याहं तातेन दत्ता । तत्परप्रेषणकृशमपि

---

स्वस्ति भवत्यै । इति च्छाया । वैतालिक इति । विविधश्चासौ तालः करास्फोटश्च, कालक्रियामानं वा वितालः । 'तालः कालक्रियामाने हस्तमानद्रुमेदयोः । करास्फोटे करतले' इति हैमः । तेन चरतीत्यर्थे 'चरती'त्यनेन ठक् । गीतकालक्रियामानं हि गायनलोकेषु तालत्वेन प्रसिद्धं । **अस्तेत्यादि** । अस्ते अस्ताचले अपास्ताः निक्षिप्ताः समस्ताः निखिलाः भासः मयूखाः येन सः । तादृशे रवौ सूर्ये नभसः आकाशस्य पारं प्रांतं 'पारं प्रांते परतटे' इति हेमचंद्रः । प्रयाते प्राप्ते सति । सायंतने सायंभवे 'सायंचिर'मित्यादिना ट्युप्रत्ययस्तुडागमश्च । समये काले आस्थानीं, आतिष्ठन्त्यस्या-मित्यास्थानी राजसभा । आङ्पूर्वकात्तिष्ठतेः 'करणाधिकरणयोश्चे'ति ल्युट् टित्वान्ङीप् । 'आस्थानी क्लीबमास्थानं' इत्यमरः । तां समं साकं एककाले इति भावः । संपतन् संप्राप्नुवन् एषः पुरोवर्ती नृपजनः राजकं संप्रति अधुना दृशां नेत्राणां प्रीत्युत्कर्ष-कृतः, प्रीतेः आनंदस्य उत्कर्षः अतिशयः तं करोति तादृशस्य । सुप्युपपदे 'क्विप्चे'ति क्विप् । उत् ऊर्ध्वभागे अयनं गतिः यस्य उदयमानस्येति यावत् । इंदोः चंद्रस्य चंद्रदर्शनेन दृगाह्लादो भवतीति लोकेऽनुभवसिद्धं । सरोरुहाणां सूर्यविकासिकम-लानां द्युतिं कांतिं मुष्णंति हरंति तान् 'मुष स्तेये' क्विप् । पादानिव रश्मीन् इव 'पादा रश्म्यंघ्रितुर्यांशा' इत्यमरः । दृशां प्रीत्युत्कर्षकृतः सम्यक्प्रजापरिपालनेन प्रजा-नेत्रानंदजनकस्येत्यर्थः । उदयनस्य वत्सेश्वरस्य तव सरोरुहद्युतिमुषः पादान् कम-लवच्छोभाजनकानित्यर्थः । गुरवः समागता इतिवदादराद्बहुवचनं । आसेवितुं उद्वी-क्षते । उन्नमिताननः सन् प्रेक्षते इति यावत् । अस्य नृपजन इति कर्ता । अत्रो-पमालंकारः श्लेषश्च । स्तस्त इति सकारतकाराणां वारंवारमुच्चारणादनुप्रासः शब्दा-लंकारः । शार्दूलविक्रीडितं वृत्तं । अत्र वैतालिकमुखेन चंद्रतुल्यवत्सराजगुणवर्ण-नया सागरिकायाः समागमहेत्वनुरागबीजानुगुण्येनैव विलोभनात् विलोभनं नाम मुखसंधेरंगं । तल्लक्षणं 'गुणनिर्वर्णनं चैव विलोभनमिति स्मृतं' इति । किंच वत्स-राजस्य कुसुमायुधव्यपदेशगूढस्य वैतालिकवचसा 'अस्तापास्ते'त्यादिना उदयन-स्येत्यंतेन बीजानुगुण्येनैव उद्भेदनात् उद्भेदोनाम मुखसंधेरंगं । यदाह भरतः 'बीजा-र्थस्य प्ररोहो यः स उद्भेद इति स्मृतः' इति ॥ २३ ॥ **सागरिका** । कथमयं स

मे सरीरं एदस्स दंसणेण दाणीं वहुमदं संवुत्तम् ।

**राजा**—कथमुत्सवापहृतचेतोभिरस्माभिः सन्ध्यातिक्रमोऽपि नोपलक्षितः । देवि, पश्य ।

उदयतटान्तरितमियं प्राची सूचयति दिङ् निशानाथम् ।
परिपाण्डुना मुखेन प्रियमिव हृदयस्थितं रमणी ॥ २४ ॥

देवि, तदुत्तिष्ठावः । आवासाभ्यन्तरमेव प्रविशावः ।

( सर्वे उत्थाय परिक्रामंति । )

**साग०**—कधं पत्थिदा देवी । भोदु । तुरीअं गमिस्सं । ( राजानं सस्पृहं दृष्ट्वा निःश्वस्य । ) हद्धी मन्दभाइणीए मए पेक्खिदुं वि चिरं ण पारिदो अअं जणो ।

( इति निष्क्रान्ता । )

---

मे शरीरमेतस्य दर्शनेनेदानीं वहुमतं संवृत्तम् ।

१. कथं प्रस्थिता देवी । भवतु । त्वरितं गमिष्यामि । हा धिक् । मन्दभागिन्या मया प्रेक्षितुमपि चिरं न पारितोऽयं जनः ।

---

राजा उदयनो यस्याहं तातेन दत्ता । तत्परप्रेषणकृशमपि मे शरीरं एतस्य दर्शनेनेदानीं वहुमतं संवृत्तम् । इति च्छाया । सहर्षमिति । हर्षकारणं अनुपदमेव स्पष्टं तद्वाक्येन भविष्यति । सस्पृहमिति स्पृहापि तत एव हेतोः । तदेवाह—कथमित्यादिना । परप्रेषणं, परस्य कर्तुः प्रेषणं प्रेरणं पराज्ञाकारित्वमिति यावत् । तेन कृशं । वहुमतं वहुमान्यं । संवृत्तं निष्पन्नं । अत्र सागरिकायाः सुखागमात्प्राप्तिरूपं मुखसंधेरंगं । तदुक्तं 'सुखार्थस्याभिगमनं प्राप्तिरित्यभिधीयते' इति । **राजा** । कथं संभ्रमे । उत्सवापहृतचेतोभिः वसंतोत्सवप्रेक्षणासक्तमनोभिः, संध्यातिक्रमः सायंसंध्यातिक्रमणं । अपिः समुच्चायकः । तेन इतरकार्याणां विस्मरणेऽपि तत्कालावश्यविहितसंध्याया विस्मरणं नोचितं, तदपि जातं इति स्वधर्मापराधभीतिः सूचिता । तेन च राज्ञो धार्मिकत्वं ध्वन्यते । **उदयेत्यादि** । रमणी विरहविक्लवा कामिनी परिपांडुना मुखेन म्लानवदनेन हृदयस्थितं प्रियं वल्लभमिव इयं प्राची पूर्वा दिक् परिपांडुना क्षिप्रमुदेष्यद्रजनीवल्लभप्रकाशशुभ्रेण मुखेन उदयगिरेः तटेन वप्रेण अंतरितं आच्छन्नं निशानाथं चंद्रमसं सूचयति । उपमालंकारः । आर्या वृत्तम् ॥ २४ ॥ तत्तस्मात्कारणात् संध्याकालातिक्रमभीतेः । आवासाभ्यंतरमेव गृहांतर्भागे एव । **सागरिका** । कथं प्रस्थिता देवी । भवतु । त्वरितं गमिष्यामि । हा धिक् । मंदभागिन्या मया प्रेक्षितुमपि चिरं न पारितोऽयं जनः । इति च्छाया । त्वरितं गमिष्यामीति एतावत्कालपर्यन्तं स्थित्वा देवीक्रोधभीतेस्त्वरितगमनं । जनः

राजा—( परिक्रामन् । )

देवि त्वन्मुखपङ्कजेन शशिनः शोभातिरस्कारिणा
पश्याब्जानि विनिर्जितानि सहसा गच्छन्ति विच्छायताम् ।
श्रुत्वा ते परिवारवारवनितागीतानि भृङ्गाङ्गनाः
लीयन्ते मुकुलान्तरेषु शनकैः संजातलज्जा इव ॥ २५ ॥

( इति निष्क्रान्ताः सर्वे । )

## इति मदनमहोत्सवो नाम प्रथमोऽङ्कः ।

उदयनरूपः । **राजा** । देवि हे दयिते, 'देवी कृताभिषेकायां' इत्यमरः । पश्य । किं पश्येत्याकांक्षायामाह—शशिनः मृगांकस्य 'अत इनिठनौ' इति मत्वर्थे इनिः । शोभातिरस्कारिणा, शोभां कांतिं तिरस्करोति अधःकरोति तेन । 'सुप्यजातौ'विति णिनिः । तव मुखं तदेव पंकजं कमलं तेन विनिर्जितानि अब्जानि सहसा अकस्मात् 'अतर्किते तु सहसा' इत्यमरः । विगता छाया शोभा येषां तानि विच्छायानि तेषां भावः विच्छायतां कांतिहीनतां 'छाया सूर्यप्रिया कांतिः प्रतिबिंबमनातपः' इत्यमरः । गच्छंति, कांतिहीनानि भवंतीत्यर्थः । तथा ते तव परिवाराश्च ता वारवनिताश्च तासां, परिजनगणिकानामित्यर्थः । गीतानि गेयानि श्रुत्वा आकर्ण्य भृंगांगनाः मधुकर्यः, संजाता उत्पन्ना लज्जा त्रपा यासां ताः तादृश्य इव । वारयुवतीगीतस्य मनोहारितरत्वेन पराजिता इवेति भावः । शनकैः मंदं 'अद्रुते शनैः' इत्यमरः । 'अव्ययसर्वनाम्ना'मित्यकच् । मुकुलांतरेषु कुड्मलमध्यभागेषु लीयंते, पंकजाभ्यंतराणि समाश्रयंते इत्यर्थः । अत्र प्रतीपहेत्वलंकारोत्प्रेक्षाणामंगांगिभावः संकरः । तदुक्तं 'प्रतीपमुपमानस्योपमेयत्वप्रकल्पनं' 'हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते' इति । उत्प्रेक्षालक्षणं प्रागुक्तं । शार्दूलविक्रीडितं छंदः। लक्षणं पूर्वमुक्तं ॥२५॥ निष्क्रान्ताः सर्वे । तदुक्तं दशरूपके 'एकाहाचरितैकार्थमित्थमासन्ननायकं । पात्रैस्त्रिचतुरैरंकं तेषामंतेऽस्य निर्गमः' इति । भरतेऽपि 'रंगं तु ये प्रविष्टाः सर्वेषां भवति तत्र निष्कामः । बीजार्थयुक्तमुक्तं कृत्वा कार्यं यथार्थरसं' इति । अंक इति । एतल्लक्षणमपि तत्रैव 'अंक इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान् । नानाविधानयुक्तो यस्मात्तस्माद्भवेदंकः ॥ यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः । किंचिदवलग्नबिंदुः सोऽङ्क इति सदावगंतव्यः ॥ ये नायका निगदितास्तेषां प्रत्यक्षचरितसंयोगः । नानावस्थांतरितः कार्यस्त्वंको विकृष्टस्तु' इति ।

इति श्रीच्युतमहामहोपाध्यायपदव्यलंकृतपंडितप्रकांडश्री**करहाटकरो**पनामक **श्रीमद्गोपालाचार्यां**तेवासिना **निगुडकरो**पाभिधेन **दत्तात्रेयापरनामकेन नारायणशर्मणा** विरचितायां **प्रभाख्यरत्नावलीटीकायां मदनमहोत्सवो** नाम **प्रथमोऽङ्कः** समाप्तः ॥

# द्वितीयोऽङ्कः ।

( ततः प्रविशति सारिकापञ्जरव्यग्रहस्ता सुसङ्गता । )

**सुसङ्गता**—हंद्धी हद्धी । अह कहिं दाणिं मम हत्थे इमं सारिअं णिक्खिविअ गदा मे पिअसही साअरिआ । ता कहिं पुण एणां पेक्खिस्सं । ( अन्यतो दृष्ट्वा ) कहं एसा खु णिउणिआ इदो जेव आअच्छदि । ता जाव एदं पुच्छिस्सं ।

( ततः प्रविशति निपुणिका । )

**निपुणिका**—[ ( सविस्मयम् ) अच्चरिअं अच्चरिअं । अणण्णसदिसो

---

१. हा धिक् हा धिक् । अथ कुत्रेदानीं मम हस्त इमां सारिकां निक्षिप्य गता मे प्रियसखी सागरिका । तत्कुत्र पुनरेनां प्रेक्षिष्ये । कथमेषा खलु निपुणिका इत एवागच्छति । तद्यावदेनां प्रक्ष्यामि ।

२. [आश्चर्यम् आश्चर्यम् । अनन्यसदृशप्रभावो मन्ये देवतायाः ।] उपलब्धः

---

श्रीमद्गोपालकृष्णाय नमः ॥ अथेदानीं द्वितीयांक आरभ्यते । तत्र तावत्पूर्वांकशेषे मदनोत्सवे मकरंदोद्यानं प्राप्ते वत्सराजे सागरिकायास्तद्दर्शनेन रत्याविर्भावः प्रतिपादितः । तमेव रत्याख्यं स्थायिभावं विभावानुभावादिभिः पोषयितुं तस्य स्थायिनो रसस्वरूपतां प्रापयितुं च द्वितीयाद्यंका आरब्धव्याः । तत्र द्वितीयांके असूचितपात्रप्रवेशस्य निषेधात् सागरिकाख्यमुख्यनायिकाप्रवेशसूचनाय प्रवेशकमारभते—**ततः प्रविशतीत्यादिना** । ततः आदौ अंकादावित्यर्थः । आद्यर्थे रूढोऽयं 'तत आदौ कथांतरे' इति हेमचंद्रः । अथवा तत इति तच्छब्दात्पंचम्यंतात्तसिल् उत्तरेति दिक्शब्दयोगे चेयं पंचमी, तथा च प्रथमांके सर्वनिष्क्रमणमुक्तं तदनंतरमित्यर्थः । तत उत्तरमिति वाक्यार्थे तत इति वाक्यैकदेशप्रयोगः प्रविश पिंडीमितिवत् । उत्तरमित्यस्य दिक्शब्दत्वं च दिशि दृष्टत्वेनापीति स्पष्टं सिद्धांतकौमुद्यां । सारिकायाः चित्राक्ष्याः ( साळुंकी इति भाषायां ) 'चित्राक्षी शारिकावचंडाच' इति त्रिकांडशेषः । पंजरे व्यग्रः व्यासक्तः 'व्यग्रो व्यासक्त आकुले' इत्यमरः । हस्तो यस्याः सा एतादृशी सुसंगता सुसंगतानाम्नी सागरिकायाः सखी प्रविशतीत्यन्वयः । हा धिक् हा धिगिति विषादनिंदाद्योतके अव्यये । विषादकारणं तु सारिकारक्षणक्लेशः । तदेवाह—**अथेत्यादिना** । अथेति संशयद्योतकं गमनविषयकसंशयः । 'अथ समुच्चये । मंगले संशयारंभाधिकारानंतरेषु च' इति हैमः । अन्यत इति अन्यत्रेत्यर्थः । 'इतराभ्योऽपि दृश्यंते' इति सप्तम्यंतात्तसिल् । अन्यतो दृष्ट्वा आहेति शेषः । तेन क्त्वाप्रत्ययोपपत्तिः । अग्रत इति पाठांतरं । अग्रभागे इत्यर्थः । उक्तवत्तसिल् । यदाह तद्दर्शयति—**एषेत्यादि** । खल्विति वाक्यालंकारे । निपुणिका एतन्नाम्नी वासवदत्ताया दासी इत एव अत्रैव देशे । यावदिति वाक्यालंकारे । प्रक्ष्यामि प्रच्छ ज्ञीप्सायां लृट् । ततः सुसंगताभाषणोत्तरं । **निपुणिका**—भर्तुः उदयनस्य वृत्तस्य चरित्रस्य अंतःस्वरूपं 'वृत्तं चरित्रे' इत्यमरः ॥

पज्जावो मण्णे देवदाए।] उवलद्धो खु मए भत्तुणो वुत्तंतो। ता गदुअ भट्टिणीए णिवेदइस्सं। (इति परिक्रामति।)

सुसंगता—(उपसृत्य।) हला णिउणिए, कहिं दाणिं विम्हओक्खित्तहिअआ विअ इहट्ठिदं मं अवहीरिअ कुदो अदिक्कामसि।

निपुणिका—कहं सुसंगदा। हला सुसंगदे, सुट्ठु तुए जाणिदं। एदं खु मम विम्हअस्स काअणं। अज्ज किल भट्टा सिरिपव्वदादो आअदस्स सिरिकंठदासणामधेअस्स धम्मिअस्स सआसादो अआलकुसुमसंजणणदोहअं सिक्खिअ अत्तणो पडिग्गहिदं णोमालिअं कुसुमसमिद्धि-

खलु मया भर्तुर्वृत्तान्तः। तद्गत्वा भट्टिन्यै निवेदयिष्यामि।

१. हला निपुणिके, कुत्रेदानीं विस्मयोत्क्षिप्तहृदयेवेह स्थितां मामवधीर्य कुतोऽतिक्रामसि।

२. कथं सुसङ्गता। हला सुसङ्गते, सुष्ठु त्वया ज्ञातम्। एतत्खलु मम विस्मयस्य कारणम्। अद्य किल भर्त्रा श्रीपर्वतादागतस्य श्रीकण्ठदासनामधेयस्य धार्मिकस्य सकाशादकालकुसुमसञ्जननदोहदं शिक्षित्वाऽऽत्मनः परिगृहीतां नव-

'अंतः स्वरूपे नाशेऽपि' इति मेदिनी। उपलब्धः ज्ञातः तत् तस्मात् भर्तृवृत्तांतज्ञानकारणात्। यद्वा तदिति सामान्ये नपुंसकं। एवं च तमित्यर्थः। भट्टिन्यै वासवदत्तायै। **सुसंगता**—कुत्रेति सप्तम्यास्त्रल्, 'कु तिहोः' इति क्वादेशः। विस्मयेन आश्चर्येण 'विस्मयोऽद्भुतमाश्चर्यं' इत्यमरः। उत्क्षिप्तं ऊर्ध्वीकृतं उद्भ्रांतमिति यावत्। हृदयं चित्तं यस्याः सा 'चित्तं तु चेतो हृदयं' इत्यमरः। सुसंगताया विस्मयकारणानवगमात् विस्मयजन्यकार्यस्य सत्वरगमनादेर्दृष्टत्वाच्च इवशब्दप्रयोगः। तदेव विस्मयोद्भ्रांतहृदयकार्यं दर्शयति—इह स्थितामित्यादिना। अवधीर्य तिरस्कृत्य। अत्रावधीरणं निकटगमनेऽपि भाषणाद्यभावः। कुत इति किंशब्दात्सप्तम्यंतात्तसिल्, कुत्रेत्यर्थः। अतिक्रामसि गच्छसि। **निपुणिका**—सुसंगतया एवं पृष्टा निपुणिका तां प्रत्यभिज्ञातवतीत्याह—**कथमित्यादिना**। कथमत्र संभ्रमे 'कथं हर्षे च गर्हायां प्रकारार्थे च संभ्रमे' इति मेदिनी। सुष्ठु त्वया ज्ञातमिति। त्वया ज्ञातं तत्सुष्ठु प्रशस्तं। संभ्रमरूपकार्येण कारणस्य विस्मयस्य अनुमानरूपं ज्ञानं सत्यमित्यर्थः। तत्र तावद्विस्मयस्य कारणं कथयति—**एतदित्यादिना**। खलु निश्चये। किलेति वार्तायां 'वार्तासंभाव्ययोः किल' इत्यमरः। श्रीकंठदास इति नामधेयं आख्या यस्य एतादृशस्य धार्मिकस्य साधोः। धर्मं चरतीति धार्मिकः तस्य। 'धर्मं चरति' इति ठक्। अकाले अन्यकाले तदन्यत्वं नञोऽर्थः। येषां कुसुमानां य उत्पत्तिकालः तदन्यस्मिन्काले इत्यर्थः। यत्कुसुमानां पुष्पाणां संजननं उत्पादनं तस्य दोहदं कारकं 'अथ दोहदं। इच्छाऽऽकांक्षा'

सोहिअं करिस्सदित्ति तहिं एदं वुत्तंतं जाणिदुं देवीए पेसिदम्हि। तुमं उण कहिं पत्थिदा।

**सुसङ्गता**—पिअसहीं साअरिआं अण्णेसिदुं।

**निपुणिका**—सहि, दिट्ठा मए दे पिअसही साअरिआ। गहिदसमुग्गअचित्तफलअवट्टिआ समुव्विग्गा विअ कअलीघरं पविसंती। ता गच्छ पिअसहीं। अहं वि देवीसआसं गमिस्सं।

(इति निष्क्रान्ते।)

इति प्रवेशकः।

---

मालिकां कुसुमसमृद्धिशोभितां करिष्यतीति। तत्रैतद्वृत्तान्तं ज्ञातुं देव्या प्रेषितास्मि। त्वं पुनः कुत्र प्रस्थिता।

१. प्रियसखीं सागरिकामन्वेषितुम्।

२. सखि, दृष्टा मया ते प्रियसखी सागरिका गृहीतसमुद्गकचित्रफलकवर्तिका समुद्विग्नेव कदलीगृहं प्रविशन्ती। तद्गच्छ प्रियसखीम्। अहमपि देवीसकाशं गमिष्यामि।

---

इत्यमरेण सामान्ये इच्छावाच्यप्ययं शब्दो लक्षणया कारक इत्यस्मिन्नर्थे कविना प्रयुक्त इति भाति। यद्वा कुसुमसंजननस्य यो दोहः पूरणं तं ददाति इति 'आतोऽनुपसर्गे कः' इति कप्रत्यय इति सिद्धस्य गतिरियं। एतादृशं मणिमंत्राद्युपायमिति शेषः। आत्मनः परिगृहीतां आत्मन इति संबंधसामान्ये षष्ठी, कर्तृकर्मणोरिति तु न 'न लोके'ति निषेधात्। नवमालिकामिति 'पूर्वकालैके'ति समासः। कुसुमानां समृद्धिः अतिशयः तया शोभिता। तत्र राजनिकटे, एतद्वृत्तांतमिति। एष चासौ वृत्तांतश्चेति कर्मधारयः। देव्या वासवदत्तया प्रेषितास्मि प्रेरितास्मि। प्रस्थिता कृतप्रस्थानारंभा प्रस्थितेत्यत्र आदिकर्मणि कर्तरि क्तः। **सुसंगता**—अन्वेषितुं मार्गितुं। **निपुणिका**—गृहीतः समुद्गकः संपुटकः 'समुद्गकः संपुटकः' इत्यमरः। मषीपात्रमिति यावत्। चित्रफलकं चित्रलेखनयोग्यफलिका वर्तिका लेखनी च यया सा। समुद्विग्नेव उद्वेगकारणाज्ञानात् इवशब्दप्रयोगः। तच्च कारणमग्रे स्पष्टं भविष्यति। कदलीगृहं गृहाकारकदलीवनमित्यर्थः। प्रियसखीं सागरिकां द्रष्टुमिति शेषः। देवीसकाशं वासवदत्तानिकटं। **इति प्रवेशक इति**। एतल्लक्षणं दशरूपके। तत्र तावत् 'नीरसोऽनुचितस्तत्र संसूच्यो वस्तुविस्तरः' इत्यनेन सूच्यवस्तु निरूप्य तन्निरूपणप्रकारं 'अर्थोपक्षेपकैः सूच्यं पंचभिः प्रतिपादयेत्। विष्कंभचूलिकांकास्यांकावतारप्रवेशकैः' इत्यादिनाऽऽह। तत्र प्रायो विष्कंभसदृश एव प्रवेशकः तदपि तत्रैव 'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः। संक्षेपार्थस्तु विष्कंभो मध्यपात्रप्रयोजितः' इति विष्कं-

(ततः प्रविशति गृहीतचित्रफलकवर्तिका मदनावस्थां नाटयन्ती सागरिका)

**सागरिका**—हिअअ, पसीद पसीद । किं इमिणा आआसमत्तफलएण दुल्लहजणप्पत्थणाणुवंधेण । अण्णं च जेव एव्व दिट्ठेण दे ईदिसो संदावो णं वड्ढदि । (सविस्मयम्) पुणोवि तं जेव्व पेक्खिदुं अहिलससित्ति अहो दे मूढदा । अइ णिसंस हिअअ, जम्मदो पहुदि सह संवड्ढिअं इमं जणं परिहरिअ क्खणमत्तदंसणपरिचिदं जणं अणु-

१. हृदय, प्रसीद प्रसीद । किममुनायासमात्रफलकेन दुर्लभजनप्रार्थनानुबन्धेन । अन्यच्च । येनैव दृष्टेन त ईदृशः सन्तापो ननु वर्धते । पुनरपि तमेव प्रेक्षितुमभिलषसीत्यहो ते मूढता । अयि नृशंस हृदय, जन्मतः प्रभृति सह संवर्ध्येमं जनं परिहृत्य क्षणमात्रदर्शनपरिचितं जनमनु-

भलक्षणमुक्त्वा 'तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः । प्रवेशोऽङ्कद्वयस्यांतः शेषार्थस्योपसूचकः' इति विष्कंभलक्षणापवादकत्वेन प्रवेशकलक्षणं दर्शितं । प्रकृते द्वाभ्यां नीचपात्राभ्यां प्रयोजितः । भरतोऽप्याह—'नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः । प्राकृतभाषाकारः प्रवेशको नाम विज्ञेय' इति । एवं प्रवेशकेन सूचितप्रवेशा सागरिका प्रविशतीत्याह—**ततः प्रविशतीत्यादिना** । ततः सुसंगतानिपुणिकानिष्क्रमणानंतरं । गृहीते चित्रफलकवर्तिके यया एतादृशी । **सागरिका** । प्रसीद प्रसीदेति 'नित्यवीप्सयोः' इत्यनेन आभीक्ष्ण्ये द्वित्वं । तादृशप्रेयसि उत्कटेन प्रेम्णा संभ्रांतमपि पुनः पुनः विवेकेन धीरं भवेति तात्पर्यं । तदेवाह—**किममुनेत्यादिना** । आयास एव खेद एव आयासमात्रं मयूरव्यंसकादित्वात्समासः । आयासमात्रं फलं यस्य शैषिकः कप् । एतादृशेन दुर्लभः दुष्प्रापः यो जनः उदयनरूपः तस्य प्रार्थनाया अनुबंधः अनुवर्तनं तेन । प्रार्थनाग्रहेणेति यावत् 'अनुबंधः स्यात्प्रकृत्यादिविनश्वरे । मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने' इत्यमरः । किं क उपयोग इत्यर्थः । गम्यमानक्रियानिमित्ता तृतीया । अन्यच्च दुर्लभजनप्रार्थनाग्रहाभावे अन्यदपि कारणमस्तीत्यर्थः । तदेवाह—येनेत्यादिना । दृष्टेनैव येनेत्यन्वयः । दृष्टेनैव ननु संलापादिना इति एवकारव्यावर्त्यं । ईदृशः निर्वक्तुमशक्यः अतिशयित इति यावत् । ननु प्रश्ने 'प्रश्नावधारणानुज्ञानुनयामंत्रणे ननु' इत्यमरः । स च आदावेव अन्वेतव्यः । एवं च ननु दृष्टेनैव येनेत्यादि वाक्यार्थः पर्यवसन्नः । **सविस्मयमिति** । विस्मयलक्षणं तु 'विस्फारश्चेतसो यस्तु स विस्मय उदाहृतः' इति । पुनरपि एकवारं यद्दर्शनेन एतादृशं संतापमनुभवसि पुनरपि तमेव प्रेक्षितुं अवलोकितुं अभिलषसि इच्छसि इत्याश्चर्यमित्याह—**अहो ते इत्यादि** । मूढता आश्चर्यविषय इत्यर्थः । अहो इति आश्चर्ये । अयीत्यनुनये 'अयि प्रश्नानुनययोः' इति मेदिनी । नृशंस घातुक 'नृशंसो घातुकः क्रूरः' इत्यमरः । अत्र घातुकत्वं विश्वासघातकत्वेन तदेवाह—**जन्मत इत्यादिना** । जन्मतः प्रभृतीति पंचमी 'कार्तिक्याः प्रभृतीति' भाष्यप्रयोगात् प्रभृतिशब्दयोगे । संवर्ध्येति वृधधातोर्णिजंतात्क्त्वो ल्यप् । प्रेषणात्यागश्च । अथवा भाषार्थकचौरादिक-

गच्छंतो कधं ण लज्जेसि । अहवा को तुह दोसो । अणंगसरपडण-भीदेण तुए एव्वं अज्ज ववसिदं । होदु अणंगं दाव उवालहिस्सं । ( सास्रम् अञ्जलिं बध्वा जानुभ्यां स्थित्वा ) भअवं कुसुमाउह, णिज्जिदसअल-सुरासुरो भवीअ कहं इत्थिआजणं पहरंतो ण लज्जेसि । ( विचिंत्य ) । अहवा अणंगो सि सव्वधा मम मंदभाइणीए इमिणा दुण्णिमित्तेण अवस्सं मरणं जेव्व उवट्ठिदं ( फलकमवलोक्य ) । ताजाव इह कोवि ण

---

गच्छत् कथं न लज्जसे । अथवा कस्तव दोषः । अनङ्गशरपतनभीतेन त्वयैव-मद्य व्यवसितम् । भवतु अनङ्गं तावदुपालप्स्ये । भगवन् कुसुमायुध, निर्जित-सकलसुरासुरो भूत्वा कथं स्त्रीजनं प्रहरन् न लज्जसे । अथवानङ्गोऽसि । सर्वथा मम मन्दभागिन्या अनेन दुर्निमित्तेनावश्यं मरणमेवोपस्थितम् । तद्यावदिह

---

वृधधातोः स्वार्थिकणिजंतात्क्त्वो ल्यप् । अस्मिन् कल्पे धातूनामनेकार्थत्वाद्वृध्यर्थत्वं । सर्वथा संवर्ध्येत्यस्य वृद्धिं गत्वेत्यर्थः । संवर्धितमितिपाठेऽपि ईदृगेव वृद्धिंगतमित्यर्थः । इमं जनमित्यत्र सहयोगे तृतीया तु न भवति परिहारक्रियानिरूपितकर्मत्वात् । कारकविभक्तेर्बलीयस्त्वाच्च । सहार्थसाहित्यान्वयस्तु अर्थप्राप्तेन अनेन जनेने-त्यनेन । इमं जनमिति । सागरिकारूपजनमित्यर्थः । क्षणमात्रं यत् दर्शनं अवलोकनं 'अत्यंतसंयोगे च' इति समासः । तेन परिचितं संस्तुतं 'संस्तवः स्यात्प-रिचयः' इत्यमरः । कथं न लज्जसे इति । आजन्मसंस्तुतं जनं परित्यज्य क्षणमा-त्रावलोकनपरिचितजनानुगमनं विचारशीलस्य तव लज्जावहमित्यर्थः । वस्तुतस्तु 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इति श्रुत्या नायं तव दोष इत्याह—**अथ-वेत्यादिना** । कस्तव दोष इति । तव कोऽपि दोषो नास्तीत्यर्थः । यतः अनंगस्य मदनस्य ये शराः बाणाः तेषां यत्पतनं तस्माद्भीतेन त्रस्तेन व्यवसितं निश्चितं एतस्य कर्म क्षणदर्शनपरिचितजनानुगमनं उपक्रांतं द्रष्टव्यं । मयि स्थितौ मदनबाण-पातेन तवापि वेधः स्यात् इति प्रियजनमनोजिगमिषा तवेति भावः । अत आत्म-त्राणे यतमानस्य तव दोषाभावात् एतादृशावस्थाकारणं मदनबाण एव अतस्तदुपालं-भनमुचितमित्याह—**भवत्वित्यादिना** । उपालप्स्ये क्रोधपूर्वकं दोषान् प्रतिपाद-यिष्ये । सास्रमिति अंजलिबंधक्रियाया विशेषणं, एवं च अश्रुपतनसमकालं अंजलिं बध्वेत्यर्थः । भगवन् ब्रह्मशंकरादीनपि स्वाधीनीकृतत्वात् भगवत्त्वं । कुसुमायुध अनेन कर्तुमकर्तुमन्यथाकर्तुं शक्तिर्बोधिता । निर्जिताः सकलाः सुरासुराः देवदैत्या येन, अनेन शौर्यबलधैर्यादिगुणवत्त्वं दर्शितं । **स्त्रीजनमिति** । अनेन शूरैः स्त्रीषु न प्रहर्तव्यं इति नीतिरुद्भाविता भवति । एवं च नीतिविरुद्धाचरणं तव लज्जावहमित्याह **प्रहरन् कथं न लज्जसे इति** । विचिंत्येति एतादृशो महानपि कथमिदं स्त्रीप्रहाररूपं जुगुप्सितं कृतवानिति चिंता । पक्षांतरेण युक्तत्वं समर्थयति—**अथवेत्यादिना** । अनंगत्वेन अंतःकरणराहित्यात् युक्तायुक्तज्ञानाभाव उचित एवेति भावः । सर्वथा सर्वप्रकारेण मंदः भागो भाग्यं सोऽस्या अस्तीति मंदभागिनी 'भागो रूपार्धके भाग्ये-

आअच्छदि दाव जेव आलेक्खसमप्पिदं तं अभिमदं जणं पेक्खिअ जहा समीहिदं करिस्सं। (सावष्टम्भमेकमना भूत्वा नाट्येन फलकं गृहीत्वा निःश्वस्य)। जइ वि मे अदिसद्धसेण वेवदि अअं अतिमत्तं अग्गहत्थो तहा वि तस्स जणस्स अण्णो दंसणउवाओ णत्थिचि। ता जहा तहा आलिहिअ णं पेक्खिस्सं। (इति नाट्येन लिखति)।

---

कोऽपि न आगच्छति तावदेवालेख्यसमर्पितं तमभिमतं जनं प्रेक्ष्य यथा समीहितं करिष्यामि। यद्यपि मे अतिसाध्वसेन वेपतेऽयमतिमात्रमग्रहस्तस्तथापि तस्य जनस्यान्यदर्शनोपायो नास्तीति। तद्यथातथाऽऽलिख्यैनं प्रेक्षिष्ये।

---

कदेशयोः' इति मेदिनी। लाघवमूलको न कर्मधारयादिति निषेधस्तु न 'असुव्वतः' इति भाष्यप्रयोगेण क्वचिल्लाघवानादरस्य सूचितत्वात्। एवं च मंदभाग्याया इत्यर्थः। दुर्निमित्तेन त्वदीयबाणप्रहाररूपदुर्निमित्तेन उपस्थितं समीपं प्राप्तं। **तदिति**। मरणस्य समीपमुपस्थितत्वात्। **यावदिहेति**। अत्र यावत्तावच्छब्दौ अवधौ वर्तेते। आलेख्यसमर्पितं चित्रलिखितं अभिमतमिष्टं जनं वत्सराजरूपं यथासमीहितं समीहितं अभीष्टं अनतिक्रम्य वर्तते इति यथासमीहितं यथेच्छावलोकनमिति यावत्। सावष्टंभं साश्रयं शरीरस्थैर्यार्थं स्तंभाद्याश्रयसहितमित्यर्थः। एकमनाः एकस्मिन् विषये मनो यस्याः सा एकमनाः एकाग्रचित्ता इत्यर्थः। नाट्येन फलकं गृहीत्वेति फलकग्रहणं नाटयित्वेत्यर्थः। **निःश्वस्येति**। अनेन दूनमनस्त्वं ध्वनितं। अतिसाध्वसेन अतिभयेन 'भीतिर्भीः साध्वसं भयं' इत्यमरः। प्रियस्य चित्रलेखनं कोऽपि पश्येदिति भीतिः। वेपते कंपते अतिमात्रं अत्यंतं। 'अतिमात्रोद्गाढनिर्भरं' इति कोशः। अग्रश्चासौ हस्तश्च अग्रहस्तः 'विशेषणं विशेष्येण बहुलं' इति समासः। अवयवेऽवयवित्वारोपात्सामानाधिकरण्यं। स्पष्टा चेयं रीतिरेकदेशिसमासप्रत्याख्यानपरभाष्ये। तथापि हस्तकंपेऽपि तस्य उदयनस्य अन्यः चित्रलेखनादितरः दर्शनोपायः तत् तस्मादन्योपायाभावात् यथातथा यथाकथंचिदित्यर्थः। **एनमिति**। दर्शनोपायाभावबोधनार्थं उपात्तस्य प्रेक्षणकर्मत्वेन बोधनादन्वादेशेन एनादेशः। **इति नाट्येन लिखतीति** अत्र लेखनाभिनयो नाटनं एवं एवंविधस्थलेऽन्यत्रापि नाट्यपदेन तत्तत्क्रियाया अभिनय एवाऽवगंतव्यः। पूर्वांके नाटिकालक्षणमध्ये कन्याया नवानुरागो वर्णितः सच पूर्वांकशेषे कार्यमुखेन सागरिकाया वत्सराजे स्पष्टं प्रदर्शितः स एव बीजं तस्य च पूर्वांके अनंगपूजापरिसमाप्तौ कथार्थविच्छेदे सति 'उदयनस्येंदोरिवोद्वीक्षते' इति, सागरिका (श्रुत्वा 'सहर्षं) कथमयं स राजोदयनो' इत्याद्यच्छेदकारणस्य प्रदर्शितत्वाद्बिंदुत्वं। तदुक्तं। 'अवांतरार्थविच्छेदे बिंदुरच्छेदकारणं' 'प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः' इति। बिंदुप्रयत्नयोः संधिः प्रतिमुखसंधिः। तदुक्तं दर्पणे—'फलप्रधानोपायस्य मुखसंधिनिवेशिनः। लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुख च तत्'। इति। अत्र च वत्सराजसागरिकासमागमहेतोरनु-

रागरूपबीजस्य प्रथमांकोपक्षिप्तस्य सुसंगताविदूषकाभ्यां ज्ञायमानतया किंचिल्लक्ष्यस्य वासवदत्तया चित्रफलकवृत्तांतेन किंचिदुन्नीयमानस्योद्देशरूपोद्भेदः। प्रतिमुखसंधेरंगानि त्रयोदश। तानि च 'विलासः परिसर्पश्च विधूतं शमनर्मणी। नर्मद्युतिः प्रगमनं निरोधः पर्युपासनं। पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि' इति। एतेषु परिसर्पशमनवज्रोपन्यासपुष्पाणां प्राधान्यं इतरेषां यथासंभवं। उद्देशत उक्तानामेतेषां यथासंभवं प्रतिस्वं लक्षणानि तत्र तत्र प्रदर्शयिष्यामः। अत्र 'सागरिका, हृदय प्रसीद प्रसीद किमनेनायासमात्रफलकेन दुर्लभजनप्रार्थनानुबंधेन' इत्युपक्रमे 'तथाप्यालेख्यगतं तं जनं कृत्वा यथासमीहितं करिष्यासि, तथापि तस्य नास्त्यन्यो दर्शनोपायः' इत्येतैर्वत्सराजसमागमरतिं चित्रादिजन्यामप्युद्दिश्य सागरिकायाश्चेष्टा प्रयत्नोनुरागबीजानुगतो विलासः प्रतिमुखस्यांगं। लक्षणं तु 'रत्यर्थेहा विलासः स्यात्' इति। सागरिकारतिरूपस्थायिभावोपजीव्यशृंगाररसनिरूपणसंगत्याऽऽदौ **तावद्रसस्वरूपं निरूप्यते**, तत्र रससामान्यलक्षणं 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरि'ति भरतसूत्रे उक्तं। तदेव 'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः। आनीयमानस्वादुत्वं स्थायी भावो रसः स्मृतः' इति तत्र तत्र ग्रंथकृद्भिरुक्तं, रसनिष्पत्तिविषये च भट्टलोल्लटश्रीशंकुकप्रभृतीनां मतानि काव्यप्रकाशादौ अनेकानि संति तथापि ग्रंथबाहुल्यभिया **रसगंगाधरोक्तलक्षणस्य** तात्पर्यभूतं लक्षणं लिख्यते। 'समुचितललितसंनिवेशचारुणा काव्येन कुशलतमनटाऽभिनयेन च समर्पितैः सहृदयहृदयं प्रविष्टैस्तदीयसहृदयतासहकृतेन भावनाविशेषमहिम्ना विललितव्यक्तिविशेषरमणीयत्वादिभिरलौकिकविभावानुभावव्यभिचारिशब्दव्यपदेश्यैः आलंबनकारणैरुद्दीपनकारणैरश्रुपातादिभिः कार्यैश्चिंतादिभिः सहकारिभिश्च संभूय प्रादुर्भूतेनालौकिकेन व्यापारेण तत्कालनिवर्तितानंदांशावरणाज्ञानेनात एव प्रमुष्टपरिमितप्रमातृत्वादिनिजधर्मेण प्रमात्रा स्वप्रकाशतया वास्तवेन निजस्वरूपानंदेन सह गोचरीक्रियमाणः प्राग्विनिविष्टवासनारूपो रत्यादिरेव रसः' **इति**। अतीव संक्षिप्तलक्षणं तु 'विभावानुभावसात्त्विकव्यभिचारिसामग्रीसमुल्लसितः स्थायी भावो रसः' इति। भावो नाम चित्तवृत्तिविशेषः तस्य स्थायित्वं नाम सजातीयविजातीयानभिभूततया यावदनुभवावस्थानं। तदुक्तं दशरूपके 'सजातीयैर्विजातीयैरतिरस्कृतमूर्तिमान्। यावद्रसं वर्तमानः स्थायी भाव उदाहृतः' इति। तत्र शृंगारादयोऽष्टौ रसाः ते च भरतेन दर्शिताः 'शृंगारहास्यकरुणारौद्रवीरभयानकाः। बीभत्साद्भुतसंज्ञाश्चेत्यष्टौ नाट्ये रसाः स्मृताः' इति। अत्र चकारेण शांतमपि नवमं रसं स्वीकुर्वंति। एतेषां स्थायिभावा अपि तत्रैव दर्शिताः 'रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा। जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः' इति। अत्रापि नवमस्य शांतरसस्य स्वीकर्तॄणां मते शमोऽपि स्थायीभावश्चकारेण संग्राह्यः। तत्र विभावादिलक्षणं काव्यप्रकाशे 'कारणान्यथ कार्याणि सहकारीणि यानि च। रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः। विभावा अनुभावास्तत्कथ्यंते व्यभिचारिणः' इति। तत्र शृंगारप्रकृतत्वात् मुख्यत्वाच शृंगाररसो निरूप्यते। शृंगारपदव्युत्पत्तिः साहित्यदर्पणे—'शृंगं हि मन्म-

थोद्भेदस्तदागमनहेतुकः। उत्तमप्रकृतिप्रायो रसः शृंगार इष्यते' इति। एवं च शृंगं ऋच्छति कारणत्वेन प्राप्नोतीति शृंगारः इति व्युत्पत्तिः सिध्यति। शृंगशब्दे उपपदे ऋधातोः कर्मण्यण्। तस्यालंबनोद्दीपनविभावानुभावादिरपि तत्रैव 'परोढां वर्जयित्वा तु वेश्यां चाननुरागिणीं। आलंबनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः' इति। प्रकृते सागरिकावत्सराजौ आलंबनविभावः। तथा 'चंद्रचंदनरोलंबरुताद्युद्दीपनं मतं। भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्तितः' इति। यद्यपि काव्यप्रकाशे 'निर्वेदग्लानिशंकाख्यास्तथासूयामदश्रमाः। आलस्यं चैव दैन्यं च चिंता मोहः स्मृतिर्धृतिः। व्रीडा चपलता हर्ष आवेगो जडता तथा। गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च। सुप्तं प्रमोदोऽमर्षश्चाप्यवहित्थमथोग्रता। मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च। त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः। त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः' इति उक्तं तथापि नैते सर्वे शृंगारे उपयुज्यंते किंतु केचिदेव। तदुक्तं साहित्यदर्पणे—'त्यक्त्वौग्र्यमरणालस्यजुगुप्सा व्यभिचारिणः' इति। इत्थं च शृंगारे स्त्रीपुंसोरालंबने चंद्रिकावसंतविविधोपवनपवनार्हस्थानादयो द्दीपनविभावाः। तन्मुखावलोकनतद्गुणश्रवणकीर्तनादयोऽन्ये सात्त्विका भावाश्च अनुभावाः। स्मृतिचिंतादयो व्यभिचारिणः। तत्र शृंगारो द्विविधः संभोगो विप्रलंभश्च। तदुक्तं साहित्यदर्पणे—'विप्रलंभोऽथ संभोग इत्येष द्विविधो मतः' इति। तत्र रतेः संभोगकालावच्छिन्नत्वे प्रथमः, वियोगकालावच्छिन्नत्वे द्वितीयः, तदपि तत्रैव 'दर्शनस्पर्शनादीनि निषेवेते विलासिनौ। यत्रानुरक्तावन्योन्यं संभोगोऽयमुदाहृतः' तथा 'यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलंभोऽसौ' इति। एवं च यादृशसंयोगवियोगाख्यांतःकरणवृत्तिविशेषाभ्यां संयुक्तोऽस्मि वियुक्तोऽस्मि इति बुद्धिर्जायते तादृशांतःकरणवृत्तिविशेषौ संभोगविप्रलंभाविति फलितोऽर्थः। एवं च 'न विना विप्रलंभेन संभोगः पुष्टिमश्नुते। कषायिते हि वस्त्रादौ भूयान् रागो विवर्धते' इत्युक्तेः प्रकृतनाटके विप्रलंभपूर्वकं संभोगशृंगारः। तत्र संभोगः एकविध एव। विप्रलंभस्तु पूर्वरागमानप्रवासकरुणारूपेण चतुर्धा भवति। तदपि साहित्यदर्पणे उक्तं 'संख्यातुमशक्यतया चुंबनपरिरंभणादिबहुभेदात्। अयमेक एव धीरैः कथितः संभोगशृंगारः' इति। तथा विप्रलंभमुपक्रम्य 'स च पूर्वरागमानप्रवासकरुणात्मकश्चतुर्धा स्यात्' प्रकृते सागरिकायाः वत्सराजदर्शनात् दशाविशेषः पूर्वरागसंज्ञकः। अत्र अभिलाषादिदशसंख्याककामदशाः यथासंभवं सलक्षणास्तत्र तत्र प्रदर्श्यंते। संभोगशृंगारोऽपि पूर्वरागानंतर्यादिहेतुना चतुर्धा संभवति। संभोगमुपक्रम्योक्तं च साहित्यदर्पणे 'कथितश्चतुर्विधोऽसावानंतर्यात्तु पूर्वरागादेः' इति। अथाऽऽलंबनप्रसंगेन नायकनायिकालक्षणानि। 'त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही। दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता' इति। स च धीरोदात्तादिभेदेन अष्टचत्वारिंशत्प्रकारको भवति। ते च भेदा ग्रंथविस्तरभिया नात्र प्रपंच्यंते। प्रकृते नायकस्तु धीरललितः इति सलक्षणमावेदितं प्राक्। तथा नायिकापि चतुरशीत्यधिकशतत्रयभेदवती भवति। एतेषां सर्वेषां भेदानां निरूपणे ग्रंथगौरवादनावश्यकत्वाच्च केचिदेव भेदाः प्रदर्श्यंते।

( ततः प्रविशति सुसङ्गता । )

**सुसङ्गता**—एदं तं कअलीघरं ता पविसामि । ( प्रवेशं नाटयति । प्रविश्यावलोक्य च सविस्मयम् । ) एसा मे पिअसही साअरिआ । किं पुण एसा गुरुअणुराओक्खित्तहिअआ किं पि आलिहंती मं पि ण पेक्खदि ।

---

१. एतत्तत्कदलीगृहम् । तत्प्रविशामि । एषा मे प्रियसखी सागरिका किं पुनरेषा गुर्वनुरागोत्क्षिप्तहृदया किमप्यालिखन्ती मामपि न प्रेक्षते ।

---

प्रथमं तावत्सा त्रिधा स्वीया, अन्या, साधारणी च । तदेवोक्तं 'अथ नायिका त्रिभेदा स्वान्या साधारणी स्त्रीति । नायकसामान्यगुणैर्भवति यथासंभवैर्युक्ता' इति । अत्रोत्तरार्धेन नायिकासामान्यलक्षणमुक्तं पूर्वार्धेन तद्भेदा इत्यर्थः । तत्र स्वीयासाधारण्योर्लक्षणानां प्रकृतेऽनुपयोगात् परकीयैव विभज्यते । तत्र परकीया द्विधा परोढा कन्यका च । तदुक्तं दर्पणे 'परकीया द्विधा प्रोक्ता परोढा कन्यका तथा' इति । तत्र परोढा 'यात्रादिनिरताऽन्योढा कुलटा गलितत्रपा' इति । यस्या विवाहो न जातः सा कन्या । एतदपि तत्रैव 'कन्या त्वजातोपयमा सलज्जा नवयौवना' इति । एतस्याः परकीयात्वं तु पित्राद्यायत्तत्वाज्ज्ञेयं । प्रकृते सागरिका कन्या इति संक्षेपत उक्तं । एतेषां लक्षणानां समन्वयं तत्र तत्र प्रसंगे प्रदर्शयिष्यामः इत्यलं प्रसक्ताऽनुप्रसक्त्या । पूर्वं प्रवेशके निपुणिकयोक्तं 'गृहीतसमुद्गकचित्रफलकवर्तिका समुद्विग्नेव कदलीगृहं प्रविशंती तव प्रियसखी सागरिका मया दृष्टा, तद्गच्छ प्रियसखीं' इति । स सुसंगतायाः कदलीगृहप्रवेशो निरूप्यते **ततः प्रविशति सुसंगता इति** । ततः सागरिकालेखनारंभाऽनंतरं । **सुसंगता**—एतत्खलु अत्र खल्विति वाक्यालंकारे 'निषेधवाक्यालंकारजिज्ञासानुनये खलु' इत्यमरः । कदलीनां रंभाणां गृहं वेश्म 'कदली वारणबुसा रंभा' 'गृहं गेहोदवसितं वेश्म सद्म निकेतनं' इत्युभयत्राप्यमरः । यद्यपि कदलीनां गृहं न संभवति तथापि गृहाकारकदलीनिकुंज इत्यर्थः । तत् यस्मात् दिदृक्षितकदलीगृहं प्राप्ता तस्मात् इत्यर्थः । अथवा तदिति प्रवेशक्रियायाः कर्म । यावदिति वाक्यालंकारे । सविस्मयं अतिप्रियामपि मां न पश्यति एतत्कदापि न दृष्टचरं इति विस्मयकारणं । तदेवाह—**एषेत्यादिना** । अथवा यत्किंचिच्चिकीर्षितं मां विना इयं कदापि न करोति इदानीं तु मद्धस्ते सारिकामर्पयित्वा विजने किमपि आलिखति इति वा विस्मयकारणं । तदेव एषेत्यादिना प्रपंचयति । एषा समीपदेशे स्थिता 'समीपतरवर्ति चैतदो रूपं' इत्युक्तेः । किं पुनरिति किंशब्दोऽत्र वितर्के 'किं कुत्सायां वितर्के च निषेधप्रश्नयोरपि' इति मेदिनी । पुनरिति वाक्यालंकारे । गुर्वनुरागोत्क्षिप्तहृदया गुरुः महान् 'गुरुस्त्रिलिंग्यां महति' इति मेदिनी । योऽनुरागः प्रेमा तेन उत्क्षिप्तं इतस्ततः प्रेरितं उत्पूर्वकात्क्षिपधातोः कर्मणि क्तः । हृदयं अंतःकरणं यस्याः सा । किमपीति दूरदर्शनेन अनिश्चितत्वात् किमपीत्युक्तं । तत् तस्मात् स्वस्य दृष्टिगोचरत्वे एतल्लेखनं मया न ज्ञायेत अतो लेखनदिदृक्षाहेतोरित्यर्थः । यावदित्यवधौ लेखनदर्शनपर्यंतमित्यर्थः ।

भोदु । ता जाव इमाए दिट्ठिपदं परिहरिअ णिरूवइस्सं किं एसा आलिहदित्ति । (स्वैरं पृष्ठतोऽस्या भूत्वा दृष्ट्वा सहर्षम् ।) कहं एदाए भट्टा आलिहिदो । साहु साअरिए साहु । अहवा ण कमलाअरं उज्झिअ राअहंसी अण्णहिं अहिरमदि ।

सागरि०—(सबाष्पम् ।) आलिहिदो मए एसो । किं पुण अणवरदणिवडंतबप्फसलिलेण मे दिट्ठि पेक्खिदुं ण प्पहवदि । (मुखमुत्तानी-

भवतु । तद्यावदस्या दृष्टिपथं परिहृत्य निरूपयिष्यामि किमेषाऽऽलिखतीति । कथमेतया भर्ताऽऽलिखितः । साधु सागरिके साधु । अथवा न कमलाकरमुज्झित्वा राजहंस्यन्यत्राभिरमते ।

१. आलिखितो मयैषः । किं पुनरनवरतनिपतद्बाष्पसलिलेन मे दृष्टिः प्रेक्षितुं

अस्या दृष्टिपथं परिहार्येत्यन्वयः । दृष्टेः अवलोकनस्य 'स्त्रियां दृष्टिः स्त्रियां बुद्धौ लोचने दर्शनेऽपि च' इति मेदिनी । पंथानं 'ऋक्पूरब्धूः' इत्यादिना अप्रत्ययः समासांतः । अवलोकनगोचरदेशमित्यर्थः । परिहार्य उज्झित्वा । निरूपयिष्ये द्रक्ष्यामि । निपूर्वकरूपधातोः नाटके तत्र तत्र दर्शनार्थो दृश्यते, यथा शाकुंतलादौ निपुणं निरूप्येत्यादि । **किमेषाऽऽलिखतीति** । इदं विशिष्टं निरूपणस्य कर्म पश्य मृगो धावतीतिवत् । स्वैरं मंदं 'स्वैरः स्वच्छंदमंदयोः' इति मेदिनी । स्थित्वेति स्थितिक्रियाविशेषणमिदं, मंदस्थितिस्तु स्वागमनमेतस्या विदितं मा भूत् इति । पृष्ठत इति सप्तम्यंतादाद्यादित्वात्तसिः । पृष्ठे इत्यर्थः । औपश्लेषिकाधिकरणे सप्तमी, अस्याः पृष्ठतः स्वैरं स्थित्वेत्यन्वयः । **सहर्षमिति** । चित्रलेखनकौशलदर्शनेन हर्षः । नूनमनया एतद्वयसोऽनुरूपः कुतश्चिच्छ्रुतगुणरूपः भर्ता आलिखितो भवेदित्याशंक्याह—**कथमिति** । कथं शब्दः संभावनायां 'कथं हर्षे च गर्हायां प्रकारार्थे च संभ्रमे । प्रश्ने संभावनायां च' इति मेदिनी । भर्ता प्रियः 'धवः प्रियः पतिर्भर्ता' इत्यमरः । एतत्तव वयसोऽनुरूपमित्याह—**साध्वित्यादिना** । साध्विति लेखनक्रियाया विशेषणं आलिखित इति देहलीदीपन्यायेन पूर्वत्र परत्र चान्वेति । पूर्वं यतः कुतश्चिच्छ्रुतगुणरूपोऽनया भर्ता आलिखितः स तु यथा श्रुतः तथैव स्याद्वेति शंकया इदमनयाऽयुक्तं कृतमिति मन्वाना औदासीन्येन एतद्वयोऽनुरूपमनया भर्तृलेखनं कृतं इत्यौदासीन्येन साध्वित्यादिना प्राशंसीत् । इदानीं तु अयं वत्सराज एवाऽनयाऽऽलिखित इत्यभिप्रेत्य युक्ततरमनयाऽनुष्ठितमिति व्यतिरेकमुखेनाह—**अथवेत्यादिना** । अथवेति पक्षांतरे । राजहंसी कमलाकरमुज्झित्वाऽन्यत्र नाभिरमते इत्यन्वयः । राजहंसी कलहंसी 'राजहंसस्तु कादंबे कलहंसे नृपोत्तमे' इति मेदिनी । कमलाकरं पद्मखनिं 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । कमलपूर्णजलाशयमिति यावत् । उज्झित्वा त्यक्त्वा । **सागरिका**—सबाष्पमिति अयं असात्त्विकविकारेषु मध्ये अश्रुरूपसात्त्विकविकारः । तदुक्तं साहित्यदर्पणे 'अश्रु नेत्रोद्भवं वारि क्रोधदुःखप्रहर्षजं' इति । एष इति बुद्धिसन्निकृष्ट इत्यर्थः । निपतत् गलत् एतादृशं बाष्पं अश्रु 'बाष्पमूष्माश्रु' इत्यमरः । तदेव सलिलं

कृत्वाश्रूणि निवारयन्ती सुसङ्गतां दृष्ट्वोत्तरीयेण फलकं प्रच्छादयन्ती स्मितं कृत्वा ।) कहं पिअसही सुसंगदा । (इत्युत्थाय हस्ते गृहीत्वा । ) सहि, इदो उपविस ।

सुसङ्ग०—(उपविश्य बलात्फलकमाकृष्य ।) सहि, को एसो तुए एत्थ चित्तफलए आलिहिदो ।

साग०—पउत्तमअणमहूस्सवे भअवं अणंगो ।

सुसङ्ग०—(सस्मितम्) अहो दे णिउणत्तं किं पुण सुण्णं विअ चित्तं पडिभादि ता अहं पि आलिहिअ रइसणाहं करिस्सं (वर्णिकां गृहीत्वा नाट्येन रतिव्यपदेशेन सागरिकामालिखति) ।

---

न प्रभवति । कथं प्रियसखी सुसङ्गता । सखि, इहोपविश ।

१. सखि, क एष त्वयात्र चित्रफलक आलिखितः ।

२. प्रवृत्तमदनमहोत्सवे भगवाननङ्गः ।

३. अहो ते निपुणत्वं किं पुनः शून्यमिव चित्रं प्रतिभाति तदहमप्यालिख्य रतिसनाथं करिष्ये ।

---

तेन हेत्वर्थे तृतीया । तदाच्छादनेन हेतुनेति फलितं । दृष्टिः लोचनं 'दृग्दृष्टी च' इत्यमरः । प्रेक्षितुं विलोकितुं न प्रभवति न शक्नोति । मुखमुत्तानीकृत्य चित्रलेखनार्थमधः कृतं मुखं ऊर्ध्वीकृत्येत्यर्थः । उत्तानीकृत्येत्यत्र उत्तानशब्दात् च्विप्रत्ययः ततः कृत्वेत्यनेन साकं गतिसमासः 'समासे नञ्पूर्वे'त्यादिना ल्यबादेशः । अश्रूणि बाष्पाणि निवारयंती मृजंती उत्तरीयेण संव्यानेन 'संव्यानमुत्तरीयं स्यात्' इत्यमरः । फलकं चित्रफलकं प्रच्छादयंती तिरोदधती स्वाभिप्रायोऽनया माज्ञायि इति फलकाच्छादनं । स्मितं मंदहासं मुखवैवर्ण्यदर्शने कदाचिदियं मदीयं मानसखेदमनुमाय मामनुयुंज्यात् अतः स्वाभिप्रायगोपनार्थं स्मितकरणं । कथमिति प्रश्ने संभ्रमे वा, अकस्माद्दृष्टत्वेन संभ्रमः । **सुसंगता**—बलात् हठात् । क एष इति । सुसंगतया अयं क इति पूर्वमेव ज्ञातं अत एव 'न कमलाकरमुज्झित्वा राजहंसस्यन्यत्राभिरमते' इत्यवोचत् । तथापि किमियं भणति सत्यं मिथ्या वा इति जिज्ञासया प्रश्नः । **सागरिका**—सलज्जमिति पिहितमपि फलकं अनया प्राज्ञायीति लज्जा । अत एव प्रकृतोपयुक्तमदनलेखनेन निह्नुते—प्रवृत्तेत्यादिना । प्रवृत्तः उपक्रांतः । तादृशे मदनमहोत्सवे भगवान् उत्सवोद्देश्यत्वेन इंद्रादिपराभवकारित्वेन च भगवत्त्वं । अनंगः मदनः । **सुसंगता**—सस्मितमिति मामपीयं वंचयति इति हासः । तदेवाह—**अहो ते इत्यादिना** । अहो इति आश्चर्ये । निपुणत्वं प्रवीणत्वमित्यर्थः । चित्रलेखने स्वाभिप्रायगोपने च इत्युभयविधप्रवीणत्वबोधनार्थं सामान्यतः निपुणत्वमित्युपात्तं किं पुनरिति कुत इत्यर्थः । किं प्रश्ने पुनरिति भेदे । चित्रं लिखितं परंतु रतिविरहितमित्यर्थः ।

सागः—(विलोक्य सक्रोधं।) संहि, कीस तुए एत्थ अहं आलिहिदा।

सुसङ्ग०—(विहस्य।) संहि, किं अआरणे कुप्पसि। जादिसो तुए कामदेवो आलिहिदो तादिसी मए रइ आलिहिदा। ता अण्णधासंभाविणि किं तुह एदिणा आलविदेण। कहेहि सव्वं वुत्तंतं।

---

१. सखि, किमिति त्वयात्राहमालिखिता।

२. सखि, किमकारणे कुप्यसि। यादृशस्त्वया कामदेव आलिखितस्तादृशी मया रतिरालिखिता। तदन्यथासम्भाविनि किं तवैतेनालपितेन। कथय सर्वं वृत्तान्तम्। Misunderstanding.

---

तदेवाह—शून्यमिवेत्यादिना। शून्यं रिक्तमित्यर्थः। 'शून्यं तु वशिकं तुच्छरिक्तके' इत्यमरः। रतिविरहितमिति यावत्, इवशब्दो लौकिकोक्तौ सादृश्ये, आलिख्य अर्थात् रतिमिति कर्म, तदेवाह—रतिसनाथमिति रतिसहितमित्यर्थः। 'अशिथिलरतिसुखसनाथम्' इति भारतचंप्वां युक्तार्थकः सनाथशब्दो दृष्टः, अन्यत्रापि च एवमेव बहुशः प्रयोगा द्रष्टव्याः अत्र कोशाऽनुग्रहोऽन्वेषितव्यः। रतिव्यपदेशेन रतिव्याजेन। विशिष्टोऽपदेशः व्यपदेशः 'अपदेशः पुमान् लक्ष्ये निमित्तव्याजयोरपि' इति मेदिनी। **सागरिका**—सक्रोधमिति रतिनिमित्तेन अनयाऽहमेवाऽत्र लिखिता तेन मद्गत एतदनुरागोऽनयाऽपि ज्ञातः तदतिशयनिह्नवार्थं क्रोधः। तदेव प्रश्नमुखेनाह—**सखीत्यादिना। किमिति** इति हेतौ कुतो हेतोरित्यर्थः, किमिति प्रश्नेऽव्ययं 'किं कुत्सायां वितर्के च निषेधप्रश्नयोरपि' 'इति हेतौ प्रकाशने'इत्युभयत्रापि मेदिनी। अत्र चित्रफलके। **सुसंगता—विहस्येति** मां वंचयितुं इयं क्रुध्यति परं त्वेतदभिप्रायो मयाऽवगत एवेति विहासः। अकारणे किं कुप्यसीत्यन्वयः। किंशब्दोऽत्र प्रश्ने। अथवा अव्ययानामनेकार्थत्वात्किंशब्दो हेतौ। कुतः कुप्यसीत्यर्थः। अकारणे अर्थाभावे नञ्तत्पुरुषः। न च अर्थाभावेऽव्ययीभावेन तत्पुरुषबाधः स्यादिति वाच्यं 'रक्षोहाऽऽगमलघ्वसंदेहाः प्रयोजनं' 'अद्भुतायामसंहितं' इति भाष्यवार्तिकप्रयोगात् अर्थाभावेऽव्ययीभावेन सहाऽयं तत्पुरुषो विकल्प्यते इति सिद्धांतकौमुद्यामुक्तत्वात्। सत्सप्तमी चेयं अथवा विषयसप्तमी। न च 'क्रुधद्रुहे'त्यादिना संप्रदानत्वं शंक्यं, कुप्यतेः क्रोधार्थत्वाभावात् 'नह्यकुपितः क्रुध्यति' इति भाष्यात्। स्पष्टं चेदं शब्देन्दुशेखरे। यादृश इति 'त्यदादिषु दृशोऽनालोचने कञ्च' इति यच्छब्दे उपपदे दृशधातोः कञ् 'आ सर्वनाम्नः' इति आत्वं रूढिशब्दश्चायं रथंतरादिवत् व्युत्पाद्यते। अथवा भाष्योक्तरीत्या कर्मकर्तरि व्युत्पत्तिर्द्रष्टव्या। एवं च यादृश इत्यस्य यथेत्यर्थः। तादृशीति अत्रापि यादृशशब्दवत् व्युत्पत्तिर्ङीया ङीप्मात्रं विशेषः। अनेन त्वदभिप्रायो मयाऽवगत इति सूचितं तदेवाह—**तदित्यादिना**। तत् तवाभिप्रायाऽवगमात् अन्यथा अन्यप्रकारेण 'प्रकारवचने थाल्' इति थाल् प्रत्ययः।

साग०—( सलज्जा स्वगतम्। ) 'णं जाणिदम्हि पिअसहिए ( सुसङ्गताया हस्तं गृहीत्वा प्रकाशम्। ) पिअसहि, महदी खु मे लज्जा ता तहा करेसु जहा ण कोवि अवरो एदं वुत्तंतं जाणादित्ति।

सुसङ्ग०—'सहि मा लज्ज। ईदिसस्स कण्णारअणस्स अवस्सं एव ईदिसे वरे अहिलासेण होदव्वं। तहावि जहा ण कोवि अवरो एदं वुत्तंतं जाणिस्सदि तहा करेमि। एदाए उण मेधाविणीए सारिआए

---

१. ननु ज्ञातास्मि प्रियसख्या। प्रियसखि महती खलु मे लज्जा तत्तथा कुरु यथा न कोऽप्यपर एतद्वृत्तान्तं जानातीति।

२. सखि मा लज्जस्व, ईदृशस्य कन्यारत्नस्यावश्यमेवेदृशे वर अभिलाषेण भवितव्यम्। तथापि यथा न कोऽप्यपर एतद्वृत्तान्तं ज्ञास्यति तथा करोमि। एतया

---

अन्यथासंभाविनीत्यत्र अन्यथाशब्दे उपपदे संपूर्वकाद्भवतेर्णिजंतात् 'सुप्यजाता'विति णिनिः उपपदसमासः नांतत्वान्ङीपि 'अंवार्थ–' इति ह्रस्वः। विपरीतबोधनशीलेति यावत्। एतेन आलपितेनेति। यद्यपि 'स्यादाभाषणमालाप' इत्यमरेण भाषणसामान्यं आलपतेरर्थः तथापि प्रकृते पूर्वोक्तमिथ्यात्वबोधकैतच्छब्दसमभिव्याहृतालपतेर्मिथ्याभाषणमित्यर्थः। वृत्तांतं प्रकारं 'वृत्तांतः स्यात्प्रकरणे प्रकारे कार्त्स्न्यवार्तयोः' इत्यमरः। **सागरिका—सलज्जेति**। कन्यकात्वे स्वमनीषया परपुरुषप्रेमकरणं लज्जाकारणं। स्वगतमिति सर्वस्य अश्राव्यमित्यर्थः। तदुक्तं दशरूपके—'सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम्' इति। इदं च अध्याहृतभाषणक्रियाया विशेषणं एवं एवंविधेऽन्यत्रापि ज्ञेयं। ननु अवधारणे, प्रियसख्या ज्ञातास्म्येवेत्यर्थः। अत्र यद्यपि सामान्यतः ज्ञातासीत्युक्तं तथापि प्रकरणान्मद्विषयोऽभिप्रायो ज्ञात इत्यर्थः। अथवा एतस्याः सख्या ज्ञातत्वेपि ज्ञातासीत्येतद्वचनसामर्थ्यादित्थंभूतावस्था ज्ञातासीत्यर्थः। सर्वथा मदभिप्रायोऽनया ज्ञात इति तात्पर्यम्। **प्रकाशमिति** एतल्लक्षणं इदानीमेवोक्तं। महती अतिशयितेत्यर्थः। खल्विति अनुनये वाक्यालंकारे वा। तस्मादिति लज्जावत्त्वादित्यर्थः, हेतौ चेयं पंचमी। एतद्वृत्तांतमिति एषश्चासौ वृत्तांतश्चेति कर्मधारयः। वृत्तांतः उदंतः यथा कोऽप्यपरः एतद्वृत्तांतं न जानाति तथा कुर्वित्यन्वयः। जानातीत्यत्र 'वर्तमानसामीप्ये वर्तमानवद्वा' इति सूत्रेण भविष्यति लट्। इतिशब्दः वाक्यसमाप्त्यर्थः 'इति हेतुप्रकरणप्रकाशादिसमाप्तिषु' इत्यमरः। **सुसंगता—मा लज्जस्वेति**। नन्वत्र 'माङि लुङ्' इति लुङा भाव्यमिति चेन्न। नायं माङ् किंतु निषेधार्थो माशब्दः। 'मा स्म मालं च वारणे' इत्यमरः। प्राप्तकाले लोट्। अयं लज्जाकालो नहीत्यर्थः। तदेवाह–**ईदृशस्येत्यादिना**। 'त्यदादिषु' इत्यादिसूत्रेणेदंशब्दे उपपदे दृशेः कञ् प्रत्ययः 'इदंकिमोरीश्की' इत्यनेनेशादेशः। अनेन लोकोत्तरत्वं व्यज्यते। कन्यारत्नस्य कन्याया रत्नत्वारोपः अथवा कन्याजातिश्रेष्ठस्येत्यर्थः। 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः। ईदृशस्य कन्या-

एत्थ काअणेण होदव्वम् । कदाचिएसा इमस्स आलावस्स गहिदक्खरा कस्स वि पुरदो मंतइस्सदि ।

**साग०**—(सोद्वेगम्।) सहि अदो वि मे अधिअदरं संदावो वड्ढदि ।

(इति मदनावस्थां नाटयति ।)

**सुसङ्ग०**—(सागरिकाया हृदये हस्तं दत्वा) सहि समस्सस समस्सस । जाव इमाए दिग्घिआए णलिणीपत्ताइं मुणालिआइं अ गेण्हिअ लहुं आअच्छामि । (निष्क्रम्य पुनः प्रविश्य च नाट्येन नलिनीपत्रैः शयनीयं मृणालवलयानि च रचयित्वा परिशिष्टानि नलिनीपत्राणि सागरिकाया हृदये निक्षिपति ।)

---

पुनर्मेधाविन्या सारिकयात्र कारणेन भवितव्यम् । कदाचिदेषास्यालापस्य गृहीताक्षरा कस्यापि पुरतो मन्त्रयिष्यते ।

१. सखि, अतोऽपि मे अधिकतरं सन्तापो वर्धते ।

२. सखि, समाश्वसिहि समाश्वसिहि । यावदस्या दीर्घिकाया नलिनीपत्राणि मृणालिकां च गृहीत्वा लघ्वागच्छामि ।

---

रत्नस्य ईदृशे वरे अवश्यमेवाभिलाषेण भवितव्यमित्यन्वयः । ईदृशे लोकोत्तरे इति यावत् । वरे वत्सराजरूपे अभिलाषेण इच्छया । **तथापीति** । यद्यपि एतद्वयोऽनुरूपः लोकोत्तरे वत्सराजे तव मनोरथरूपः वृत्तांतो मयाऽवगत इति शेषः । तथापि मया अवगतत्वेऽपीत्यर्थः । अपरं इति आवाभ्यामन्य इत्यर्थः । **करोमीति** करिष्यामीत्यर्थः । पूर्ववत् वर्तमानसामीप्ये लट् । एतया समीपतरवर्तिन्या । पुनरिति भेदे 'पुनरप्रथमे भेदे' इत्यमरः । परंतु इति यावत् । मेधाविन्या प्रशस्तधारणावत्या 'अस्मायामेधास्रजो विनिः' इत्यनेन विनिप्रत्ययः । अत्र एतद्वृत्तांतप्रकाशने कारणेन हेतुना, एतद्वृत्तांतप्रकाशनं कदाचिदियं करिष्यतीति तात्पर्यार्थः । तदेवाह—**कदाचिदित्यादिना** । आलपस्य भाषणस्य 'स्यादाभाषणमालाप' इत्यमरः । गृहीताक्षरा गृहीतवर्णा । अनेन अर्थज्ञानाऽभावः सूचितः । पुरतः अग्रतः 'स्यात्पुरः पुरतोऽग्रत' इत्यमरः । मंत्रयिष्यति पठिष्यतीत्यर्थः । **सागरिका—सोद्वेगमिति** । उद्वेगः अस्वास्थ्योत्पादकांतःकरणवृत्तिविशेषः । **अतोपीति** । पूर्वस्मादित्यर्थः । अधिकतरं अतिशयितं संतापः संज्वरः "संतापः संज्वरः समौ' इत्यमरः । मदनावस्थानाटनस्वरूपं जिज्ञासितव्यं । **सुसंगता**—हृदये वक्षसि हस्तं करं दत्वा निधाय, समाश्वसिहि समाश्वसिहि संभ्रमे द्विरुक्तिः यावदित्यवधौ 'यावत्तावच्च साकल्येऽवधौ' इत्यमरः । एतस्याः समीपवर्तिन्याः दीर्घिकायाः वाप्याः सकाशात् अपादाने पंचमी 'वापी तु दीर्घिका' इत्यमरः । नलिनीपत्राणि कमलिनीदलानि मृणालिकां बिसं जात्यैकवचनं मृणालिकाः इति यावत् । यद्यपि 'मृणालं बिसं' इति कोशे नपुंसक एव मृणालशब्द उक्तः । तथापि 'मृणालं नलदे क्लीबं स्त्रीनपुंसकयोर्बिसे' इति मेदिनीकोशात् 'सांद्रं चंदनमंगके वलयिता पाणौ मृणालीकता' इति प्रयोगाच्च मृणाल-

साग०—सहि, अवणेहि इमाइं णलिणीपत्ताइं मुणालिआइं अ।
अलं एदिणा, कीस अआरणे अत्ताणं आआसेसि।

दुल्लहजणअणुराओ लज्जा गुरुई परवसो अप्पा।
पिअसहि विसमं प्पेम्मं मरणं सरणं णु वरमेक्कम्॥ १॥

(इति मूर्च्छति।)

१. सखि, अपनयेमानि नलिनीपत्राणि मृणालिकानि च। अलमेतेन, किमकारण आत्मानमायासयसि।

दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा।
प्रियसखि विषमं प्रेम मरणं शरणं नु वरमेकम्।

शब्दः स्त्रियामपि। तत्र गौरादित्वान्ङीषि अल्पार्थे कः। लघु क्षिप्रं 'लघुक्षिप्रमरं द्रुतं' इत्यमरः। आगच्छामि आगमिष्यामि इति 'वर्तमानसामीप्ये' लट्। निष्क्रम्य गत्वा पुनः अप्रथमे प्रविश्य आगत्य नलिनीपत्रैः कमलिनीदलैः शयनीयं शय्यां 'शय्यायां शयनीयवत्' इत्यमरः। रचयित्वा निर्माय मृणालवलयानि विसवलयानि रचयित्वा कृत्वा परिशिष्टानि उर्वरितानि हृदये वक्षसि निक्षिपति स्थापयति। **सागरि०**— अपनय दूरीकुरु मृणालिकानि यद्यप्यत्र मृणालीशब्दः स्त्रीलिंगः पूर्वमुपपादितः तस्मात्स्वार्थे के मृणालिकेति भवितव्यं तथापि 'क्वचित्स्वार्थिकाः प्रकृतितो लिंगवचनान्यतिवर्तंते' इति न्यायेन मृणालिकानीति नपुंसकं। मृणालकानीति क्वचित्पाठश्चेत्स साधीयान्। एतेन पूर्वोक्तोपचारेण अलं साध्यं नास्तीति गम्यमानक्रियानिरूपितं करणत्वं तदेवाह—**किमित्यादिना**। अकारणे आंतरतापापनयनासाधने, पूर्वोक्तत्वत्कृतनलिनीपत्राद्युपचारे इत्यर्थः। आत्मानं देहं 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरः। आयासयसि खेदयसि नलिनीपत्राद्युपचारस्य आंतरतापापनोदासाधनत्वं पूर्वोक्तं प्रकटयति—**दुर्लभेत्यादिना**। दुःखेन लभ्यते प्राप्यते इति दुर्लभः दुष्प्रापः स चासौ जनश्च लोकः तत्र अनुरागः प्रेम। एवं च तन्निमित्ततापापनोदे त्वत्कृता उपाया व्यर्था इत्यर्थः। ननु तत्प्राप्तौ यत्नः कर्तव्य इति चेन्नेत्याह—**लज्जा गुर्वीति**। एवं च अतिशयलज्जावत्त्वात् उपायाः कर्तुं न शक्यंत इत्यर्थः। ननु तथापि स्वदुःखोच्छेदाय महतीमपि लज्जां विहाय तत्प्राप्त्युपाय एव कर्तव्य इति चेन्नेत्याह—परवश इति आत्मा देहः परवशः परेषां वासवदत्तादीनां वशः अधीनः 'वशा वंध्यासुतायोषास्त्रीगवीकरिणीषु च। त्रिष्वायत्ते क्लीवमायत्तत्वेच्छाप्रभुत्वयोः' इति मेदिनी। एवं च पराधीनत्वात् साधनाननुकूलत्वं। किंच मद्धार्दस्य प्रियेणाऽनवगमादपि तत्प्राप्तिर्दुर्लभेत्याह—**प्रियसखीत्यादिना**। विषमं विपरीतं, मदीयानुरागः तस्मिन्नस्ति तस्य तु मदीयानुरागाऽनवगमात्, मयि अनुरागो नास्तीत्यर्थः। तस्मादेकं मरणं नु वितर्के। 'नु वितर्कापमानयोः' इति मेदिनी। एकं मरणं वरं शरणं नु इत्यन्वयः। शरणं रक्षितृ एतादृशदुःखादिति शेषः॥ १॥ 'सागरिका—सखि, अतोऽपि मेऽधिकतरं संतापो वर्धते' इत्यारभ्य—'मरणं शरणं नु

सुसङ्ग०—( सकरुणम् ) पिअसहि साअरिए, समस्सस समस्सस ।

( नेपथ्ये कलकलः । )

कण्ठे कृत्तावशेषं कनकमयमधः शृङ्खलादाम कर्ष-
न्क्रान्त्वा द्वाराणि हेलाचलचरणरणत्किङ्किणीचक्रवालः ।
दत्तातङ्कोऽङ्गनानामनुसृतसरणिः संभ्रमादश्वपालैः
प्रभ्रष्टोऽयं प्लवङ्गः प्रविशति नृपतेर्मन्दिरं मन्दुरायाः ॥ २ ॥

अपि च

नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।

---

१. प्रियसखि सागरिके, समाश्वसिहि समाश्वसिहि ।

---

वरमेक'मित्यंतेन सागरिकाया बीजान्वयेन शीतोपचारविधूननाद्विधूतं नाम प्रतिमुखसंधेरंगमुक्तम् । उक्तं च **भरतेन** 'कृतस्यानुनयस्यादौ विधूतमपरिग्रह' इति । **सुसंगता— सकरुणमिति ।** प्रियसख्या विषमावस्थावलोकनेन कारुण्यं । समाश्वसिहि समाश्वसिहि इति । आभीक्ष्ण्ये संभ्रमे वा द्वित्वं । कलकलः कोलाहलः 'कोलाहलः कलकलः' इत्यमरः । तमेवाह—**कंठे इत्यादिना** । मंदुरायाः वाजिशालायाः 'वाजिशाला तु मंदुरा' इत्यमरः । सकाशात् अपादाने पंचमी । प्रभ्रष्टः च्युतबंधनत्वेन आगतः अयं सन्निकृष्टः प्लवंगः वानरः 'कपिप्लवंगप्लवगे'त्याद्यमरः । नृपतेः राज्ञः मंदिरं गृहं प्रासादमित्यर्थः । प्रविशतीत्यन्वयः । कथं स वानर इत्याह–कंठे गले 'कंठो गलोऽथ ग्रीवायां' इत्यमरः, कृत्तस्य छिन्नस्य अवशेषं उर्वरितं कृती छेदने कर्मणि क्तः 'श्वीदित' इतीण्निषेधः । कनकमयं सुवर्णप्रचुरं सुवर्णविकारो वा उभयथापि 'तत्प्रकृतवचने मयट्' 'मयड्वैतयोर्भाषाया'मित्यादिना मयट् । शृंखलायाः निगडस्य दाम संदानं 'शृंखला पुंस्कटीवस्त्रबंधे च निगडे त्रिषु' इति मेदिनी । 'न पुंसि दाम संदानं' इत्यमरः । अधः अधोभागे कर्षन् । पुनः कथंभूतः । हेलया तज्जात्यनुरूपलीलया चलौ चंचलौ यौ चरणौ पादौ तयोः रणत् शब्दायमानं किंकिणीनां क्षुद्रघंटिकानां 'किंकिणी क्षुद्रघंटिका' इत्यमरः । चक्रवालं मंडलं यस्य सः द्वाराणि क्रांत्वा उल्लंघ्य अंगनानां स्त्रीणां 'अंगात्कल्याणे' इति पामादित्वान्नप्रत्ययः । दत्तातंकः दत्तः आतंकः भयं पीडा वा येन 'आतंको भयपीडयोः' इत्यभिधानात् । पुनश्च कीदृशः । अश्वान्पालयंतीति अश्वपालाः कर्मण्यण् । तैः अश्वरक्षिभिरित्यर्थः । अनुसृता सरणिः पद्धतिः यस्य 'सरणिः पद्धतिः पद्या' इत्यमरः । स्रग्धरा छंदः लक्षणं प्रागुक्तं ॥ २ ॥ अपि च समुच्चयार्थोऽपिशब्दः, अन्यदपीति यावत् । तदेवाह—**नष्टमित्यादिना** । वर्षवरैः षंढैः 'षंढो वर्षवरस्तुल्यौ' इत्यमरः । कर्तृभिः, मनुष्यगणनाभावात् मनुष्येषु या गणना तस्या अभावात् विरहात् । स्त्रीत्वपुंस्त्वान्यतरप्रजोत्पादनरूपमनुष्यत्वाभावात् एतेषां मनुष्यगणनाऽभाव इति भावि । त्रपां लज्जां अपास्य हित्वा नष्टं अंतर्हितं । नष्टमिति नश

पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतम्
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः ॥ ३ ॥

सुसङ्गता—( आकर्ण्याग्रतोऽवलोक्य ससंभ्रममुत्थाय सारिकां हस्ते गृहीत्वा ) [१]सहि उट्ठेहि उट्ठेहि । एसो खु दुट्ठवाणरो इदो ज्जेव आअच्छदि ।

सागरि०—[२]किं दाणिं करेम्ह ।

सुसङ्गता—[३]एहि । इमस्सिं तमालविडवान्धआरे पविसिअ एदं अदिवाहेम्ह ।

---

१. सखि उत्तिष्ठोत्तिष्ठ । एष खलु दुष्टवानर इति एवागच्छति ।

२. किमिदानीं कुर्वः ।

३. एहि । अस्मिन् तमालविटपान्धकारे प्रविश्यैनमतिवाहयावः ।

---

अदर्शन इत्यस्माद्भावे क्तः । अयं पुरोवर्ती वामनः खर्वः त्रासात् भीतेः वानरस्येति शेषः । 'दरस्त्रासो भीतिः' इति कोशः । कंचुकिकंचुकस्य कंचुकिनः सौविदल्लस्य 'सौविदल्लाः कंचुकिनः' इत्यमरः । कंचुकस्य चोलकस्य अंतः मध्यभागे विशति प्रविशति, पर्यंताश्रयिभिः पर्यंतं समीपभागं आश्रयंतीत्यर्थे पर्यन्ताश्रयशब्दान्मत्वर्थे इनिः । समीपवर्तिभिरित्यर्थः । निजस्य आत्मीयस्य नाम्नः किरात इति अभिधायाः सदृशं युक्तं कृतं आचरितं, अयं भावः—कृ विक्षेपे अस्मात् 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्यये किर इति रूपं, अतंति सततं गच्छंतीति अतः पचाद्यच् किराश्च ते अताश्च किराताः इति किरातनामव्युत्पत्तिः । तस्य सदृशं विक्षिप्ततया इतस्ततः सततं भ्रमणमित्यर्थः । कुब्जाः आत्मनः कर्मणि षष्ठी । ईक्षणं वानरकर्तृकं तत् आशंकिनः आत्मकर्मकं वानरकर्तृकं यदीक्षणमवलोकनं तदाशंकिनः संतः, नीचानां अधःस्थितानां भावो नीचता तयाऽधःस्थित्यैवेत्यर्थः । वानरोऽस्मान्मा द्राक्षीदिति अधःस्थित्यैव कुब्जा यांतीत्यर्थः । कंठे कृत्वेति नष्टं वर्षेति च पद्यद्वयेन आरभटीवृत्तेरवपाताख्यं अंगमुक्तं । एतल्लक्षणं 'अवपातस्तु निष्कामप्रवेशत्रासविद्रवैः' इति । शार्दूलविक्रीडितं छंदः, लक्षणमुक्तं । अनयोरुभयोः श्लोकयोः स्वभावोक्त्यलंकारः । तदुक्तं कुवलयानंदे 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनं' इति । अत्र भयानको रसः ॥ ३ ॥ **सुसंगता**—आकर्ण्य पूर्वोक्तवृत्तांतमिति शेषः । अग्रतोऽवलोक्येति अत्राऽवलोकनक्रियायां वानरचेष्टितं कर्म अर्थाल्लभ्यते । ससंभ्रमं सत्वरं 'संभ्रमत्वरा' इत्यमरः । सागरिकां हस्ते गृहीत्वेति स्वतस्तस्या अन्यत्र गंतुमशक्यत्वात् हस्तग्रहणं अत एवाह—सखीत्यादिना । उत्तिष्ठोत्तिष्ठेति संभ्रमे द्विरुक्तिः । संभ्रमकारणं दर्शयति—**एष खल्वित्यादिना** । दुष्टवानरः इतएव अस्मिन्देशे एव । इदंशब्दात्सप्तम्यंतात्तसिल्प्रत्ययः । **सुसंगता**—तमालास्तापिच्छाः तेषां विटपाः शाखाः 'कालस्कंधस्तमालः स्यात्तापिच्छोप्यथ सिंदुके' इत्यमरः । 'विटपो न स्त्रियां

( परिक्रम्योभे सभयं पश्यन्त्यावेकान्ते पर्यवस्थिते । )

**साग०**—कहं सुसंगते, तुए चित्तफलओ उज्झिदो । कदावि को वि तं पेक्खदि ।

**सुसङ्गता**—अइ सुत्थिदे, किं अज्जवि चित्तफलएण करिस्ससि । एसो वि दधिभत्तलंपडो एदं पंजरं उग्घाडिअ दुट्ठवाणरो अदिक्कंतो । एसा खु मेहाविणी उड्डीणा अण्णदो गच्छदि । ता एहि । लहुं अणुसरेम्ह । इमस्स आलावस्स गहिदक्खरा कस्स वि पुरदो मंतइस्सदि ।

**सागरिका**—सहि, एवं करेम्ह ।

( इति परिक्रामतः । )

---

१. कथं सुसङ्गते, त्वया चित्रफलक उज्झितः । कदापि कोऽपि तं प्रेक्षते ।

२. अयि सुस्थिते, किमद्यापि चित्रफलकेन करिष्यसि । एषोऽपि दधिभक्तलम्पट एतत्पञ्जरमुद्घाट्य दुष्टवानरोऽतिक्रान्तः । एषा खलु मेधाविन्युड्डीनाऽन्यतो गच्छति । तदेहि । लघ्वनुसरावः । अस्यालापस्य गृहीताक्षरा कस्यापि पुरतो मन्त्रयिष्यते ।

३. सखि, एवं कुर्वः ।

---

स्कंधशाखाविस्तारपल्लवे' इति मेदिनी च । तेषां अंधकारे प्रविश्य गत्वा एनं वानरं अतिवाहयावः यापयावः । एकांते पूर्वोक्ततमालविटपांधकारे । **सागरिका**—उज्झितः त्यक्तः 'त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टे' इत्यमरः । प्रेक्षते प्रेक्षिष्यते इत्यर्थः । वर्तमानसामीप्ये लट् । **सुसंगता**—सुस्थिते इति सुतरां स्थिरचित्ते संभ्रमकारणे उपस्थितेऽपि कथं स्थिरचित्ताऽसि इति बोधनार्थं इदं संबोधनं तदेवाह—**किमद्यापीत्यादिना** । अद्यापि एतस्मिन्संभ्रमकालेपि चित्रफलकेन किं करिष्यसीत्यन्वयः । संभ्रमकालमेवाह—**एष इत्यादिना** । दधिभक्तलंपटः दध्ना भक्तः ओदनः 'भक्तमंधोऽन्नमोदनोऽस्त्री स दीदिविः' इत्यमरः । 'अन्नेन व्यंजनं' इति समासः । अंतर्भूतोपसेकक्रियाद्वारा सामर्थ्यं । दधिभक्तस्य लंपटः लुब्धः निष्क्रांतः गतः पंजरस्थदधिभक्तभक्षणेच्छया सारिकापंजरमुद्घाट्य एष वानरो गत इत्यर्थः । अत एवाह—**एषेत्यादि** । खल्विति वाक्यालंकारे उड्डीना उत्पूर्वकात् डीङ् विहायसा गतौ इत्यस्मात् क्तप्रत्ययः । 'स्वादय ओदित' इत्यनेन डीङ् ओदित्वान्निष्ठानत्वं, अन्यतः अन्यत्र स्थले 'इतराभ्योपि दृश्यंते' इत्यनेन सप्तम्यंतात्तसिल् तत् इति यदियमुड्डीयते तस्मात्कारणादित्यर्थः । लघु क्षिप्रं अनुसरावः अनुगच्छावः एतस्य पूर्वोक्तस्याऽऽलापस्य भाषणस्य गृहीताक्षरा गृहीतानि उच्चरितानि अक्षराणि वर्णा यया सा पुरतः अग्रतः 'स्यात्पुरः पुरतोऽग्रतः' इत्यमरः । मंत्रयिष्यति उच्चारयिष्यति । **सागरिका**—एवं त्वदुक्तमित्यर्थः । परिक्रामतः सारिकां धर्तुमिति

(नेपथ्ये)

[1]हीही अच्चरिअं अच्चरिअं।

**सागरि०**—(विलोक्य) [2]सुसंगदे जाणीअदि, कहं पुणो दुट्ठवाणरो जेव्व आअच्छदि।

**सुसङ्ग०**—(दृष्ट्वा विहस्य) [3]अइ काअरे, ण भेहि भट्टिणो परिवासवत्ती खु एसो अज्जवसंतओ।

(ततः प्रविशति वसन्तकः।)

**वसन्त०**—[4]हीही भोः। अच्चरिअं अच्चरिअं। साहु रे सिरिखंडदास धम्मिअ साहु।

**सागरि०**—(सस्पृहमवलोकयति) [5]सँहि सुसङ्गदे, दंसणीओ खु अअं जणो।

---

१. ही ही आश्चर्यम् आश्चर्यम्।
२. सुसंगते ज्ञायते, कथं पुनर्दुष्टवानर एवागच्छति।
३. अयि कातरे, न बिभीहि भर्तुः परिपार्श्ववर्ती खलु एष आर्यवसन्तकः।
४. ही ही भोः। आश्चर्यम् आश्चर्यम्। साधु रे श्रीखण्डदास धार्मिक साधु।
५. सखि सुसंगते, दर्शनीयः खल्वयं जनः।

---

शेषः। ही ही इदं हास्यानुकरणं आश्चर्यमाश्चर्यमिति संभ्रमाद्द्विरुक्तिः। **सागरि० विलोक्येति**। कुतोऽयं शब्द इति विलोकनं। कथमिति प्रश्ने। ज्ञायते किमित्यर्थः। पुनरपि एष दुष्टवानर एवागच्छतीति विशिष्टं ज्ञानस्य कर्म। **सुसंगता**—दृष्ट्वा अर्थाद्विदूषकं। विहस्येति हासकारणं विदूषकशब्देन अयं वानर इति मत्वा इयं बिभेतीति। तदेवाह **अयीत्यादिना**। कातरे अधीरे 'अधीरे कातरस्त्रस्ते' इत्यमरः न बिभेहीति प्राप्तकाले लोट्। भयस्यायं कालो नेत्यर्थः। तदेवाह—**भर्तुः** वत्सराजस्य। पार्श्वौ परित इति परिपार्श्वौ 'अत्यादयः क्रांताद्यर्थे द्वितीयया' इति प्रादिसमासः। परिपार्श्वयोः अवश्यं वर्तते इति परिपार्श्ववर्ती सेवक इत्यर्थः। 'आवश्यकाधमर्ण्ययोर्णिनिः' इति णिनिः। खलु इति निश्चये। एषः पुरोवर्ती आर्यवसंतकः एतन्नामा विदूषकः। **वसंतकः**—हीहीत्यादि पूर्वं व्याख्यातं। श्रीखंडदासः एतन्नामकधार्मिकः धर्मं चरतीति ठक्। साधु क्रियाविशेषणमिदं चारु इत्यर्थः। 'साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्' इति मेदिनी। तव साधुकृतिरित्यर्थः। **सागरिका**—सस्पृहमवलोक्येति विचित्रवेषभाषादिदर्शनविषयिणी स्पृहा। अयं जनः वसंतकरूपः

सुसङ्ग०—सहि सुत्थिदे, किं एदिणा दिट्ठेण । दूरीभूदा खु सारिआ । ता एहि । अणुसरेम्ह ।

(इति निष्क्रान्ते ।)

वसन्त०—साहु रे सिरिखंडदास धम्मिअ साहु । जेण दिण्णमेत्तेण जेव तेण दोहअएण ईदिसी णोमालिआ संवुत्ता । जेण णिरंतरुब्भिण्णकुसुमगुच्छाच्छादिअविडवाउवहसंती विअ लक्खिअदि देवीपरिगहीदा माहवीलदा । ता जाव गदुअ पिअवअस्सं णिवेदेमि । (परिक्रम्यावलोक्य च ।) एसो खु पिअवअस्सो तस्स दोहअस्स लद्धपच्चअदाए परोक्खं वि तं णोमालिअं पच्चक्खं विअ कुसुमिदं पेक्खंतो हरिसुप्फुल्ललोअणो इदो ज्जेव आअच्छदि । ता जाव णं उवसप्पामि । (इति राजानं प्रति निर्गतः ।)

---

१. सखि सुस्थिते, किमनेन दृष्टेन । दूरीभूता खलु सारिका । तदेहि । अनुसरावः ।

२. साधु रे श्रीखण्डदास धार्मिक साधु । येन दत्तमात्रेणैव तेन दोहदकेनेदृशी नवमालिका संवृत्ता । येन निरन्तरोद्भिन्नकुसुमगुच्छाच्छादितविटपोपहसन्तीव लक्ष्यते देवीपरिगृहीता माधवीलता । तद्यावद्गत्वा प्रियवयस्यं निवेदयामि । एष खलु प्रियवयस्यस्तस्य दोहदस्य लब्धप्रत्ययतया परोक्षामपि तां नवमालिकां प्रत्यक्षामिव कुसुमितां प्रेक्षन् हर्षोत्फुल्ललोचन इत एवागच्छति तद्यावदेनमुपसर्पामि ।

---

दर्शनीयः विलोकनार्ह इत्यर्थः । 'अर्हे कृत्यतृचश्च' इत्यनीयर्प्रत्ययः । **सुसंगता**—किमेतेन दृष्टेनेति एतेन समीपतरवर्तिना आर्यवसंतकेन दृष्टेन किं फलमिति शेषः । सारिका दूरीभूता विप्रकृष्टा खलु । तत् सारिकाया दूरीभवनाद्धेतोः अनुसरावः अर्थात्सारिकामिति कर्म ग्रहणार्थमिति शेषः । निष्क्रांते गते । **वसंतकः**—साधु रे इत्यादिवाक्यं अधुनैव व्याख्यातं, येन त्वयेत्यर्थः । दत्तमात्रेणैव दत्तमेव दत्तमात्रं मयूरव्यंसकादित्वात्समासः । तेन पूर्वोक्तेन दोहदकेन वृक्षस्य फुल्लतापादकचूर्णविशेषेण ईदृशीं प्रफुल्लेत्यर्थः । संवृत्ता संपन्ना । प्रफुल्लत्वमेव विशदयति—**येनेत्यादिना** । येन हेतुना निरंतरं निरवकाशं यथा स्यात्तथा उद्भिन्नाः उत्पन्नाः कुसुमानां पुष्पाणां गुच्छाः स्तवकाः 'गुच्छः स्तवकहारयोः' इत्यमरः । तैराच्छादिता विटपाः शाखा यस्याः सा 'विटपो न स्त्रियां स्तंबशाखाविस्तारपल्लवे' इति मेदिनी । तत् नवमालिकायाः प्रफुल्लत्वाद्धेतोः प्रियवयस्यस्य वत्सराजस्य संबंधसामान्ये षष्ठी । निवेदयामि कथयामि । परिक्रम्य इतस्तत आहिंड्य । अवलोक्येति अर्थाद्वत्सराजं । तदेवाह—**एष खल्वि-**

(ततः प्रविशति यथानिर्दिष्टो राजा।)

राजा—(सहर्षम्)

उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरतैरातन्वतीमात्मनः।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवम्
पश्यन्कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥ ४ ॥

त्यादिना। खलु अवधारणे। प्रियवयस्यो वत्सराजः दोहदस्य चूर्णविशेषस्य लब्धप्रत्ययतया लब्धः प्राप्तः प्रत्ययो विश्वासः अनुभव इति यावत् यस्य तस्य भावो लब्धप्रत्ययता तया। गृहीतानुभवेनेति यावत्। परोक्षामपि इंद्रियगोचरामपीत्यर्थः। प्रत्यक्षामिव इन्द्रियगोचरामिव कुसुमितां कुसुमानि पुष्पाणि संजातानि यस्याः सा 'स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमं' इत्यमरः। 'तदस्य संजातं तारकादिभ्य इतच्' इति तारकादित्वादितच्। प्रेक्षन् विलोकयन्। यद्यपि ईक्षतिरनुदात्तेत्तथापि अनुदात्तेत्वलक्षणमात्मनेपदमनित्यमिति सिद्धांतात् अत्रायं प्रयोगो यथाकथंचित्साधुः। वस्तुतस्तु प्रेक्षमाण इति युक्तं। हर्षेण नवमालिकाकुसुमोद्भेदजन्याह्लादेन उत्फुल्ले विकसिते लोचने नेत्रे यस्य 'लोचनं नयनं नेत्रं' इत्यमरः। तत् तस्मात्कारणात् प्रियवयस्यस्याऽत्रैवाऽऽगमाद्धेतोः एनं अन्वादेशत्वादेनादेशः उपसर्पामि समीपं गच्छामि। राजानं प्रति निर्गत इति 'लक्षणेत्थंभूते'त्यादिना लक्षणे प्रतिः कर्मप्रवचनीयस्तद्योगे द्वितीया। राजसमीपं गत इति यावत्। यथा निर्दिष्ट इति पृथक्पदे तेनाऽव्ययीभावशंका न कार्या। यथा निर्दिष्टस्तथेति शेषः। सहर्षमिति हर्षकारणं श्लोकेन स्पष्टयति। उद्दामेत्यादिना। अद्य अस्मिन्नहनि 'सद्यः परुत्परारी'त्यादिनाऽस्मिन्नहनीत्यर्थे अद्येति निपातः। इमां सन्निकृष्टां उद्यानलतां उद्यानस्य आक्रीडस्य 'पुमानाक्रीड उद्यानं' इत्यमरः। लतां वल्लीं समदनां मदनेन मन्मथेन सहितां 'वोपसर्जनस्य' इति सहस्य सादेशः। अन्यां इतरां नारीमिव स्त्रीमिव पश्यन् अवलोकयन् अहं ध्रुवं निश्चितं देव्या वासवदत्तायाः मुखं वक्त्रं विपाटलद्युति विशेषेण पाटला श्वेतरक्ता 'श्वेतरक्तस्तु पाटलः' इत्यमरः। द्युतिर्यस्य तादृशं करिष्यामि, पत्न्या समदान्यनारीमुखविलोकने स्वीयायाः क्रोधेन आताम्रमुखं भवति। एतेन श्लोकेन राज्ञो नवमालिकादर्शने औत्सुक्यं दर्शितम्। तल्लक्षणं साहित्यदर्पणे 'इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता। चित्ततापत्वराखेदर्दीर्घनिःश्वसितादिकृत्' इति। अत्र तु वत्सराजगृहीतनवमालिकापुष्पोद्गमेन स्वीयमाधवीलतायाः पुष्पोद्गमाऽभावेन च वासवदत्ताया मुखे पाटलिमोत्पत्तिरित्यभिप्रायः। अन्यनारीसाम्यमेवोद्यानलताया आह—उद्दामेत्यादिना। उद्दामा वंधरहिताः, परिपूर्णा इति यावत्। 'उद्दामो वंधरहिते' इति मेदिनी। एतादृशाः उद्गता बहिर्गताः कलिकाः कोरका यस्याः सा 'कलिका कोरकः पुमान्' इत्यमरः। नारीपक्षे उद्दामा निष्प्रतिवन्धा उत्कलिका उत्कंठा प्रियविषयिणी यस्याः सा 'उत्कंठोत्कलिके समे' इत्यमरः। विपांडुररुचं विशेषेण पांडुरा सर्वत्र पुष्पोद्गमाच्छुभ्रा रुक् कांतिर्यस्याः

वसन्त०—(सहसोपसृत्य) जअदु जअदु पिअवअस्सो । भो वअस्स, दिट्ठिआ वड्ढसि । जेण दिण्णमेत्तेण ज्जेव तेण दोहअएण ईदिसीं णोमालिआ संवुत्ता । जेण णिरंतरुब्भिण्णकुसुमगुच्छाच्छादिअविडवा उवहसंती विअ लक्खिअदि देवीपरिग्गहीदा माहवीलदा ।

राजा—वयस्य, कः संदेहः । अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः । पश्य—

कण्ठे श्रीपुरुषोत्तमस्य समरे दृष्ट्वा मणिं शत्रुभि-
र्नष्टं मन्त्रवरैर्वसन्ति वसुधामूले भुजङ्गा हताः ।

१. जयतु जयतु प्रियवयस्यः । भो वयस्य, दिष्ट्या वर्धसे । येन दत्तमात्रेणैव तेन दोहदकेनेदृशी नवमालिका संवृत्ता । येन निरन्तरुद्भिन्नकुसुमगुच्छाच्छादितविटपोपहसन्तीव लक्ष्यते देवीपरिगृहीता माधवीलता ।

सा । स्त्रीपक्षेऽप्येवमेव तत्र प्रियविरहेण पांडुरकांतिरिति विशेषः । प्रारब्धजृंभां प्रारब्धा जृंभा विकासो यया । 'जृंभा विकासजृंभणयोस्त्रिषु' इति मेदिनी । पक्षे प्रारब्धा जृंभा जृंभणं आलस्याख्यं व्यभिचारिभावो यया। एतल्लक्षणं **साहित्यदर्पणे** 'आलस्यं श्रमगर्भाद्यैर्जाड्यं जृंभासितादिकृत्' इति। अविरतैः संततैः 'सततानारताश्रांतसंततविरतानिशं' इत्यमरः । श्वसनानां वायूनां 'श्वसनः स्पर्शनो वायुः' इत्यमरः । उद्गमैः उत्पत्तिभिः आत्मनः स्वस्य क्षणात् आयासं भ्रमणजन्यखेदं आतन्वतीं विस्तारयंतीं । नारीपक्षे अविरतैः निरंतरैः 'श्वसनानां श्वासानां उद्गमैः आत्मनः स्वस्य क्षणात् आयासं खेदं आतन्वतीं विस्तारयतीं । शार्दूलविक्रीडितं वृत्तं । श्लेषालंकारः उपमा च ॥ ४ ॥ **वसंतकः**—सहसा 'अतर्किते तु सहसा' इत्यमरः । उपसृत्य समीपं गत्वा जयतु जयतु संभ्रमाद्विरुक्तिः । वयस्य वयसा तुल्यो वयस्यः 'नौवयोधर्मे'त्यादिना यत् । दिष्ट्येत्यानंदे । त्वं वर्धसे सर्वोत्कर्षेण वर्तसे इति दिष्ट्या । एतद्विषय आनंद इत्यर्थः । उत्कर्षहेतुमेव दर्शयति—**येनेत्यादिना** । येन दत्तमात्रेणेत्यादि पूर्वोक्तवाक्यं पुनः पठितं । **राजा**—कः संदेह इति किंशब्दोऽत्र प्रश्ने संदेहः संशयः । हि यतः 'हिर्हेतावधारणे' इत्यमरः । मणिमंत्रौषधीनां प्रभावः सामर्थ्यं अचिंत्यः चिंतनाशक्यः । अस्तीति शेषः । मणिमंत्रौषधीनां सामर्थ्यमतर्क्यमिति यावत् । अचिंत्यप्रभावमेव दर्शयति—**कंठेत्यादिना** । समरे युद्धे 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः । श्रीपुरुषोत्तमस्य पुरुषेषु क्षराक्षरसंज्ञकपुरुषेषु उत्तमः श्रेष्ठः । उक्तं च भगवद्गीतायां 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इति । पुरुषोत्तम इति सुप्सुपेति समासः । श्रिया युक्तः पुरुषोत्तमः श्रीपुरुषोत्तमः शाकपार्थिवादित्वादुत्तरपदलोपः । तस्य विष्णोः कंठे गले मणिं

पूर्वं लक्ष्मणवीरवानरभटा ये मेघनादाहताः
पीत्वा तेऽपि महौषधेर्गुणनिधेर्गन्धं पुनर्जीविताः ॥ ५ ॥

तदादेशय मार्गं येन वयमद्य तदवलोकनेन चक्षुषः फलमनुभवामः ।

वसन्त०—(साटोपम्) एदु एदु भवं ।

राजा—गच्छाग्रतः । आगे चलो ।

(उभौ सगर्वं परिक्रामतः) —चलते हैं ।

वसन्त०—(आकर्ण्य सभयं निवृत्य राजानं हस्ते गृहीत्वा ससंभ्रमम्) [2]भो वअस्स, एहि पलाअम्ह ।

---

१. एतु एतु भवान् ।
२. भो वयस्य, एहि पलायावः । भागो भाग चलें ।

---

कौस्तुभाख्यं दृष्ट्वाऽवलोक्य शत्रुभिः रिपुभिः नष्टं अदृश्यतां प्राप्तं नश अदर्शने नपुंसके भावे क्तः । मंत्राणां वराः श्रेष्ठाः तैर्हेतुभिः 'हेतौ' इति तृतीया । हताः ताडिताः न तु प्राणवियोगः । प्राणगमने हि पाताले गमनासंभवात् । भुजंगाः भुजैः भोगैः गच्छंतीति तथा खचो डित्वाट्टिलोपः । 'न निर्धारण' इति निषेधस्तु न निर्धारणावधिः निर्धार्यमाणं निर्धारणहेतुश्च एतन्नितयं यत्रोपात्तं तत्रैव निर्धारणे षष्ठीति सिद्धांतात् । एवं प्रकृते संबंधसामान्यषष्ठ्या समासः एवं पुरुषोत्तम इत्यत्रापि सुवचम् । वसुधामूले वसूनि दधातीति वसुधा 'आतोऽनुपसर्गे कः' इति कः तस्या मूले बुध्ने अधोभागे पाताले इति यावत् वसंति निवसंति । पूर्वं त्रेतायां, लक्ष्मणश्च वानराणां भटाः, वीराश्च ते वानरभटाश्च ये मेघनादेन इंद्रजिताऽऽहता नाशिताः तेऽपि मृता अपीत्यर्थः । गुणानां मृतसंजीवनादिगुणानां निधेः शेवधेः महौषधेः महती चासौ ओषधिश्च तस्याः संजीविन्याः गंधं सुगंधं पीत्वा प्राश्य । नासिकया आघ्रायेति यावत् । पुनः जीविताः जीव प्राणधारणे 'गत्यर्थाकर्मके'त्यादिना कर्तरि क्तः । तदुक्तं वाल्मीकीये युद्धकांडे चतुःसप्ततितमे 'तावप्युभौ मानुषराजपुत्रौ तं गंधमाघ्राय महौषधीनां । बभूवतुस्तत्र तदा विशल्यावुत्तस्थुरन्ये च हरिप्रवीराः ॥ सर्वे विशल्या विरुजाः क्षणेन हरिप्रवीराश्च हताश्च ये स्युः । गंधेन तासां प्रवरौषधीनां सुप्ता निशांतेष्विव संप्रबुद्धाः ॥' इति । शार्दूलविक्रीडितं ॥ ५ ॥ तत् तस्मात् 'यत्तद्यतस्ततो हेतौ' इत्यमरः । यस्मान्मणिमंत्रौषधीनां प्रभावोऽचिंत्यस्तस्मात् मार्गं नवमालिकाधिष्ठितभूमिमार्गं इत्यर्थः । आदेशय कथयेत्यर्थः । येनेति हेत्वर्थे तृतीया । तदवलोकनेन तस्याः नवमालिकायाः अवलोकनेन दर्शनेन चक्षुषो नेत्रस्य फलं प्रयोजनं यदिष्टवस्तुनः आतृप्तिदर्शनं तदित्यर्थः । वयं एकत्वेऽपि बहुवचनं 'अस्मदो द्वयोश्च' इत्यनेन अनुभवामः । सेवकाद्यभिप्रायेण वा बहुवचनं । **वसंतकः**—**एतु भवानिति** युष्मदस्मत्सामानाधिकरण्याभावात् प्रथमः पुरुषः । **राजा**—अग्रतः पुरः सगर्वमिति वासवदत्तागृहीतलतापेक्षया निजलतायाः प्रथमं प्रफुल्लत्वं गर्वहेतुः । **वसं०**—आकर्ण्य अर्थात् वक्ष्यमाणप्रकरणाद्धेतोः सारिकाशब्दमिति आकर्णन-

**राजा**—किमर्थम् ।

**वसन्तकः**—[१]भोः एअस्सिं बउलपाअवे कोवि भूदो पडिवसदि ।

**राजा**—धिङ् मूर्ख, विस्रब्धं गम्यताम् । कुत ईदृशानामत्र प्रभावः ।

**वसन्त०**—फुडक्खरं जेव्व मंतेदि । जई मम वअणं ण पत्तिआअसि ता अग्गदो भवीअ सअं जेव्व आअण्णेहि ।

**राजा**—(तथा कृत्वा श्रुत्वा च)

स्पष्टाक्षरमिदं यस्मान्मधुरं स्त्रीस्वभावतः ।
अल्पाङ्गत्वादनिर्ह्रादि मन्ये वदति सारिका ॥ ६ ॥

(ऊर्ध्वं निरूप्य निपुणमवलोक्य) कथं सारिका ।

---

१. भोः एतस्मिन् वकुलपादपे कोऽपि भूतः प्रतिवसति ।

२. स्फुटाक्षरमेव मन्त्र्यते । यदि मम वचनं न प्रत्याययसि तदग्रतो भूत्वा स्वयमेवाकर्णय ।

---

क्रियायाः कर्म । सभयमिति भयकारणं अयं भूतशब्द इति भ्रांतिः । निवृत्य परावृत्य राजानं हस्ते गृहीत्वेति हस्तावच्छेदेनेत्यर्थः । वृक्षमूले अवष्टभ्येतिवत् । ससंभ्रमं अत्र संभ्रमस्यापि भूतशब्दोऽयमिति भ्रांतिरेव कारणं । पलायावः इति अत्र अनुदात्तेत्वलक्षणमात्मनेपदमनित्यमित्यभिप्रायेण परस्मैपदमिति भाति 'उपसर्गस्यायतौ' इति लत्वं । **राजा—किमर्थमिति** । पलायनक्रियाया विशेषणमिदम् । कः अर्थः प्रयोजनमस्य इति षष्ठीवहुव्रीहिः 'अर्थेन नित्यसमास' इति वार्तिकेन वा समासः । **वसं०**—वकुलपादपे केसरवृक्षे 'अथ केसरे वकुलः' इत्यमरः । भूतः पिशाचः । 'भूतं क्ष्मादौ पिशाचादौ' इति मेदिनी । **राजा—धिङ् मूर्खेति** । धिगिति भीतिक्रियायां निंदाद्योतकं तेन मूर्ख इत्यस्मात् 'धिगुपर्यादिषु त्रिषु' इत्यनेन द्वितीया न भवति । विस्रब्धं सविश्वासं गम्यतामिति गमनक्रियाया विशेषणं । ईदृशानां भूतादीनां अत्र अस्मिन् स्थाने प्रभावः सामर्थ्यं कुतः भवेदिति शेषः । **वसंत०**—स्फुटानि स्पष्टानि अक्षराणि यस्मिन् स्फुटाक्षरं मंत्रणक्रियाया विशेषणं । मंत्र्यते इति भावेप्रत्ययः । केनापीति शेषः । न प्रत्याययसि न विश्वसिषि तत् तर्हीत्यर्थः । अग्रतः अग्रभागे भूत्वा स्थित्वा आकर्णय शृणु । **राजा—तथा कृत्वेति** । अग्रतो गत्वेत्यर्थः । श्रुत्वा आकर्ण्य च यस्माद्धेतोः इदं भाषणं । स्पष्टानि स्फुटानि अक्षराणि वर्णा यस्मिन् "स्पष्टं स्फुटं प्रव्यक्तमुल्बणं" इत्यमरः । तथा स्त्रीस्वभावतः स्त्रीधर्मादित्यर्थः । मधुरं, स्त्रीणां हि प्रायो भाषणं मधुरं भवति, अल्पांगत्वात्

**वसन्त०**—( विचार्य ) कधं सच्चं जेव्व सारिआ।[1]

**राजा**—( सस्मितम् ) वयस्य एवम् ।

**वसन्त०**—[2]भो वअस्स, तुमं भआलुओ । जेण सारिअं भूदेत्ति मंतेसि ।

**राजा**—धिङ् मूर्ख यदात्मना कृतं तन्मयि सम्भावयसि ।

**वसन्त०**—[3]भो जइ एव्वं मा खु मं णिवारेसि । ( सरोषं दण्डकाष्ठमुद्यम्य ) आः दासीए धीए, तुमं जाणासि सच्चं जेव्व वसंतओ भाअदित्ति । ता चिट्ठ चिट्ठ दाव मुहुत्तं जाव इमिणा पिसुणजणहिअअकुडिलेण दंडअट्ठेण पडिपक्कं विअ कइत्थफलं इमादो बउलपाअवादो आहणिअ भूमिए पाडइस्सं ।

---

१. कथं सत्यमेव सारिका ।

२. भो वयस्य, त्वं भयालुकः येन सारिकां भूत इति मन्त्रयसे ।

३. भो यद्येवं मा खलु मां निवारय । आः दास्याः पुत्रि, त्वं जानासि सत्यमेव वसन्तको बिभेतीति । तत्तिष्ठ तिष्ठ तावन्मुहूर्तं यावदेतेन पिशुनजनहृदयकुटिलेन दण्डकाष्ठेन परिपक्कमिव कपित्थफलमस्माद्बकुलपादपादाहत्य भूमौ पातयिष्यामि ।

---

अल्पं अंगं शरीरं यस्याः सा तस्या भावः तस्मात् अल्पशरीरत्वादिति भावः । अनिह्रादि अप्रसृतं अदूरग्राह्यमिति यावत् अस्तीति शेषः । अतः सारिका वदतीति मन्ये । अनुष्टुब्वृत्तम् ॥६॥ निपुणं सप्रावीण्यं तदेकाग्रत इति यावत् । **वसंत०—विचार्येति** । यतः प्रियमित्रं इयं सारिकेति भणति अतः सारिकेयं भवेत् इति विचार्येत्यर्थः । कथं प्रश्ने । सत्यमेव यथार्थमेव । **राजा सस्मितमिति** । सारिकामपि भूतमिति मत्वाऽयं अबिभेत् इति स्मयः । **एवमिति** । सारिकैवेत्यर्थः । **वसंत०**—भयालुकः भयशीलः । **राजा**—यत् भयालुकत्वं, कृतं आचरितं, संभावयसि आरोपयसि । **वसं०**—यद्येवमहमेव भयशीलः । तच्च भयमनया उत्पादितं तस्मादियमेवाऽपराधिनीत्याह—**मा खल्वित्यादिना** । माशब्दयोगे लोडुत्पत्तिः पूर्वमुपपादिता । सरोषमिति रोषकारणं मामपि भीषयतीति । आः इति कोपे । 'आस्तु स्यात्कोपपीडयोः' इत्यमरः । दास्याः पुत्रीति । इदं वाक्यं 'षष्ठ्या आक्रोशे' इत्यलुग्वा । तत् अपराधकारित्वात् । तिष्ठ तिष्ठ इति लौकिकोक्त्या द्विर्वचनं । एतेन हस्तगृहीतेन । पिशुनः दुर्जनः तस्य हृदयमिव कुटिलेन वक्रेण परिपक्कं परिणतं 'पक्कं परिणते' इत्यमरः । कपित्थफलमिवेत्यन्वयः ।

मुन्द( बात कह रही है।

**राजा**—( निवारयन् ) मूर्ख, किमप्येषा रमणीयं व्याहरति । तत्किमेनां त्रासयसि । शृणुवस्तावत् ।

डराता है।

( उभावाकर्णयतः । )

AJK | **वसन्त०**—एवं भणादि । इमस्स बम्हणस्स भोजणं दिज्जेति ।

**राजा**—सर्वमप्यौदरिकस्याभ्यवहार एव पर्यवस्यति । तत्सत्यं वद । किमालपति सारिका ।

**वसन्त०**—( आकर्ण्य ) भो वअस्स, सुदं तुए जं एदाए मंतिदं । एसा भणादि '—सहि, को एसो तुए आलिहिदो । पउत्तमअणमहूस्सवे भअवं अणंगोत्ति । पुणोवि भणादि । सहि, कीस तुए अहं एत्थं आलिहिदा । सहि, किं अआरणे कुप्पसि । जादिसो तुए कामदेवो आलिहिदो तादिसी मए रइ आलिहिदेत्ति । ता अण्णधासंभाविणि किं तुह एदिणा आलविदेण । कहेहि सवं वुत्तंतं—' । ता भो वअस्स, किं णेदं ।

---

१. एवं भणति एतस्य ब्राह्मणस्य भोजनं देहीति ।

२. भो वयस्य, श्रुतं त्वया यदेतया मन्त्रितम् । एषा भणति सखि, क एष त्वयाऽऽलिखितः । प्रवृत्तमदनमहोत्सवे भगवाननङ्ग इति । पुनरपि भणति । सखि, कस्मात्त्वयाहमत्रालिखिता । सखि, किमकारणे कुप्यसि । यादृशस्त्वया कामदेव आलिखितस्तादृशी मया रतिरालिखितेति । तदन्यथासम्भाविनि किं तवैतेनालपितेन । कथय सर्वं वृत्तान्तम् । तत् भो वयस्य, किंन्विदम् । जा[illegible]

---

अस्मात्पुरोवर्तिनः वकुलपादपात् केसरवृक्षात् आहत्य ताडयित्वा पातयिष्ये भ्रंशयिष्ये । हंतुमुद्यतः दंडकाष्ठोद्यमनादिहननोपायं कर्तुमुद्यतः । **राजा**—निवारयन् निवारणं च तद्धस्तादंडकाष्ठादिग्रहणं । मूर्ख, सारासारविचारशून्येत्यर्थः । किमपीति व्याहरणक्रियाया विशेषणं । रमणीयं मनोहरं व्याहरति वक्ति । तत् शोभनव्याहरणाद्धेतोरित्यर्थः । एनां किं त्रासयसि पीडयसीत्यर्थः । शृणुवः आकर्णयावः । तावदिति वाक्यालंकारे । उभौ वत्सराजविदूषकौ । **वसंतकः**—एवं वक्ष्यमाणप्रकारेण । भणति भाषते । तदेवाह—**एतस्येत्यादिना** । एतस्य मद्रूपस्य ब्राह्मणस्य भोजनं देहीति संप्रदानस्य शेषत्वविवक्षायां षष्ठी । **राजा**—सर्वमपीति व्यवहारजातमित्यर्थः । औदरिकस्य उदरपूरणतत्परस्य 'उदराट्ठगाद्यूने' इति ठक् । 'आद्यूनः स्यादौदरिकः' इत्यमरः । अभ्यवहारे भक्षणे । अभ्यवपूर्वो हरतिर्भक्षणे 'अभ्यवहृतान्नजग्धे' त्यमरः । पर्यवस्यति समाप्नोति फलतीति यावत् । सारिका किमालपति तत्सत्यं वदेत्यन्वयः । **वसंत०**—एवं वक्ष्यमाणप्रकारेण तदेवाह—**सखीत्यादिना** । इदं पूर्वं व्याख्यातं तत एव द्रष्टव्यम् । तत् एतादृशवाक्यश्रवणाद्धेतोः श्रोतुमुत्कंठ

**राजा**—वयस्य, एवं तर्कयामि । कयापि हृदयवल्लभोऽनुरागादभिलिख्य कामदेवव्यपदेशेन सखीपुरतोऽपह्नुतः तत्सख्यापि प्रत्यभिज्ञाय वैदग्ध्यादसावपि तत्राऽऽलिख्य रतिव्यपदेशेन दर्शितेति ।

**वसं०**—( छोटिकां दत्वा ) [1]भो वअस्स, जुज्जदि खु एदं ।

**राजा**—भो वयस्य, तूष्णीं भव । पुनरपि व्याहरति । तच्छृणुवस्तावत् ।

( उभावपि शृणुतः । )

**वसं०**—[2]भोः पुणोवि एसा एवं भणादि । '—सहि, मा लज्ज । ईदिसस्स कण्णारअणस्स अवस्सं जेव ईदिसे वरे अहिलासेण होदव्वं—' भो वअस्स, मा पंडिअगव्वं उव्वह । अहं दे एदाए मुहादो

---

१. भो वयस्य युज्यते खल्वेतत् ।

२. भोः पुनरप्येषैवं भणति । सखि, मा लज्जस्व । ईदृशस्य कन्यारत्नस्यावश्यमेवेदृशे वरेऽभिलाषेण भवितव्यम् । भो वयस्य, मा पण्डितगर्वमुद्वह ।

---

जायते इति शेषः । इदं भाषितं किंतु किं विषयमिति यावत् । **राजा**—एवं वक्ष्यमाणप्रकारकं तर्कयामि ऊहे इत्यर्थः । तदेवाह—**कयाऽपीत्यादिना** । हृदयस्य वल्लभः प्रियः 'दयितं वल्लभं प्रियं' इत्यमरः । अनुरागात् प्रेम्णा अभिलिख्य अपह्नवक्रियापेक्षयाऽभिलेखनक्रियायाः पूर्वकालिकत्वात् क्त्वाप्रत्ययः समासे ल्यबादेशश्च । कामदेवस्य मदनस्य व्यपदेशेन व्याजेन सखीपुरतः सख्यग्रभागे 'स्यात्पुरः पुरतोऽग्रतः' इत्यमरः । अपह्नुतः गोपितः । अत्र हृदयवल्लभस्य आलेखनक्रियाकर्मत्वेऽपि प्रधानीभूताऽपह्नवक्रियापेक्षयाऽभिहितत्वात्प्रथमा । अत्र वक्तव्यविशेषः प्रथमांके निरूपितः । तत्सख्या तस्या आल्या । लिंगविशिष्टपरिभाषया 'राजाहःसखिभ्यष्टच्' इति टच् तु न भवति । समासांतविधौ तस्या अनित्यत्वसिद्धांतात् । वैदग्ध्याच्चातुर्यात् । असावपि स्वसख्यपि । तत्र चित्रफलके रतिव्यपदेशेन रतिव्याजेन । रतिव्यपदेशेन आलिख्य दर्शितेत्यन्वयः । **वसं०**—छोटिकां अंगुष्ठतर्जनीकृतशब्दश्छोटिकापदवाच्याः ( 'चुटकी' इति भाषायां ) युज्यते युक्तं भवतीत्यर्थः । 'सृजियुज्योः श्यंस्तु' इत्यनेन कर्मवद्भावः यगपवादः श्यन् च । **राजा**—तूष्णीमिति मौनार्थेऽव्ययं मौनी भवेत्यर्थः । 'मौने तु तूष्णीं तूष्णीका'मित्यमरः । पुनरपि व्याहरति पुनर्भाषते तत् भाषणं शृणुतः आकर्णयतः । **वसंत०**—एवं वक्ष्यमाणप्रकारेण । तदेवाह—**सखीत्यादिना** । एतदपि पूर्वं व्याख्यातं । पंडितगर्वं मा उद्वहेत्यन्वयः । पंडितस्य गर्वः तं अहमेव तर्ककुशल इति गर्वं मा भृथा इत्यर्थः । अहमप्येतदभिप्रायं तर्केण जानामीत्यत आह—**अहमित्यादिना** । एतस्या मुखतः सर्वं श्रुत्वा अहं ते व्याख्यास्यामि इत्यन्वयः ॥

सुणीअ सव्वं वक्खाणइस्सं। जा एसा आलिहिदा सा खु कण्णा दंसणीआ।

**राजा**—यद्येवमवहितैः श्रोतव्यम्। अस्त्यत्रावकाशो नः कुतूहलस्य।

(इत्युभावाकर्णयतः।)

**वसन्त०**—'भो वअस्स सुदं तुए जं एदाए मंतिदं। '—सहि, अदोवि मे अधिअदरं संदावो वड्ढदि। सहि, अवणेहि इमाइं णलिणीपत्ताइं मुणालवलआइं च। अलं एदिणा। कीस अआरणे अत्ताणं आआसेसि—'।

**राजा**—वयस्य, न केवलं श्रुतं अभिप्रायोऽपि लक्षितः।

**वसन्त०**—'भो वअस्स, अज्जवि कुरकुराअदि एव्व एसा सारिआ दासीए धीआ। ता सव्वं सुणीए वक्खाणइस्सं।

---

अहं त एतस्या मुखाच्छ्रुत्वा सर्वं व्याख्यास्यामि। या एषा आलिखिता सा खलु कन्या दर्शनीया।

१. भो वयस्य, श्रुतं त्वया यदेतया मन्त्रितम्। सखि, अतोऽपि मे अधिकतरं संतापो वर्धते सखि अपनयेमानि नलिनीपत्राणि मृणालवलयानि च। अलमेतेन। कस्मादकारण आत्मानमायासयसि।

२. भो वयस्य, अद्यापि कुरकुरायते एव एषा सारिका दास्याः पुत्री। तत्सर्वं श्रुत्वा व्याख्यास्यामि।

---

दर्शनीया 'अर्हे कृत्यतृचश्चे'ति अर्हार्थे अनीयर्। अवलोकनार्हा। लोकोत्तरसौंदर्यवतीति यावत्। **राजा**—यद्येवं लोकोत्तरसौंदर्यवती ततो हेतोः अवहितैः सावधानैः 'अवधानं समाधान'मित्यमरः। श्रोतव्यं आकर्णयितव्यं। नः कुतूहलस्य कौतुकस्य 'कौतूहलं कौतुकं च कुतुकं च कुतूहल'मित्यमरः। अवकाशः स्थित्यर्हप्रदेशः उत्तरोत्तरं कौतुकाधिक्यमिति तात्पर्यं। **वसं०**—यत् अनया मंत्रितं भाषितं। 'मन्त्रि गुप्तपरिभाषणे' तत्त्वया श्रुतमित्यन्वयः। किं तदित्याह—**सखीत्यादिना**। इदमपि व्याख्यातम्। **राजा**—न केवलं श्रुतमिति केवलं श्रवणमक्षरग्रहणं तथा नेत्यर्थः। किं तर्हीत्याह—**अभिप्रायोऽपीति**। लक्षितः ज्ञातः। **वसं०**—कुरकुरायत इति कुरकुर इति शब्दानुकरणं, कुरकुर इति शब्दः अस्याऽस्तीति कुरकुरः कुरकुरशब्दकर्ता अर्शआद्यच् स इवाचरतीति कुरकुरायते 'कर्तुः क्यङ् सलोपश्चे'ति आचारे

**राजा**—युक्तमभिहितम् ।

(पुनराकर्णयतः ।)

**वसन्त०**—[1]भो वअस्स, एसा खु सारिआ दासीए दुहिदा चउवेदी वम्हणो विअ रिचाइं भणिदुं पउत्ता ।

**राजा**—वयस्य, कथय किमप्यन्यचेतसा मया नावधारितं किमनयोक्तमिति ।

**वसन्त०**—[2]भो एवं भणादि ।

दुल्लहजणाणुराओ लज्जा गुरुई परवसो अप्पा ।
पिअसहि ! विसमं प्पेमं मरणं सरणं णु वरमेक्कं ॥

**राजा**—(सस्मितम्) एवंविधं भवन्तं ब्राह्मणं मुक्त्वा कोऽन्य एवंविधानामृचामभिज्ञः ।

---

१. भो वयस्य, एषा खलु सारिका दास्या दुहिता चतुर्वेदी ब्राह्मण इव ऋचो भणितुं प्रवृत्ता ।

२. भो एवं भणति ।

दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा ।
प्रियसखि ! विषमं प्रेम मरणं शरणं नु वरमेकम् ॥

---

क्यङ् । कुरकुरशब्दकर्तृपुरुषवत् शब्दं करोतीति तात्पर्यं । दास्याः पुत्रीति लौकिकोक्तिरलुक्समासो वाक्यं वा तत् । एतद्विवक्षितं यत्तदित्यर्थः । व्याख्यास्यामि कथयिष्ये । **राजा**—युक्तं योग्यं अभिहितं उक्तं । 'उक्तं भाषितमुदितं जल्पितमाख्यातमभिहितं लपितं' इत्यमरः । पुनः अप्रथमं 'पुनरप्रथमे भेदे' इति कोषः । आकर्णयतः शृणुतः । अत्राकर्णनं आकर्णनाभिनयः तत्स्वरूपं पूर्वमुक्तं । **वसंत०**—खल्विति अवधारणे दास्या दुहिता । अत्रापि लौकिकोक्तिः । चतुर्णां वेदानां समाहारश्चतुर्वेदं सोऽस्यास्तीति चतुर्वेदी तद्धितार्थेत्यादिना समाहारद्विगौ 'अत इनिठनौ' वितीनिः । ऋचः छंदोबद्धमंत्रविशेषान् । **राजा**—कथय वद किमनयोक्तं इति तत्कथयेत्यर्थः । नन्वाभ्यामप्यावाभ्यां सममेव श्रुतं तत् त्वयैव कथं न निरधारीत्यत आह—**अन्यचेतसेति** । अन्यस्मिन्कार्ये चेतोऽन्तःकरणं यस्य तेन मया किमपि नावधारितं न निश्चितमित्यर्थः । **वसंत०**—एवं वक्ष्यमाणप्रकारेण । तदेवाह—**दुर्लभेत्यादिना** । इदमपि व्याख्यातं । **राजा**—सस्मितमिति मूर्खोऽयं गाथा अपि ऋच इति जानाति इति स्मिताभिप्रायः । तमेवाशयं सोल्लुण्ठनोक्त्या प्रकटयति । एवंविधं एवं मूर्खत्वाऽवच्छिन्ना विधा प्रकारो यस्य । एवंविधानां एवं गाथात्वरूपा विधा प्रकारो यासां

**वसन्त०**—तदो किं णु खु एदं ।

**राजा**—ननु गाथिकेयम् ।

**वसन्त०**—किं गाथिआ । तदो किं कहिअं ।

**राजा**—वयस्य कयापि श्लाघ्ययौवनया प्रियतममनासादयन्त्या जीवितनिरपेक्षयोक्तम् ।

**वसन्त०**—( उच्चैर्विहस्य ) भो किं एदेहिं वक्कभणिदेहिं । उज्जुअं एव्व किं ण भणासि जह मं एव्व अणासाअअंतीए त्ति । अण्णहा को अण्णो कुसुमचावववदेसेण णिण्हवीअदि । ( हस्ततालं दत्वोच्चैर्विहसति । )

---

१. ततः किं नु खल्विदम् ।

२. किं गाथिका । ततः किं कथितम् ।

३. भोः किमेतैर्वक्रभणितैः । ऋजुकमेव किं न भणसि यथा मामेवानासादयन्त्येति । अन्यथा कोऽन्यः कुसुमचापव्यपदेशेन निह्नूयते ।

---

तादृशां ऋचां अभिज्ञः अस्तीति शेषः । **वसं०**—सोल्लुंठनोक्तिमवगत्य वसंतकः पृच्छति । **तत इत्यादिना** । इदं सारिकोक्तं वाक्यं—किं नु ततः किं तर्हीत्यर्थः । **राजा**—उत्तरमाह—ननु गाथिकेयमिति । नन्वित्यामंत्रणे 'प्रश्नावधारणानुज्ञानुनयामंत्रणे ननु' इत्यमरः । गाथैव गाथिका स्वार्थे कः । गाथा श्लोकः 'गाथा श्लोके संस्कृतान्यभाषायां गेयवृत्तयोः' इति मेदिनी । **वसं०**—किं गाथिका किं प्रश्ने । ततः तयेत्यर्थः । 'इतराभ्योपि दृश्यंते' इति तृतीयांतात्तसिः । तया किं कथितमित्यर्थः । **राजा**—श्लाघ्ययौवना श्लाघितुं अर्हं 'श्लाघ्यं अर्हार्थे ण्यत्' यौवनं यस्याः सा 'तारुण्यं यौवनं समे' इत्यमरः । प्रियतमं प्रेष्ठं अतिशायने तमप् । अनासादयंत्या अप्राप्तवत्या सीदतेर्ण्यंताच्छत्रंतान्ङीपि तृतीयैकवचनांतमिदं, जीविते जीवने निरपेक्षया निरिच्छया उक्तं अभिहितं । **वसं०**—उच्चैर्विहस्येति । उच्चैरिति विहसनक्रियाया विशेषणं । यद्यपीदमधिकरणशक्तिप्रधानं तथापि परविशेषणत्वे उच्चत्वबोधकमेव शब्दशक्तिस्वाभाव्यात् । अत एव 'उच्चैर्गतिर्जगति सिध्यति धर्मतश्चेत्' इति चंपूरामायणप्रयोगसंगतिः । एतैः कयाऽपि श्लाघ्ययौवनया इत्यादिपूर्वोक्तैः वक्रभणितैः कुटिलभाषणैः 'कुटिलं भुग्नं वल्लितं वक्रमित्यपि' इत्यमरः । किं, किं प्रयोजनमित्यर्थः । कयाऽपि नायिकया कमपि प्रियतममनासादयंत्या इत्यादि उदासीनत्वेन भाषणं किमर्थमित्यर्थः । तर्हि कथं वक्तव्यं इत्यत आह—**ऋजुकमित्यादिना** । ऋजुकमित्यत्र स्वार्थे कः । वक्तव्यमेवाभिनयति । यथा मामेवानासादयंत्येति । ननु कथमयं निश्चयः यत् मामेवोद्दिश्य तयेत्थमभिहितं । संति बहवः सुंदरा जगतीतले इति चेत् लोके सुंदरपुरुषबाहुल्येऽपि कुसुमचापव्यपदेशार्हं सौंदर्यं त्वय्येवेत्याह—**अन्यथेत्यादिना** । अन्यथा उक्तमिथार्थे 'अन्यथा पुनः । वितथे चापरार्थे च' इति

राजा—( ऊर्ध्वमवलोक्य ) धिङ् मूर्ख, किमुच्चैर्विहसता त्वया तपस्विनी त्रासितेयं येनोड्डीयान्यत्र क्वापि गता ।

( इति निरूपयतः । )

वसन्त०—( विलोक्य ) [1]भो वअस्स, अण्णधा मा संभावेहि । एसा कअलीहरं एव्व गदा । ता एहि अणुसरेम्ह ।

( इति परिक्रामतः । )

राजा—दुर्वारां कुसुमशरव्यथां वहन्त्या
कामिन्या यदभिहितं पुरः सखीनाम् ।
तद्भूयः शुकशिशुसारिकाभिरुक्तं
धन्यानां श्रवणपथातिथित्वमेति ॥ ७ ॥

---

१. भो वयस्य, अन्यथा मा संभावय । एषा कदलीगृहमेव गता । तदेह्यनुसरावः ।

---

मेदिनी । त्वामेवोद्दिश्य तयेत्थमभिहितं इति न चेदित्यर्थः । अन्यः इतरः कः पुरुषः कुसुमचापस्य मदनस्य 'पुष्पधन्वा रतिपतिर्मकरध्वज' इत्यमरः । व्यपदेशेन व्याजेन निह्नूयते गोप्यते । हस्ततालं हस्तोपरि हस्ताघातं । इदमत्यानंदप्रदर्शकं लिंगं । राजा—धिङ् मूर्खेति । अत्र धिक्‍शब्दो मूर्खेण योगाभावात् 'धिगुपर्यादिषु त्रिषु' इति द्वितीया न भवति इत्यावेदितं प्राक् । तपस्विनी अनुकंपार्हा 'तपस्वी तापसी चानुकंप्ये त्रिषु' इति मेदिनी । त्रासिता त्रसी उद्वेगे इत्यस्माण्णिजंतात् कर्मणि क्तप्रत्ययः । येन त्रासेन । अत्र त्रासः उच्चैर्हसनेन तस्या विस्रंभविघातः । निरूपयतः अवलोकयतः । वसंत०—विलोक्य अर्थात्सारिकां कदलीगृहं गृहाकारकदलीनिकुंजं तत् एतस्याः कदलीगृहप्रवेशाद्धेतोः अनुसरावः गच्छावः । राजा—दुर्वारां दुःखेन वारयितुमशक्यां दुरुद्धरामित्यर्थः । 'ईषद्दुःसुषु' इत्यादिना खल्प्रत्ययः । कुसुमानि पुष्पाणि शरा बाणा यस्य तस्य मदनस्य व्यथां पीडां वहंत्या धारयंत्या कामिन्या सुंदर्या 'कामिनी वामलोचना' इत्यमरः । यत् भाषणं सखीनां आलीनां 'आलिः सखी वयस्ये'त्यमरः । पुरः अग्रतः । अभिहितमुक्तं अभिपूर्वकाद्धधातेः क्तप्रत्ययः 'दधातेर्हिः' इति हिरादेशः । तत् भाषणं भूयः पुनः शुकानां कीराणां शिशवः 'कीरशुकौ समौ' इत्यमरः । सारिकाश्च ताभिरुक्तं धन्यानां पुण्यवतां । 'धन्यं पुण्यवति त्रिषु' इति मेदिनी । श्रवणस्य पंथाः श्रवणपथः 'ऋक्पूरब्धूःपथां' इत्यादिना समासांतः अप्रत्ययः । तस्य अतिथिः तस्य भावोऽतिथित्वं श्रवणगोचरत्वमिति यावत् । एति प्राप्नोति । अत्राहं धन्य एतादृशवाक्यश्रवणात् इति विशेषे प्रस्तुते धन्यानामित्यादि सामान्येनोक्तत्वात्सामान्येन विशेषसमर्थनरूपोऽर्थांतरन्यासालंकारः । अनुप्रासः शब्दालंकारश्च । तदुक्तं 'उक्तिरर्थांतरन्यासः स्यात्सामान्यविशेषयोः' इति ।

वसन्त०—[1]भो वअस्स, एदं खु कअलीहरं। जाव पविसम्ह।

(इत्युभौ प्रविशतः।)

वसन्त०—[2]भो अलं दासीए धीआए सारिआए अण्णेसणपअत्तेण। इध दाव मंदमारुदुव्वेलंतबालकदलीदलसीअले सिलादले उपविसिअ मुहुत्तअं वीसम्ह।

राजा—यदभिरुचितं भवते।

(इत्युपविशतः।)

राजा—(निःश्वस्य। 'दुर्वारां—' इति पुनः पठति।)

वसन्त०—(पार्श्वतोऽवलोक्य) [3]भो वअस्स, एदेण उग्घाडिअदुवारेण दुट्ठवाणरेण ताए सारिआए पंजरेण होदव्वं।

राजा—वयस्य, निरूप्यताम्।

---

१. भो वयस्य, एतत्खलु कदलीगृहं। यावत्प्रविशावः।

२. भो अलं दास्याः पुत्र्याः सारिकाया अन्वेषणप्रयत्नेन। इह तावन्मन्दमारुतोद्वेलद्बालकदलीदलशीतले शिलातले उपविश्य मुहूर्तं विश्राम्यावः।

३. भो वयस्य, एतेनोद्घाटितद्वारेण दुष्टवानरेण तस्याः सारिकायाः पञ्जरेण भवितव्यम्।

---

प्रहर्षिणीवृत्तं तल्लक्षणं 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयं' इति ॥ ७ ॥ **वसन्त०**—एतत्खलु, खलु अवधारणे एतदेवेत्यर्थः। यावदिति वाक्यालंकारे। उभौ वसंतकवत्सराजौ प्रविशतः अर्थात्कदलीगृहं। **वसंत०**—एतस्या समीपवर्तिन्याः दास्याः पुत्र्याः लौकिकोक्तिरियं। सारिकाया अन्वेषणप्रयत्नेन अलं न प्रयोजनमित्यर्थः। इह तावदित्यवधारणे इहैवेत्यर्थः। सप्तम्यंतं शिलातलस्य विशेषणं। मंदेन मारुतेन वायुना उच्चलंत्यः कंपायमानाः या बालकदल्यः कोमलरंभाः तासां दलानि पर्णानि तैः शीतले शीते 'तुषारः शीतलः शीतः' इत्यमरः। कदलीवने हि शीतला छाया भवति। तत्रापि मंदवायुना तत्पर्णचलनेऽतीव रमणीयता बोध्यते। शिलायाः पाषाणस्य तले पृष्ठे मुहूर्तं घटिकाद्वयपर्यंतं 'ते तु मुहूर्तौ द्वादशास्त्रियां' इत्यमरः। विश्राम्यावः विश्रांतिं गृह्णीवः। अत्र मुहूर्तमिति अत्यंतसंयोगे द्वितीया। **राजा**—भवते यदभिरुचितं तत्कुर्वः इति शेषः। भवते इत्यत्र चतुर्थी 'रुच्यर्थानां प्रीयमाणः' इत्यनेन संप्रदानत्वात्। **वसंत०**—पार्श्वत इति आद्यादित्वात्सप्तम्यंतात्तसिः। भो वयस्य, दुष्टवानरेण उद्घाटितद्वारेण एतेन तस्याः सारिकायाः पंजरेण भवितव्यमित्यन्वयः। उद्घाटितं विवृतं द्वारं यस्य सः। दुष्टवानरेण उद्घाटितद्वारोऽयं तस्याः पंजर इति

**वसन्त०**—[1]जं भवं आण्णवेदि त्ति । ( परिक्रम्यावलोक्य च ) एसो वि चित्तफलओ । जाव णं गेण्हामि ( गृहीत्वा निरूप्य च हर्षं नाटयति ) ।

**राजा**—( सकौतुकम् ) वयस्य, किमेतत् ।

**वसन्त०**—[2]भो वअस्स, दिट्ठिआ वड्ढसि । एदं तं जं मए भणिदं तुमं जेव्व एत्थ आलिहिदो । अण्णहा को अण्णो कुसुमचाववववदेसेण णिण्हवीअदि त्ति ।

**राजा**—( सहर्षं हस्तौ प्रसार्य ) सखे, दर्शय दर्शय ।

**वसन्त०**—[3]ण दे दंसइस्सं । सावि कण्णआ एत्थ एव्व आलिहिदा त्ति । ता किं पारितोसिएण विणा ईदिसं कण्णारअणं दंसीअदि ।

---

१. यद्भवानाज्ञापयतीति । एषोऽपि चित्रफलकः । यावदेनं गृह्णामि ।

२. भो वयस्य, दिष्ट्या वर्धसे । एतत्तद्यन्मया भणितं त्वमेवात्राऽऽलिखितः । अन्यथा कोऽन्यः कुसुमचापव्यपदेशेन निह्नूयत इति ।

३. न ते दर्शयिष्यामि । सापि कन्यकात्रैवाऽऽलिखितेति । तत् किं पारितोषिकेण विनेदृशं कन्यारत्नं दर्श्यते ।

---

तात्पर्यार्थः । **राजा**—निरूप्यतां विलोक्यतां पंजर इति शेषः । **वसंत०**—यद्भवानाज्ञापयतीति तत्करोमीति शेषः । तज्ज्ञापयत्याचार्य इति प्रयोगात् यदि मित्वं प्राप्तं तर्हि वारणीयं । परिक्रम्य इतस्ततो हिंडित्वा । एष चित्रफलकोऽपीत्यन्वयः । न केवलं अनुमानेनैवायं तस्याः प्रियः चित्रफलकोऽपि एष प्रमाणमित्यर्थः । यावदिति वाक्यालंकारे । एनं चित्रफलकं निरूप्य अवलोक्य हर्षं नाटयति मुखविकासादिहर्षचिह्नानि दर्शयतीत्यर्थः । **राजा—सकौतुकमिति** । यावदयमंतःप्रविष्ट एव तावत्किमनेनानीतं इति कौतुककारणं तदेवाह—वयस्य, किमेतदित्यनेन एतत्त्वयाऽऽनीतं किमस्तीत्यर्थः । **वसं०**—वर्धसे तव वृद्धिर्वर्तते एतद्दिष्ट्या आनंदकारकमित्यर्थः । वृद्धिमेव प्रतिपादयति । त्वमेवात्राऽऽलिखितः इति यन्मया भणितं तदेतत् समीपतरवर्ति वर्तते इति शेषः । स्वोक्तं प्रत्यक्षदर्शनेन दृढं भवतीत्यर्थः । स्वोक्तिमेवाऽनुवदति—**अन्यथेत्यादिना** । अत्र 'राजा—( सकौतुकं ) वयस्य, किमेतत्' इत्यारभ्य 'अन्यथा कोऽन्यः कुसुमचापव्यपदेशेन निह्नूयते' 'तत्रावकाशो भवतः किमु स्यात्' इत्यंतेन राजविदूषकसागरिकासुसंगतानामन्योन्यवचनेन उत्तरोत्तरानुरागबीजोद्घाटनात्प्रगमनं नाम प्रतिमुखसंधेरंगं । उक्तं च लक्षणं 'उत्तरोत्तरवाक्यं तु भवेत्प्रगमनं पुनः' इति । **राजा**—सहर्षमिति हर्षकारणं स्फुटमेव । हस्तौ प्रसार्येति फलकग्रहणार्थमित्यर्थः । दर्शय दर्शयेति संभ्रमे द्विरुक्तिः । **वसं०**—ते इति संबंधसामान्ये षष्ठी । यतो न दर्शयामि तत्कारणमाह—**सापीति** । सा कन्यापि अत्र आलिखितेत्यन्वयः । भवतु कन्यकाया लेखनं तथापि चित्रफलकदर्शनाभावे किं कारणं अत आह—**तत्किमिति** । तत् ईदृशं कन्यारत्नं पारितोषिकेण विना

राजा—( बलाद्गृहीत्वा पश्यति । विलोक्य सविस्मयम् ) वयस्य, पश्य पश्य

लीलावधूतपद्मा कथयन्ती पक्षपातमधिकं नः ।
मानसमुपैति केयं चित्रगता राजहंसीव ॥ ८ ॥

अपि च

विधायापूर्वपूर्णेन्दुमस्या मुखमभूद्ध्रुवम् ।
धाता निजासनाम्भोजविनिमीलनदुःस्थितः ॥ ९ ॥

( ततः प्रविशति सागरिका सुसंगता च । )

साग०—सहि सुसंगदे, ण समासादिदा अम्हेहिं सारिआ । ता

---

१. सखि । सुसंगते न समासादितास्माभिः सारिका । तच्चित्रफलकमपि

---

दर्श्यते किं इत्यन्वयः । पारितोषिकेणेति 'पृथग्विनानानाभिस्तृतीयान्यतरस्यां' इति तृतीया । राजा—बलात् हठात् । गृहीत्वा चित्रफलकमिति शेषः । सविस्मयं साश्चर्यं वदतीति शेषः । लोकोत्तरदर्शनं विस्मयकारणं तदेव वर्णयति पद्यद्वयेन । चित्रगता चित्रमालेख्यं तत्र गता राजहंसीव मानसमुपैति इयं केत्यन्वयः लीलया हेलया अवधूतं भ्रामितं पद्मं कमलं यया । विलासिन्यो हि विलासार्थं पंकजं धुन्वंति, अथवा लीलया अवधूता तिरस्कृता पद्मा लक्ष्मीर्यया सा 'धूतं तु कंपिते भर्त्सिते त्रिषु' इति मेदिनी । 'लक्ष्मीः पद्मालया पद्मा' इत्यमरः । हंसीपक्षे लीलया गमनलीलया 'लीला विलासक्रिययोः' इति । अवधूतानि चालितानि पद्मानि कमलानि यया । राजहंसो हि प्रायो मानसे भवंति तत्र च कमलसद्भावादेवमुक्तिः । पक्षपातं पक्षे सहाये पातो गमनं अनुकूलत्वमिति यावत् । कथयंती बोधयंती । पक्षे पक्षैः गरुद्भिः पातो गमनं तत् कथयंती । पक्षध्वनिश्रवणेन हि हंसी आगतेत्यनुमीयते । चित्रगता चित्रं आश्चर्यकारकं गतं गमनं यस्याः सा । गतमित्यत्र भावे क्तः । सागरिकापक्षे चित्रगतेत्यस्यार्थं उक्तः । राजहंसी मराली मानसं अंतःकरणं मानससरोवरं च अत्र श्लेषोपमालंकारौ । आर्यावृत्तम् ॥ ८ ॥ अपि चेति वर्ण्यते इति शेषः । धाता ब्रह्मा 'ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः । धाताब्जयोनिर्द्रुहिणः' इत्यमरः । अस्याः यदीयमिदं चित्रं तस्याः मुखं अपूर्वपूर्णेंदुं पूर्वैः पूर्वोत्पन्नः न भवति कलंकराहित्यात् इति अपूर्वः एतादृशः पूर्णः षोडशकलात्मकः इंदुश्चंद्रः तं विधाय कृत्वा निजमात्मीयं 'स्वके नित्ये निजं त्रिषु' इत्यमरः । एतादृशं यत् आसनांभोजं आसनकमलं तस्य विनिमीलनं संकोचः तेन दुःस्थितः दुष्टं स्थितं स्थितिर्यस्य सः 'नपुंसके भावे क्तः' 'द्यतिस्यतिमास्थामित्ति किति' इतीत्वं । दुःखित इति पाठः साधीयान् । अभूत् । उत्प्रेक्षालंकारः । अनुष्टुब्वृत्तम् ॥ ९ ॥ ततः राज्ञश्चित्रनिर्वर्णनसमये । सुसंगता एतन्नाम्नी सागरिकासखी । सागरिका—न समासादिता नोपलब्धा । चित्रफलकमपि । अपिः शंकायां शंकित-

चित्तफलअं वि दाव इमादो कअलीघरादो गेण्हिअ लहुं गच्छम्ह ।

सुसङ्ग०—सहि, एव्वं करेम्ह ।

(इत्युपसर्पतः ।)

वसन्त०—भो वअस्स, कीस पुण एसा ओणदमुही आलिहिदा ।

सुसं०—(आकर्ण्य) सहि, जहा वसंतओ मंतेदि तहा तक्केमि भट्टिणा वि एत्था एव्व होदव्वं । ता कअलीघरगुम्मन्तरिआ भवीअ पेक्खम्ह ।

(इत्युभे आकर्णयतः ।)

राजा—पश्य पश्य । ('विधायापूर्वपूर्णेन्दु'मित्यादि पुनः पठति ।)

सुसं०—सहि, दिट्ठिआ वड्ढसि । एसो दे हिअअवल्लहो तुमं जेव्व वण्णेदि ।

---

तावदेतस्मात्कदलीगृहाद्गृहीत्वा लघु गच्छावः ।

१. सखि, एवं कुर्वः । शीघ्र झुका हुआ

२. भो वयस्य, कस्मात्पुनरेषावनतमुख्यालिखिता ।

३. सखि, यथा वसन्तको मन्त्रयते तथा तर्कयामि भर्त्राप्यत्रैव भवितव्यम् । तत्कदलीगृहगुल्मान्तरिता भूत्वा प्रेक्षावहे । देखले ।

४. सखि, दिष्ट्या वर्धसे । एष ते हृदयवल्लभस्त्वामेव वर्णयति । निरख रहे हैं।

---

मित्यर्थः । उपलब्धं चेदिति यावत् । तावदिति वाक्यालंकारे । एतस्मात्कदलीगृहादित्यपादाने पंचमी । लघु क्षिप्रं । उपसर्पतः किंचित्समीपं गच्छतः । वसं०—कस्मात् कुतो हेतोरित्यर्थः । अवनतं नम्रं 'नतं नगरपाव्यां स्यात् क्लीबं कुटिलनम्रयोः' इति मेदिनी । मुखं यस्याः सा अवनतमुखी 'स्वांगाच्चोपसर्जनेति' ङीप् । सुसंगता—आकर्ण्येति वसंतकभाषणमित्यर्थाल्लभ्यते । यथा येन प्रकारेण; यतो हेतोः इति फलितोऽर्थः । मंत्रयते भाषते तथा तेन प्रकारेण ततो हेतोरित्यर्थः । तर्कयामि । अनुमितिमाह—भर्त्राऽप्यत्रैव भवितव्यमिति । भर्त्रा राज्ञा अत्र कदलीगृहे । अत्रायमनुमितिप्रयोगः । इदं कदलीगृहं भर्तृसत्तावत् तदविनाभूतवसंतकसत्त्वात् राजगृहादिवत् । तत् अत्र भर्तृसत्त्वाद्धेतोः कदलीगृहस्य यो गुल्मः स्तंवः 'गुल्मः स्तंबे प्लीह्नि घट्टसैन्ययोः सैन्यरक्षणे' इति विश्वः । तेन अंतरिते व्यवहिते प्रेक्षावहे द्रक्ष्यावः । राजा—पश्य पश्येति आदराद्विरुक्तिः । सुसंगता—दिष्ट्या वर्धसे तव वृद्धिर्वर्तते एतदानंदकारकमित्यर्थः । वृद्धिमेव प्रकटयति—एष ते इत्यादिना ।

सागर०—( सलज्जम् ) सहि, कीस परिहाससीलदाए इमं जणं लहुं करेसि ।

वसन्त०—( राजानं चालयित्वा ) णं भणामि । कीस एसा ओणदमुही आलिहिदा ।

राजा—वयस्य, सारिकयैव सकलमावेदितम् ।

सुसं०—( विहस्य ) सहि, दंसिदं सारिआए अत्तणो मेहावित्तणं ।

वसन्त०—अवि सुहावेहि दे लोअणाणं ण वेत्ति ।

साग०—( ससाध्वसं स्वगतं ) किं एसो भणिस्सदि त्ति । सच्चं जेव मरणजीविदाणं अंतरे वट्टम्हि ।

---

१. सखि, कस्मात्परिहासशीलतयेमं जनं लघुं करोषि ।
२. ननु भणामि । कस्मादेषावनतमुख्यालिखिता ।
३. सखि, दर्शितं सारिकयात्मनो मेधावित्वम् ।
४. अपि सुखयति ते लोचनयोर्न वेति ।
५. किमेष भणिष्यति इति । सत्यमेव मरणजीवितयोरन्तरे वर्ते ।

---

एषः ते हृदय वल्लभः त्वामेव वर्णयति इत्यन्वयः । अनेन परस्पराऽनुरागो दर्शितः, इयमेव च वृद्धिः । **सागरि०**—सलज्जमिति । पत्या स्त्रिया वर्णने हि लज्जा स्वभावसिद्धा । परिहासः नर्मभाषणं शीलं नियतस्वभावो यस्याः सा 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । तस्या भावस्तत्ता तया इमं जनं मद्रूपं जनं लघुं अल्पं 'त्रिष्विष्टेल्पे लघुः' इत्यमरः । हीनमिति यावत् । **वसंत०**—चालयित्वा चालनं हस्तेन तच्च अन्यस्मिन्कार्ये व्यासक्तचित्तस्य स्वभाषणश्रवणोन्मुखीकरणार्थं । नन्विति आमंत्रणे 'प्रश्नावधारणाऽनुज्ञानुनयामंत्रणे ननु' इत्यमरः । **राजा**—सकलं संपूर्णं 'समग्रं सकलं पूर्ण'-मित्यमरः । आवेदितं कथितं । **सुसंत०**—विहस्येति गोपायितमपि अनया प्रकटितमिति विहासः । मेधाविन्या मेधा धारणावती बुद्धिः सा अस्ति अस्याः सा तया 'धीर्धारणावती मेधा' इत्यमरः । 'अस्मायामेधास्रजो विनिः' इति विनिः । आत्मनः स्वस्य मेधावित्वं धारणावतीत्वं । नन्वत्र पुंवद्भावो दुर्लभः 'त्वतलोर्गुणवचनस्ये'त्यत्र गुणवचनस्य पुंवद्भावविधानादिति चेन्न । मेधावित्वमित्यत्र शरदः कृतार्थतेत्यादावित्र सामान्यनपुंसकत्वं स्वीकृत्य उक्तप्रयोगनिर्वाहात् । **वसंत०**—सुखयति आनंदयति । सुखशब्दात्तत्करोतीति णिच् । लोचनयोरिति 'भजे शंभोश्चरणयोः' इतिवत् कर्मणः शेषत्वविवक्षायां षष्ठी । सा लोचनयोः सुखयति न वा इत्यन्वयः । **सागरि०**—ससाध्वसं सभयं 'भीतिर्भीः साध्वसं भयं' इत्यमरः । अयं किं वदति किं सुखयति उत न

लिखी तरह अनेश को लांघकर और देरतक नितम्बों पर चक्कर काटकर इसकी त्रिवली रूप तरंगों से दुर्गम मध्य भाग में बैठ कर प्यासी सी होकर धीरे इसके ऊँचे स्तनों पर चढ़कर ... इसकी आँखें उत्सुकता से देखती हैं। उत्प्रेक्षालंकार. शार्दूलविक्रीडित





राजा—सुखयतीति किमुच्यते ।

कृच्छ्रादूरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले
मध्येऽस्यास्त्रिवलीतरंगविषमे निस्पन्दतामागता ॥
मद्दृष्टिस्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ
साकांक्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥ १० ॥

---

इति पाक्षिकप्रीत्यविषयत्वजन्यं भयं । स्वगतं एतल्लक्षणं पूर्वमुक्तं । मरणजीवितयोः इति । न सुखयति इत्युक्ते मरणं, सुखयतीत्युक्ते जीवितं, द्वयोरन्यतरस्य संभवात् अंतरे वर्ते इत्युक्तं । **राजा–किमुच्यते इति ।** अयं प्रश्न एव न संभवतीत्यर्थः । संदिग्धे हि प्रश्नः । एतादृशाऽलौकिकसौंदर्यदर्शने सुखाऽवश्यंभावात्संदेहाभावात् प्रश्नोऽनुपपन्न इति तात्पर्यं । अलौकिकं सौंदर्यमेव दर्शयति—**कृच्छ्रादित्यादिना ।** मद्दृष्टिः मम दृष्टिः लोचनं कृच्छ्रात् कष्टात् ऊर्वोः सक्थ्नोः 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । युगं युग्मं व्यतीत्य अतिक्रम्य पूर्वं ऊरुयुगे पतिता दृष्टिः तत् त्यक्तुं अशक्नुवती संकष्टात्तदतिक्रम्येत्यर्थः । नितंवस्थले नितंवयोः कटिपश्चाद्भागयोः स्थले देशे 'पश्चान्नितंवः स्त्रीकट्याः' इत्यमरः । सुचिरं वहुकालं भ्रांत्वा भ्रमणं कृत्वा अस्याः स्त्रियाः त्रिवलीतरंगविषमे तिस्रः त्रिसंख्याकाः वल्यः ('वळी' इति भाषायां) त्रिवलीति संज्ञा । तेन सप्तर्षय इतिवत् 'दिक्संख्ये संज्ञायां' इति समासः । ता एव तरंगाः ऊर्मयः मयूरव्यंसकादित्वात्समासः । 'भंगस्तरंग ऊर्मिर्वा' इत्यमरः । तैः विषमे दुर्गमे मध्ये अवलग्ने 'मध्यमं चावलग्नं च मध्यः' इत्यमरः । निर्गतः स्पंदः चलनं यस्याः सा तस्या भावः निस्पंदता तां 'तस्य भावस्त्वतलौ' इति तल्प्रत्ययः । निश्चलत्वमिति यावत् आगता प्राप्ता संप्रति इदानीं तुंगौ उच्चौ 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुंगे' इत्यमरः । स्तनौ कुचौ शनैः अद्रुतं 'अद्रुते शनैः' इत्यमरः आरुह्य । तृषिता इव पिपासिता इव मुहुः वारंवारं साकांक्षं आकांक्षया इच्छया सहितं 'तेन सहेति तुल्ययोगे' इति वहुव्रीहिः 'वोपसर्जनस्य' इति सहस्य सादेशः । तत्र इति शब्दोपादानात् तुल्ययोगवचनं प्रायिकमिति सिद्धांतः । अत एव सकर्मकः सलोमकः इत्यादि सिध्यति । साकांक्षमिति ईक्षणक्रियाया विशेषणं । जलस्य अश्रुरूपस्य लवाः कणा तान् अभीक्ष्णं प्रस्यंदेते इति जललवप्रस्यंदिनी 'वहुलमाभीक्ष्ण्ये' इत्यनेन स्यंदतेर्णिनिः 'उपपदमतिङ्' इति उपपदसमासः । लोचने नेत्रे ईक्षते अवलोकयति । अत्र प्रस्तुतवर्णनेन अप्रस्तुतस्य कस्याश्चित् स्त्रियाः अरण्यभ्रमणरूपस्य वृत्तांतस्य प्रतीतेः **समासोक्तिरलंकारः उत्प्रेक्षालंकारश्च** तल्लक्षणं तु पूर्वमुक्तं । अत्र ऊरुयुगस्य कृच्छ्रादतिक्रमवर्णनेन नितंवस्थलस्य सुचिरभ्रमणवर्णनेन च तयोर्विशालत्वं गम्यते । तुंगस्तनयोः शनैः आरोहणेन तयोर्महत्त्वं द्योत्यते । नेत्रयोर्जललवप्रस्यंदनलववर्णनेन च अश्रूद्गमः सूचितः । **शार्दूलविक्रीडितं** वृत्तं । अनेन गाढयौवनात्वं दर्शितं यथा 'अभ्युन्नतस्तनमुरो नयने च दीर्घे वक्रे भ्रुवावतितरां वचनं ततोऽपि । मध्योऽधिकं तनुरतीव गुरुर्नितंवो मंदा गतिः किमपि चाद्भुतयौवनायाः' इति ॥ १० ॥

**साग०**—( श्रुत्वा स्वगतम् ) हिअअं, पसीद पसीद । समस्सस समस्सस । मणोरहो वि दे दाणिं एत्तिअं भूमिं गदो ।

**सुसं०**—सहि, सुदं तुए ।

**साग०**—( विहस्य ) तुमं एव्व सुणु । जाए आलेक्खविण्णाणं वण्णीअदि ।

**वसन्त०**—( फलकं निर्वर्ण्य ) भो वअस्स, जस्स उण ईदिसीओ वि एव्वं पिअस्समग्गमं बहु मण्णंति । तस्स वि अत्तणो उवरि को परिहवो ।

---

१. हृदय, प्रसीद प्रसीद । समाश्वसिहि समाश्वसिहि । मनोरथोऽपि त इदानीमियतीं भूमिं गतः ।

२. सखि, श्रुतं त्वया ।

३. त्वमेव शृणु । यस्या आलेख्यविज्ञानं वर्ण्यते ।

४. भो वयस्य, यस्य पुनरीदृश्योऽप्येवं प्रियसमागमं बहु मन्यंते तस्याप्या-

---

**सागरिका**—हृदय हे अंतःकरण "चित्तं तु चेतो हृदयं···मनः" इत्यमरः । समाश्वसिहि समाश्वसिहि समाङ्पूर्वकाच्छ्वसधातोर्लोटि 'रुदादिभ्यः सार्वधातुके' इतीडागमे 'नित्यवीप्सयोः' इति नित्ये द्वित्वं । मनोरथोऽपि वांच्छापि ते तव हृदयस्येत्यर्थः । इदानीं संप्रति इयतीमिति इदं परिमाणं अस्याः सा 'किमिदंभ्यां वो घः' इत्यनेन इदम्-शब्दाद्वतुपि वस्य घादेशः 'उगितश्च' इति ङीप् इदंपरिमाणामित्यर्थः । राजाभीष्टत्वरूप-परिमाणामिति यावत् । भूमिं स्थानं 'भूमिर्वसुंधरायां स्यात्स्थानमात्रेऽपि च स्त्रियां' इति मेदिनी । कथं राज्ञः पत्नी स्यां इति कृतो योऽभिलाषः स राजप्रियत्वपर्यंतं पर्यवसन्न इति यावत् । अत्र 'राजा—( निर्वर्ण्य ) वयस्य ! अनया लिखितोऽहमिति यत्' इत्यारभ्य 'मनोरथोपि ते इदानीमियतीं भूमिं गतः' इति सागरिकावाक्यांतेन अरत्युपशमाच्छमो नाम प्रतिमुखसंधेरंगं । तदुक्तं 'तस्योपशमनं यत्तु शमनं नाम तद्भवेत्' इति भरतेन । **सागरिका—विहस्येति** । हासकारणं स्वाभिप्रायाऽनुकूलं सख्या भाषणं । लज्जया राजभाषणमन्यथाऽभिप्रायकं इति दर्शयति त्वमेवेत्यादिना । कुतो मयैव श्रोतव्यमित्यत आह-**यस्या इत्यादि** । यस्याः तवेत्यर्थः । आलेख्यस्य चित्रस्य विज्ञानं विशिष्टं ज्ञानं आलेख्यलेखनज्ञानचातुर्यमित्यर्थः । वर्ण्यते प्रशस्यते राज्ञेत्यर्थः । अनेन त्वदीयं चित्रलेखनज्ञानकौशलमेव वर्णितं न तु मम वर्णनमिदं अतः तवैव संतोषावसरः न ममेति यावत् । **वसंत०**—निर्वर्ण्य सम्यक् विलोक्येत्यर्थः । **यस्य पुनरिति** वाक्यालंकारे अर्थात्तवेत्यर्थः । ईदृश्योऽपि त्रिभुवनैककमनीया अपीत्यर्थः । प्रियसमागमं इष्टसंगतिं बहु अधिकं मन्यंते जानंति अतिसुंदर्योऽपि यस्य तव समागमं प्रार्थयंते इति यावत् । तस्य तवेत्यर्थः । आत्मनः उपरि आत्मनि विषये इति यावत् । कः

जेण एत्थ एव्व ताए आलिहिदं अत्ताणअं ण पेक्खसि ।

**राजा**—( निर्वर्ण्य ) वयस्य, अनया लिखितोऽहमिति यत्सत्यमात्मन्येव बहुमानः । तत्कथं न पश्यामि । पश्य ।

भाति पतितो लिखन्त्यास्तस्या बाष्पाम्बुसीकरकणौघः ॥
स्वेदोद्गम इव करतलसंस्पर्शादेष मे वपुषि ॥ ११ ॥

**सुसं०**—सहि, तुमं एव्व धण्णा सलाहणीआ सा जाए भट्टिणा एव्वं संदोसीअदि ।

**वसं०**—(पार्श्वतोऽवलोक्य) 'भो वअस्स, एदं खु ताए सरसकमलिणीदलमुणालविरइदं मअणावत्थासूअअं सअणीअं लक्खीअदि ।

---

त्मन उपरि कः पराभवः । येनात्रैव तया लिखितमात्मानं न प्रेक्षसे ।

१. सखि, त्वमेव धन्या श्लाघनीया सा यया भर्त्रैवं संतोष्यते ।

२. भो वयस्य, एतत्खलु तस्याः सरसकमलिनीदलमृणालविरचितं मदनावस्थासूचकं शयनीयं लक्ष्यते ।

---

परिभवः अनादरः "अनादरः परिभव" इत्यमरः । एतादृशस्य तव आत्मविषये परिभव इत्यर्थः । ननु कीदृशो नाम आत्मविषये परिभवः कृतः इत्यत आह—**येनेत्यादिना** । येनेति हेतौ तृतीया । येन हेतुनेत्यर्थः । अत्रैव चित्रफलके एव तया मनःप्रियया लिखितं चित्ररूपेण निष्कासितं आत्मानं स्वं न प्रेक्षसे इति । **राजा**—अनया मनःप्रिययाऽहं लिखित इति यत् यस्मात्कारणात् वर्ते इति शेषः । तस्मात् 'यत्तदोर्नित्यसंबंध इति तच्छब्दाध्याहारः' आत्मन्येव स्वस्मिन्नेव बहुमान इति त्वदुक्तं सत्यमित्यर्थः । तत् तस्मात् आत्मन्येव बहुमानवत्वाद्धेतोः कथं न पश्यामीति अर्थादात्मानमिति लभ्यते तदेव द्रढयति **पश्येति** । लिखंत्याः तस्याः प्रियायाः पतितः गलितः पतित इत्यत्र 'तनिपती'त्यादिना इड्विकल्पेन 'यस्य विभाषा' इति निष्ठायामिण्निषेधः प्राप्तः तथापि 'द्वितीयाश्रिते'ति सूत्रे पतितेति निर्देशादेव इडागमः स्वीकर्तव्यः । बाष्पांबुसीकरकणौघः बाष्पाणां नेत्रोदकानां अंबूनि उदकानि तेषां सीकरा अंबुकणाः तेषां कणाः सूक्ष्मांशाः 'कणो धान्यांशलेशयोः' इति हैमः । तेषामोघः समूहः करतलसंस्पर्शात् करतलस्य हस्ततलस्य संस्पर्शात्संबंधाद्धेतोः 'विभाषा गुणेऽस्त्रियां' इति पंचमी । एषः पूर्वोक्तः कणौघः स्वेदोद्गम इव स्वेदस्य घर्मस्य उद्गम इव आविर्भाव इव मे वपुषि शरीरे भाति शोभते । उत्प्रेक्षालंकारः । आर्यावृत्तं ॥ ११ ॥ **सुसंगता**—त्वमेव सागरिकैव धन्या पुण्यवती 'धन्यं पुण्यवति त्रिषु' इति मेदिनी । श्लाघनीया स्तुत्या श्लाघृ कत्थने अनीयर् । यया भर्त्रा एवं संतोष्यते सा त्वमेव धन्या श्लाघनीयेत्यन्वयः । यया भवत्या हेतुना भर्त्रा वत्सराजेन एवं अतिशयप्रेमप्रदर्शनपुरःसरं संतोष्यते संतुष्यते इति यावत् । तुषधातोर्णिचि व्यापारत्यागे इदं रूपं साधु । संतुष्यत इति पाठः क्वचिदुपलब्धश्चेत्स साधुतर इति भाति । अथवा भर्ता इति प्रथमांतं क्वचिदुपलब्धं चेत्तदपि रमणीयं भवेत् । **वसं०**—पार्श्वतः पार्श्वयोरित्यर्थः । आद्यादित्वात्सार्वविभक्तिकस्तसिः । इदं संनिकृष्टं अपरं द्वितीयं एकं

मध्य भाग में क्षीणता के कारण जितने अंश में स्पर्श नहीं हुआ है उतना ही भाग हरा रहा। हाथों के पटकने से रत्नावली। कुछ अग्रिम भाग अस्त व्यस्त हो रहे हैं, इस तरह से शयनीय उस कृशाङ्गी की कामपीड़ा को सूचित कर रहा है।



**राजा**—वयस्य, निपुणमुपलक्षितम्। तथाहि।

परिम्लानं पीनस्तनजघनसंगादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम्॥
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः संतापं वदति नलिनीपत्रशयनम्॥ १२॥

शिखरिणी
प्रसाद गुण

मदनाऽवस्थासूचकं चित्रफलकं इदं द्वितीयमित्यर्थः। सरसानि सद्रवाणि आर्द्राणीति यावत् 'गुणे रागे द्रवे रसः' इत्यमरः। यानि कमलिनीनां पद्मिनीनां दलानि पत्राणि मृणालानि बिसानि च तैः विरचितं विशिष्टरचनां प्रापितं एतस्याः ह्यायाः मदनाऽवस्थासूचकं मदनस्य कामस्य कर्तुः अवस्था दशा तस्याः सूचकं पिशुनं शयनीयं शयनार्हं 'अर्हे कृत्यतृचश्च' इति अर्हार्थेऽनीयङ्। तादृशावस्थायां शयनार्हमिति यावत्। लक्ष्यते दृश्यते। **राजा**—निपुणं प्रवीणं 'प्रवीणे निपुणाभिज्ञ–' इत्यमरः। सूक्ष्ममिति यावत्। उपलक्षितं ज्ञातं। तथा हि तदेव प्रतिपादयतीत्यर्थः। नलिनीनां कमलिनीनां पत्राणां शयनं शय्या 'शय्यायां शयनीयवत्। शयनं' इत्यमरः। कृशांग्याः कृशं अंगं शरीरं यस्याः सा संयोगोपधत्वेपि 'अंगगात्रकंठेभ्यो वक्तव्यं' इति वचनेन ङीष्प्रत्यय इति केचित्। भाष्याद्यनुक्तत्वात् 'निरंकुशाः कवयः' इति न्यायेन अयं प्रयोगोऽसाधुः। गौरादित्वं वा प्रकल्प्य ङीषिति सिद्धस्य गतिरियं। संतापं संज्वरं वदति कथयति। शयनमेव वर्णयति **परिम्लानमित्यादिना**। पीनौ पुष्टौ तौ च तौ स्तनौ च जघनं च तेषां संगः संबंधः तस्माद्धेतोः 'विभाषा गुणेऽस्त्रियां' इति पंचमी। उभयोः इति उभयतः 'इतराभ्योपि दृश्यन्ते' इति सप्तम्यंतादुभयशब्दात्तसिल्। उभयोर्भागयोरिति यावत्। परिम्लानं संमर्दितमिति यावत् तनोः देहस्य 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः। मध्यस्य अवलग्नस्य परिमिलनं परितः संगं अप्राप्य-अलब्ध्वा अंतः मध्यभागे हरितं हरिद्वर्णं 'पालाशो हरितो हरित्' इति अमरः। यद्यप्यत्र हरितशब्दो गुणवाची तथापि 'गुणवचनेभ्यो मतुपो लुगिष्टः' इत्यनेन हरिद्वर्णवति विहितस्य मतुपो लुग्विधानाद्गुणिपरत्वं अत एव 'गुणे शुक्लादयः पुंसि गुणिलिंगास्तु तद्वति' इत्यमरः संगच्छते। अवलग्नस्य अतीव सूक्ष्मत्वात् शयनासंबंधे तद्देशावच्छिन्नस्य शयनस्य हरिद्वर्णत्वं। पीनस्तनजघनानां संमर्देन तद्देशावच्छिन्नस्य शयनस्य परिम्लानत्वमिति निष्कर्षः। इदं सन्निकृष्टं 'इदमस्तु सन्निकृष्टं' इत्यभियुक्तोक्तेः। श्लथे शिथिले ये भुजावेव लते। कामस्य सर्वांगे संचारात् भुजलतयोः श्लथत्वं वेदितव्यं। भुजलतयोः आक्षेपः आघातः वलनानि लुंठनानि, चित्तस्य अस्वास्थ्यात् इतस्ततो भुजाक्षेपः शरीरलुंठनं च शय्यायां कामपीडितानां सुप्रसिद्धं। तैः व्यस्तन्यासं व्यस्तः विविधतया क्षिप्तः न्यासो रचना यस्य तत् एतादृशं शयनं। शिखरिणीवृत्तं। 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' इति लक्षणात्। अस्मिन् श्लोके प्रसादो गुणः तदुक्तं काव्यप्रकाशे 'श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत्। साधारणः समग्राणां स प्रसादो गुणो मतः' इति॥ १२॥

अपि च ।

स्थितमुरसि विशालं पद्मिनीपत्रमेतत्
कथयति न तथान्तर्मन्मथोत्थामवस्थाम् ॥
अतिशयपरितापग्लापिताङ्ग्या यथास्याः
स्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति ॥ १२ ॥

परिणाह = विशालता
मालिनी वृत्ति
परिताप = मदनसंताप
ग्लापित = ग्लानि को प्राप्त

**विदू०**—( नाट्येन मृणालिकां गृहीत्वा ) [1]भो वअस्स, अअं खु उवलद्धो अवरो ताए ज्जेव पीणत्थणजोग्गो किलसंतकोमलमुणालहारो । ता पेक्खदु भवं ।

---

१. भो वयस्य, अयं खलूपलब्धोऽपरस्तस्या एव पीनस्तनयोग्यः क्लिश्यत्कोमलमृणालहारः । तत्प्रेक्षतां भवान् ।

---

अपि चेति अन्यदपीत्यर्थः । अपिः समुच्चये तदेवाह—**स्थितमुरसीत्यादिना ।** एतत् समीपतरवर्ति विशालं पृथुलं 'विशालं पृथुलं महत्' इत्यमरः । 'वेः शालच्' इत्यादिना शालच् प्रत्ययः । उरसि वक्षसि स्थितं विद्यमानं 'द्यतिस्यतिमास्थामित्ति किती'ति स्थाधातोः क्तप्रत्यये इत्वं, पद्मिन्याः पद्मं अस्ति अस्याः सेति 'अत इनिठनौ' इति इन्नंतात् 'ऋन्नेभ्यो ङीप्' इति ङीप् । तस्याः पत्रं पलाशं यथा येन प्रकारेण 'प्रकारवचने थाल्' इति थाल्प्रत्ययः । अतिशयो यः परितापः मदनसंतापः तेन ग्लापितं ग्लानिं प्रापितं अंगं यस्याः ग्लाधातोर्णिजंतात् कर्मणि क्तप्रत्ययः । 'ग्लास्नावनुवमां चे'ति मित्वविकल्पात् ह्रस्वाभावे इदं रूपं । ग्लापितांगीति प्रयोगस्य सिद्धिः पूर्वोक्तकृशांगीप्रयोगवज्ज्ञेया । अस्या इष्टनायिकाया मंडलाभ्यां स्तनसंघर्षजचक्रवालाभ्यां 'चक्रवालं तु मंडलं' इत्यमरः । स्तनयोः युगं युग्मं तस्य परिणाहः विशालता 'परिणाहो विशालता' इत्यमरः । तं ब्रवीति ब्रूञ् व्यक्तायां वाचि लटस्तिपो 'ब्रुव ईट्' इति ईडागमः । तथा तेन प्रकारेण अंतः अंतःकरणे मन्मथेन मदनेन उत्थां उत्पन्नां अवस्थां दशां न कथयति न बोधयति । यद्यपि 'कथ वाक्यप्रबंधे' इत्यनेन वाक्यप्रबंधे कथधातुः सुप्रसिद्धः । तथाप्यचेतनस्य पद्मिनीपत्रस्य तादृशवाक्यप्रबंधाऽसंभवात् बोधनमेवात्र कथधात्वर्थो योग्यतया गृह्यते । अत्र अतितुंगस्तनोपरिस्थितकमलिनीपत्रस्य संघर्षजमंडलद्वयेन स्तनपरिणाहप्रदर्शकत्वं अत एवोच्चप्रदेशस्थितस्य तस्य हृदयसंबंधाऽभावात् हृदयस्थतापाबोधकत्वमिति तात्पर्यार्थः । मालिनीवृत्तं 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥ १२ ॥ **विदूष०**—नाट्येन मृणालिकां विसं गृहीत्वा मृणालिकाशब्दः स्त्रियामिति प्रमाणं पूर्वमुक्तमेव । तस्या नाट्येन ग्रहणं नाम हस्तप्रसारणपूर्वकमादानं । उपलब्धः प्राप्तः अपरः द्वितीयः तस्या एव पूर्वोक्ताया एव पीनस्तनयोग्यः पीनस्तनयोः योग्यः । क्लिश्यन् म्लान इत्यर्थः, यः कोमलानां मृदुलानां मृणालानां विसानां हारः, तत् हारोपलब्धेर्हेतोः भवान् प्रेक्षता-

**राजा**—(गृहीत्वोरसि विन्यस्य सोपालम्भम्) अयि जडप्रकृते!

परिच्युतस्तत्कुचकुम्भमध्यात्
किं शोषमायासि मृणालहार॥
न सूक्ष्मतन्तोरपि तावकस्य
तत्रावकाशो भवतः किमु स्यात्॥ १४॥

**सुसं०**—(आत्मगतम्) हद्धी हद्धी। गुरुअणुराअक्खित्तहिअओ भट्टा असंबद्धं पि मंतिदुं पउत्तो। ता अदो अवरं उण ण जुत्तं उपेक्खिदुं दाव। (प्रकाशम्) सहि, जस्स किदे तुमं आअदा सो अअं चिट्ठदि।

---

१. हा धिक् हा धिक्। गुर्वनुरागाक्षिप्तहृदयो भर्ताऽसंबद्धमपि मन्त्रयितुं प्रवृत्तः। तदतःपरं पुनर्न युक्तमुपेक्षितुं तावत्। सखि, यस्य कृते त्वमागता सोऽयं तिष्ठति।

---

मवलोकयतु अर्थात् हारमिति कर्म। **राजा**—अयि इति संबोधने। जडप्रकृते जडा मंदा प्रकृतिः स्वभावो यस्य 'प्रकृतिर्योनिशिल्पिनोः। पौरामात्यादिलिंगेषु गुणसाम्यस्वभावयोः' इति हैमः। तस्याः सागरिकायाः कुचौ कुंभाविव घटाविव 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासः। तयोः मध्यः, तस्मात्परिच्युतः भ्रष्टः मृणालानां बिसानां हारः शोषं शुष्कतां शोषमित्यत्र भावे घञ्प्रत्ययः किं कुतः आयासि प्राप्नोषि। तव तत्राऽवकाशस्तु दुर्लभ इत्याह—सूक्ष्मेत्यादिना। तावकस्य तव अयं तावकः तस्य 'तवकममकावेकवचने' इत्यनेन तवकाऽऽदेशः, सूक्ष्मतंतोः सूक्ष्मस्य तंतोरपि सूत्रस्याऽपि तत्र कुचकुंभमध्ये अवकाशः अंतरं न भवति स्तनयोः परस्परं अतीव संश्लेषादित्यर्थः। भवतः तव स्यात्किमु अर्थादवकाश इत्यर्थः। सूक्ष्मस्यापि तवावयवस्य यत्राऽवकाशो नास्ति तत्र महतः तव अवकाशः कथं संभवेत्। सत्यप्येवं तत्राऽवकाशलाभार्थं आत्मानमपि शोषयसि इति अहो ते जडप्रकृतिता इत्यर्थः। असंबंधातिशयोक्तिः काव्यार्थापत्तिश्च। तदुक्तं 'योगेऽप्ययोगोऽसंबंधातिशयोक्तिरितीर्यते' 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते' इति च। उपजातिवृत्तं 'अनंतरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति लक्षणात्॥ १४॥ **सुसंगता**—हा धिक् हा धिक् इति शोके, धिगिति निंदायां, गुरुणा महताऽनुरागेण प्रेम्णा आक्षिप्तं विरस्कृतं शून्यीकृतमिति यावत् हृदयं यस्य एतादृशो भर्ता वत्सराजः असंबद्धं संबंधरहितं प्रकृते संबंधाऽभावः जडेऽपि हारे चेतनवद्व्यवहारः मंत्रयितुं भाषितुं प्रवृत्तः प्रपूर्वकाद्वृतधातोरादिकर्मणि कर्तरि क्तः। तत् उन्मत्तवद्भाषमाणत्वात् अतः एतस्मात्कालात् परं अनन्तरमित्यर्थः। उपेक्षितुं उपेक्षां कर्तुं न युक्तं न योग्यं तावदिति वाक्यालंकारे। प्रकाशं सर्वश्राव्यं। यस्य कृते यदर्थमित्यर्थः। कृते इत्यस्य

साग०—(सासूयम्) सहि, कस्स किदे अहं आअदा ।

सुसङ्गता—(विहस्य) अइ अण्णसंकिदे । णं चित्तफलअस्स ता गेण्हतं ।

साग०—(सरोषम्) अइ णिउणा खु तुमं वि ईदिसाणं आलावाणं । ता अण्णदो गमिस्सं (इति गन्तुमिच्छति) ।

सुसं०—अइ असहणे, इह दाव मुहुत्तअं चिट्ठ । जाव इमादो कअलीहरादो चित्तफलअं गेण्हिअ आअच्छामि ।

---

१. सखि, तस्य कृतेऽहमागता ।

२. अयि अन्यशङ्किते, ननु चित्रफलकस्य, तद्गृहाण तम् ।

३. अयि निपुणा खलु त्वमपीदृशानामालापानाम् । तदन्यतो गमिष्ये*

४. अयि असहने, इह तावन्मुहूर्तं तिष्ठ । यावदस्मात्कदलीगृहाच्चित्रफलकं गृहीत्वागच्छामि ।

---

साधनिका पूर्वं लिखिता । **सागरि०**—असूयाऽत्र गुणेषु दोषारोपः "असूया तु दोषारोपो गुणेष्वपि' इत्यमरः । तत्र यस्य कृते त्वमागता सोऽयं तिष्ठति इति स्वमनोऽभीष्टवर्णनं गुणः तत्र च लज्जातिभरात् तिरस्कारो दोषारोपः । **सुसंगता विहस्येति** । इष्टमप्युक्तमियं लज्जया असूयति इति विहासः एवं चेत्तर्हि स्वोक्तिमपि अन्याऽभिप्रायिकां वर्णयामि इत्याह—**अयि** अन्यशंकिते इति । अन्येन विपरीताभिप्रायेण शंकिते संजातशंके । शंकिते इत्यत्र तारकादित्वादितच्प्रत्ययः । नन्विति आमंत्रणे चित्रफलकस्य कृते आगतेति पूर्वेणाऽन्वयः । तत् चित्रफलकार्थाऽऽगमाद्धेतोः तम् चित्रफलकं गृहाण । अत्र 'सखि यस्य कृते त्वमागता' इत्यारभ्य तद्गृहाण तम् इत्यंतेन बीजान्वितं परिहासवचनं नर्म 'क्रीडार्थं विहितं यत्र हास्यं नर्मेति तत्स्मृतं' इति लक्षणात् । **सागरिका—सरोषमिति** रोषकारणं तु स्वोक्तभाषणमियमन्याऽभिप्रायकं करोतीति । इतराः वंचनाभिप्रायानालापान्ब्रुवंतु नाम, तव तु नेदमुचितं, सा त्वमपि वदसि इति अपिशब्दार्थः । ईदृशानां वंचनागर्भाणां आलापानां भाषणानां निपुणा प्रवीणा खलु निश्चये । आलापानामिति संबंधसामान्ये षष्ठी । ईदृशवंचनपराऽलापसंबंधिनैपुण्यवतीत्यर्थः । तत्, अंतरंगाऽपि त्वं मां अन्याऽभिप्रायेण वंचयसीत्यतो हेतोः अन्यतः अन्यत्रेत्यर्थः, गमिष्ये इति गमिष्यामीत्येव पाठ उचितः । अन्यथा 'गमेरिट् परस्मैपदेषु' इति इडनापत्तेः । **सुसंगता**—असहने इति 'अनुदात्तेतश्च हलादेः' इति षह मर्षणे इत्यस्मात्ताच्छील्ये युच् असहनशीले इति यावत् । इह कदलीगृहद्वारि मुहूर्तं अल्पकालं 'मुहूर्तमल्पकाले स्याद्घटिकाद्वितयेऽपि च' इति शब्दार्णवः । 'कालाध्वनोरत्यंतसंयोगे' इति द्वितीया । अत्र यावत्तावच्छब्दौ अवधौ ।

---

* गमिष्यामीति पाठांतरम् ।

सागः—ःसहि, एवं करेहि ।
सुसं०—ऐवं करेम्हि ।

(सुसंगता कदलीगृहाभिमुखं परिक्रामति ।)

विदू०—(सुसंगतां दृष्ट्वा ससंभ्रमम्) ³भो वअस्स, पच्छादेहि एदं चित्तफलअं इमिणा कअलीवत्तेण । एसा खु देवीए परिचारिआ सुसंगदा आअदा ।

(राजा पटान्तेन फलकमाच्छादयति ।)

सुसं०—(उपसृत्य) ⁴जेदु जअदु भट्टा ।
राजा—सुसंगते, स्वागतम् । इहोपविश्यताम् ।

(सुसंगता उपविशति)

राजा—सुसंगते, कथमिहस्थोऽहं भवत्या ज्ञातः ।
सुसं०—(विहस्य) ⁵णे केवलं देवो । चित्तफलएण सह सव्वो वुत्तंतो वि मए विण्णादो । ता देवीए गदुअ णिवेदइस्सं (इति गन्तुमिच्छति) ।

---

१. सखि, एवं कुरु ।
२. एवं करोमि ।
३. भो वयस्य, प्रच्छादयैतच्चित्रफलकमनेन कदलीपत्रेण । एषा खलु देव्याः परिचारिका सुसंगता आगता ।
४. जयतु जयतु भर्ता ।
५. न केवलं देवः । चित्रफलकेन सह सर्वो वृत्तान्तोऽपि मया विज्ञातः । तद्देव्यै गत्वा निवेदयिष्ये ।

---

कदलीगृहात् गृहाकारकदलीगुल्मात् । कदलीगृहाभिमुखमिति कदलीगृहस्य अभिमुखं संमुखं परिक्रामति भ्रमतीत्यर्थः । **विदूष०**—ससंभ्रमं सत्वरं संभ्रमकारणं तु यदीदं वासवदत्तायाः परिचारिका सुसंगता पश्येत्, तदाऽतिकोपना वासवदत्ता वत्सराजाय क्रुध्येत् इति । तदेवाह—**भो वयस्येति** । एतत् हस्ते गृहीतं चित्रफलकं एतेन कदलीपत्रेण रंभापत्रेण प्रच्छादय आच्छादय । प्रार्थनायां लोट् । कुत इति चेत्तत्राह—**एषेति** । पटस्य वस्त्रस्य 'सुचैलकः पटोऽस्त्री स्यात्' अंतेन अग्रेण । **सुसंगता**—उपसृत्य समीपं गत्वा जयतु जयतु संभ्रमे द्विरुक्तिः । **राजा**—स्वागतं सुष्ठु आगतं प्रादिसमासः । आङ्पूर्वकाद्गमेः 'नपुंसके भावे क्तः' इति भावे क्तः । तव सुष्ठु आगमनं वर्तते इति शेषः । इह मन्निकटस्थले उपविश्यतां उपपूर्वकाद्विशतेर्भावे लोट् । **राजा**—इहस्थः इति सुपीति योगविभागात् इहशब्दे उपपदे स्थाधातोः कप्रत्ययः । **सुसंग०**—**विहस्येति** । राजा स्वविषयं ज्ञानमेव आक्षिपति मया पुनः एतस्य फलकादिवृत्तांतोऽपि ज्ञातः इति विहासकारणं तदेवाह—**न केवलमित्यादिना** । केवलं ज्ञानक्रियाया विशेषणं केवलं देव एव न ज्ञातः किंतु चित्रफलकेन सह सर्वः वृत्तांतः इतिवृत्तं

**वसन्त०**—(अपवार्य सभयम्) भो वअस्स, सव्वं संभाविअदि । मुहरा खु एसा गब्भदासी । ता परितोसेहि णं ।

**राजा**—युक्तमुक्तं भवता । (सुसंगतां हस्ते गृहीत्वा) सुसंगते, क्रीडामात्रमेतत् । अकारणे त्वया देवी न व्यथयितव्या । इदं ते पारितोषिकम् । (इति कर्णादवतार्याभरणं दातुमिच्छति)।

**सुसं०**—(स्वगतं) पसण्णो भट्टा । (प्रकटम्) अलं संकाए एदिणा भट्टुणो पसादेण अव्व कीलिदं जेव्व । ता किं कण्णाभरणेण। एस्सो एव्व मे

---

१. भो वयस्य, सर्वं संभाव्यते । मुखरा खल्वेषा गर्भदासी । तत्परितोषयैनाम् ।

२. प्रसन्नो भर्ता । अलं शंकयैतेन, भर्तुः प्रसादेन चव्या क्रीडितमेव ।

---

विज्ञातः अवगतः । गत्वा तत् एतद्दृष्टं सर्वं देव्यै वासवदत्तायै 'देवी कृताभिषेकायां' इति कोशः । निवेदयिष्ये कथयिष्ये अत्र सुसंगतावाक्येन भयनमाख्यं कैशिकीवृत्तेरंगं । **विदूष०**—अपवार्य एतल्लक्षणं दशरूपके 'रहस्यं कथ्यतेऽन्यस्य परावृत्यापवारितं' इति । सभयमिति अयं वृत्तांतः कोपनाया वासवदत्ताया विदितो मा भूत् इति भयं तदेवाह—**भो वयस्येत्यादिना** । सर्वं वासवदत्तायै एतद्वृत्तांतनिवेदनादि निखिलं संभाव्यते संभावनाविषयीभवति । तत्र हेतुमाह—**मुखरेत्यादिना** । मुखरा दुर्मुखा 'दुर्मुखे मुखरावद्धे'त्यमरः । गर्भदासी गर्भावस्थामारभ्य दासीत्यर्थः । तत् एतस्या मुखरत्वाद्धेतोः एनां परितोषय पारितोषकेण संतोषयेत्यर्थः । **राजा**—युक्तमुक्तमिति पारितोषिकदानेन एतस्या मुखवंधनमितीयं तव युक्तिः समीचीनेत्यर्थः । क्षुद्रा हि द्रव्यादिनैवाऽनुकूलनीया इत्यर्थः । हस्ते गृहीत्वेति हस्ते ग्रहणं प्रेमदर्शनार्थं एतत् चित्रफलकादि सर्वं क्रीडामात्रं क्रीडैव अवधारणार्थेन मात्रशब्देन मयूरव्यंसकादित्वात्समासः । मात्रशब्देन क्रीडातिरिक्तमन्यद्वास्तवं किमपि नास्तीति सूचितं । अकारणे कारणाऽभावे, नञर्थोऽभावः । 'यस्य च भावेन भावलक्षणं' इति सप्तमीयं, कारणाभावे सतीति यावत् । देवी वासवदत्ता न व्यथयितव्या न पीडयितव्या । पत्युः परस्त्रीसंगमे हि स्त्रीयानां क्रोध उपपद्यते । अस्माकं तु इदं केवलं क्रीडामात्रं न कोऽपि वास्तविकोऽर्थः, अत एतादृशमर्थं देव्यै निवेद्य सा न पीडयितव्येत्यर्थः । इदं बुद्धिस्थं दास्यमानं पारितोषिकं परितोषः संतोषः प्रयोजनमस्येति पारितोषिकं आभरणं कर्णाभरणादि 'प्रयोजनं' इति ठञ् प्रत्ययः । यदप्यत्र आभरणविशेषः स्फुटीकृतो नास्ति तथापि 'किं कर्णाभरणेन' इत्यग्रे सुसंगतोक्त्या कर्णाभरणमेव दित्सितमित्यवगम्यते । **सुसंगता**—भर्ता पोष्टा 'भर्ता धातरि पोष्टरि' इत्यमरः । प्रकटं प्रकाशं, शंकया अमुं वृत्तान्तं इयं देव्यै कथयेदित्याकारिकया, अलं, निषेधे गम्यमानक्रियानिरूपितकरणत्वात्तृतीया । भर्तुः वत्सराजस्य प्रसादेन प्रसन्नतया व्याक्रीडितमेव । अत्र व्याक्रीडितं विनोदः । स च 'तद्देव्यै गत्वा निवेदयिष्ये'

गुरुओ पसादो जं किं त्ति तुए एत्थ चित्तफलए अहं आलिहिदेत्ति भणिअ कुविदा मे पिअसही साअरिआ वट्टदि । ता गदुए पसादिअदु ।

**राजा**—( ससंभ्रममुत्थाय ) सुसंगते, दर्शय दर्शय, क्वासौ ।

**सुसं०**—भट्टा, एसा कअलीगुप्फंतरिदा चिट्ठदि ।

**राजा**—आदेशय मार्गम् ।

**सुसं०**—ईदो इदो भट्टा ।

( इति परिक्रामतः । )

**वसन्त०**—भो गेण्हामि एदं चित्तफलअं । एदस्स कज्जं भविस्सदि ।
( इति तथा करोति ) ।

( सर्वे कदलीगृहान्निष्क्रान्ताः )

**साग०**—( राजानं दृष्ट्वा सहर्षं ससाध्वसं सकम्पं च स्वगतम् ) हद्धी हद्धी ।

---

तत्किं कर्णाभरणेन, एष एव मे गुरुः प्रसादः यत् किमिति त्वयाऽत्र चित्रफलकेऽहमालिखितेति भणित्वा कुपिता मे प्रियसखी सागरिका वर्तते, तद्गत्वा प्रसादयतु ।

१. भर्तः, एषा कदलीगुल्मान्तरिता तिष्ठति ।

२. इत इतो भर्ता ।

३. भोः गृह्णाम्येतच्चित्रफलकम् । एतस्य कार्यं भविष्यति ।

४. हा धिक् हा धिक् ।

---

इत्येवं उक्तिरूपः भर्तुः कृपापात्रत्वेनैव मया एवं विनोदः कृत इत्यर्थः । अतः कर्णाभरणमपि मास्तु इत्याह—**तत्किमित्यादिना** । विनोदार्थमेव देव्यै निवेदयिष्ये इत्युक्तत्वात् वस्तुतो निवेदनं नैव करिष्यामि अतः कर्णाभरणरूपं पारितोषिकं मास्त्वित्यर्थः । अथापि पारितोषिकस्वीकाराग्रहश्चेत्तत्राप्याह—**एष एवेत्यादिना** । गुरुः श्रेष्ठः प्रसादः अनुग्रहः 'प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसत्तिषु' इति मेदिनी । कोऽसौ तमाह—**यदित्यादिना** । यत् यतो हेतोरित्यर्थः; अस्य तद्गत्वा इत्यत्रत्यतच्छब्देन संबंधः । किमिति कुतो हेतोः कुपिता क्रुद्धा, मे इति षष्ठी तस्याः प्रियसखीत्यत्रान्वयः । तत् तस्मात्कारणात् गत्वा अर्थात्तत्रेत्यर्थः । प्रसाद्यतां प्रपूर्वकात्सीदतेः कर्मणि प्रार्थनायां लोट् । प्रसन्ना क्रियतामित्यर्थः । अत्र सुसंगतावचनेन सागरिका मया लिखिता सागरिकया च त्वं इति सूचयता प्रसादोपन्यासेन बीजोद्भेदादुपन्यासाख्यमंगं 'उपपत्तिकृतो योऽर्थ उपन्यासश्च स स्मृतः' इति लक्षणात् । **राजा—ससंभ्रममिति** । संभ्रमस्त्वरा संभ्रमकारणं तु अभीष्टजनदर्शनेच्छा तदेव द्विरुक्त्या स्पष्टयति दर्शयेति संभ्रमे सर्प सर्प इतिवत् द्विरुक्तिः । क्वासौ वर्तते इति शेषः । असौ कुपिता तव सखी क्व वर्तते इत्यन्वयः । इदं च पश्य मृगो धावतीतिवत् दर्शनक्रियायां कर्म । निष्क्रांताः निर्गताः । **सागरिका**—सहर्षं ससाध्वसं सकंपं च स्वगतं इति

एणं पेक्खिअ अदिसद्धसेण ण सक्कणोमि पदादो पदं वि चलिदुं । ता किंवा एत्थ करिस्सं ।

**वसन्त०**—(सागरिकां दृष्ट्वा) हीही भोः। अच्चरिअं अच्चरिअं। ईदिसं कण्णआरण्णणं मणुस्सलोए ण दीसदि । ता तक्केमि पआवइणो वि एदं णिम्माइअ विम्हओ समुप्पण्णो त्ति ।

**राजा**—वयस्य, ममाप्येवं मनसि वर्तते ।

दृशः पृथुतरीकृता जितनिजाब्जपत्रत्विष-
श्चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतम् ॥
शिरांसि चलितानि विस्मयवशाद्ध्रुवं *वेधसा
विधाय ललनां जगत्त्रयललामभूतामिमाम् ॥ १५ ॥

१. एनं प्रेक्ष्यातिसाध्वसेन न शक्नोमि पदात् पदमपि चलितुम्। तत्किंवात्र करिष्ये ।

२. हीही भोः। आश्चर्यम् आश्चर्यम्। ईदृशं कन्यारत्नं मनुष्यलोके न दृश्यते । तत्तर्कयामि प्रजापतेरपीदं निर्माय विस्मयः समुत्पन्न इति ।

अध्याहृतभाषणक्रियाया विशेषणानि । तत्र हर्षकारणं अभीष्टजनदर्शनं । कथं वा अयं अनुगृहीयान्न वेति संशयेन साध्वसं भयं । अत एव कंपोऽपि तदेवाह—**एनं प्रेक्ष्येत्यादिना**। एनं राजानं प्रेक्ष्य विलोक्य अतिसाध्वसेन अतिभयेन 'भीतिर्भीः साध्वसं भयं' इत्यमरः। पदात्पदमपीति अपादाने पंचमी । पूर्वपदविन्यासदेशात् द्वितीयपदन्यासपरिमितदेशपर्यंतं गंतुं प्राप्तुं न शक्नोमि न प्रभवामि तत् तस्माद्धेतोः किं करिष्ये किं कर्तव्यमित्यर्थः। **वसं०**—ही ही हास्यानुकरणं आश्चर्यद्योतकं वा। 'ही ही विस्मयहास्ययोः' इति हैमः। आश्चर्यमिति संभ्रमे द्विरुक्तिः। आश्चर्यमेव स्पष्टयति। **ईदृशमित्यादिना**। ईदृशमिति निर्देशः विशेषाकारेण वर्णयितुमशक्यत्वप्रदर्शनार्थः। कन्यारत्नं कन्यानां रत्नं श्रेष्ठं 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः। नन्वत्र-समासो दुर्लभः न निर्धारणे इति निषेधात् इति चेन्न। संबंधसामान्यषष्ठ्या समासोऽयं निर्धारणषष्ठी तु यतो निर्धार्यते येन धर्मेण निर्धार्यते यश्च निर्धार्यते इति एतत्त्रितयोपादाने एवेति स्पष्टं सिद्धान्तविदां। मनुष्यलोके मनुष्याणां लोके भुवने जने वा तत् तस्मात् हेतोः प्रजापतेरित्यस्य विस्मयेन अन्वयः। इदं निर्माय प्रजापतेरपि ब्रह्मणोऽपि विस्मयः आश्चर्यं समुत्पन्न इति तर्कयामि अनुमिनोमि। अनेकविधसुंदरसृष्टिकर्तुः ब्रह्मणोऽपि एतत्सृष्ट्याऽऽश्चर्यमिति अतीव सौंदर्यं व्यज्यते। **राजा**—एवं त्वदुक्तं ममाऽपि मनसि वर्तते इत्यन्वयः तदेव स्पष्टयति—**दृश इति**। जगतां त्रयं त्रितयं तस्य ललामभूतां भूषणभूतां ललामं भूषणं भूता जाता 'विशेषणं विशेष्येणे'ति समासः

* वेधसः इति पाठः।

साग०—(सासूयं सुसंगतामालोक्य) सहि, ईदिसो चित्तफलओ तुए आणीदो (इति गन्तुमिच्छति)।

राजा—दृष्टिं रुषा क्षिपसि भामिनि यद्यपीमां
स्निग्धेयमेष्यति तथापि न रूक्षभावम्॥
त्यक्त्वा त्वरां व्रज पदैः स्खलितैरयं ते
खेदं गमिष्यति गुरुर्नितरां नितम्बः॥ १६॥

सुसं०—भट्टा, अदिकोपणा खु एसा। ता अग्गहत्थे गेण्हिअ पसादेहि णं।

---

१. सखि, ईदृशश्चित्रफलकस्त्वयाऽऽनीतः।
२. भर्तः, अतिकोपना खल्वेषा। तदग्रहस्ते गृहीत्वा प्रसादयैनाम्।

---

'ललामं पुच्छपुंड्राश्वभूषा'—इत्यमरः। ताम्, इमां पुरोवर्तिनीं ललनां स्त्रियं विधाय निर्माय वेधसा ब्रह्मणा ध्रुवं निश्चितं विस्मयस्य आश्चर्यस्य वशात् अधीनत्वात् शिरांसि मस्तकानि चलितानि चालितानि। अंतर्भावितण्यर्थोऽत्र चलतिः। यद्यप्यत्र प्रायेण वेधस इति षष्ठ्यंतः पाठो दृश्यते तथापि तृतीयांतपाठ एव युक्तः। अन्यथा विधायेति त्वाप्रत्ययस्याऽनुपपत्तिः स्यात्। समानकर्तृकत्वाऽभावात्। षष्ठ्यंतपाठाग्रहे तु अन्यत्तृतीयांतं पदमध्याहर्तव्यं। जिता निजाऽब्जस्य स्वीयाऽऽसनकमलस्य पत्राणां दलानां त्विट् शोभा याभिः ताः 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' इत्यमरः। दृशः दृष्टीः मुखानां बहुत्वाद्दृष्टीनां बहुत्वं। अतिशयेन पृथ्व्यः विपुलाः पृथुतराः तादृश्यः कृताः। पृथुतरीत्यत्र च्विप्रत्ययः। 'ऊर्यादिच्विडाचश्च' इत्यनेन च्व्यंतत्वाद्गतिसंज्ञा तस्य च पृथुतरीशब्दस्य कृता इत्यनेन 'कुगती'ति समासः। घुणाक्षरन्यायेन अद्भुतवस्तुनिर्माणं विलोक्य दृष्टिविस्फारणमित्यर्थः। तथा चतुर्भिरपि मुखैः समं एककालं व्याहरणक्रियाविशेषणं साधु साधु इति व्याहृतं भाषितं 'व्याहार उक्तिर्लपितं भाषितं' इत्यमरः। पृथ्वीवृत्तं 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति लक्षणात्॥ १५॥

**साग०**—सासूयं असूयाकारणं तु लज्जैव। ईदृशः राजप्राप्तिरूपः। **राजा**—हे भामिनि यद्यपि इमां दृष्टिं दृशं रुषा क्रोधेन क्षिपसि प्रेरयसि तथापि रुषा दृक्प्रेरणेऽपि स्निग्धा स्नेहविशिष्टा ष्णिह प्रीतौ इत्यस्मात् 'गत्यर्थाकर्मक—'इत्यनेन कर्तरि क्तप्रत्ययः। इयं दृष्टिः रूक्षभावं रूक्षस्य अप्रेम्णः 'रूक्षस्त्वप्रेम्ण्यचिक्कणे' इत्यमरः। भावं सत्तां 'भावः सत्तास्वभावाभि' इत्यमरः। कठोरत्वमिति यावत्। न एष्यति न यास्यति त्वरां संभ्रमं त्यक्त्वा व्रज गच्छ। विपक्षे बाधकमाह—पदैः चरणैः स्खलितैः व्याहतैः सद्भिः अयं ते तव नितरां अत्यंतं गुरुः स्थूलः नितंबः कटिपश्चाद्भागः खेदं दुःखं गमिष्यति यास्यति। त्वरया गमने हि उच्चनीचस्थले पदानां स्खलनेऽपि गुरुनितंबस्यात्यंतं दुःखं भवेदतः शनैर्गच्छेति तात्पर्यं। वसंततिलकावृत्तं। 'उक्ता वसंततिलका तभजा जगौ गः' इति लक्षणात्॥ १६॥

**सुसंग०**—अतिकोपना अतिक्रोधशीला। 'आक्रोस्तच्छीले'त्याद्यनुवर्तमाने कुप

राजा—(सानन्दम्) यथाह भवती । ( सागरिकां हस्ते गृहीत्वा स्पर्शसुखं नाटयति । )

वसन्त०—भो, एसा खु तुए अपुव्वा सिरी समासादिदा ।

राजा—वयस्य, सत्यम् ।

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः ।
कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवम् ॥ १७ ॥

सुसं०—सहि, अदिणिट्ठुरा दाणिं सि तुमं । जा एवं भट्टिणा हत्थे वलंबिदा वि कोवं ण मुंचेसि ।

---

१. भोः, एषा खलु त्वयाऽपूर्वा श्रीः समासादिता ।

२. सखि, अतिनिष्ठुरेदानीमसि त्वम् । यैवं भर्त्रा हस्तेऽवलम्बितापि कोपं न मुञ्चसि ।

---

क्रोधे इत्यस्मात् 'क्रुधमंडार्थेभ्यश्च' अनेन ताच्छील्ये युच् । एतेन अतीवाऽनुनयार्हा इति सूचितं तत् अतिकोपनत्वाद्धेतोः । अग्रश्चासौ हस्तश्च अग्रहस्तः तस्मिन् 'विशेषणं विशेष्येणे'ति समासः । हस्ताग्रे इति फलितं । अवयवे समुदायरूपारोपात् सामानाधिकरण्यं । स्पष्टा चेयं रीतिः 'विशेषणं विशेष्येण बहुलं' इत्यवष्टभ्य एकदेशिसमासप्रत्याख्यानपरभाष्ये । गृहीत्वा धृत्वा एनां । अन्वादेशत्वादेनादेशः । प्रसादय प्रसन्नां कुरु । **राजा**—सानंदमिति अभिलषितप्राप्तेरानंदः । इदं च अध्याहृतवचनक्रियाया विशेषणं । भवती यथाऽऽह तथा करोमीति शेषः । स्पर्शसुखं नाटयति । तन्नाटनाभिनयश्च नेत्रनिमीलनपूर्वकं क्षणमात्रपर्यंतमवस्थानम् । पूर्वा पूर्वकालिकी न भवतीत्यपूर्वा । पूर्वोपलब्धलक्ष्म्यपेक्षया इयं भिन्नेत्यर्थः । किंचिद्धर्मवैलक्षण्येपि एषा लक्ष्मीरेवेत्यर्थः । समासादिता प्रापिता । **राजा**—सत्यमिति इयं श्रीरिति यदुक्तं त्वया तत्सत्यमित्यर्थः । तदेव स्फुटयति—**श्रीरित्यादिना** । एषा सागरिका श्रीः लक्ष्मीः अस्याः पाणिः करः पारिजातस्य कल्पवृक्षविशेषस्य पल्लवः किसलयं अन्यथा एतत्पाणेः पारिजातपल्लवत्वाऽभावे, एषः पाणिः स्वेदस्य धर्मस्य छद्म मिषं यस्य स स्वेदच्छद्मा स चासौ अमृतस्य सुधाया द्रवश्च स्वेदच्छद्मामृतद्रवः तं कुतः कस्मात्कारणात्स्रवति । अमृतस्रावो हि पारिजातपल्लवात्प्रसिद्धः । एतत्पाणेः पारिजातपल्लवत्वाऽभावे स्वेदमिषेण अमृतद्रवस्रवणं न संभवेत् तस्मात्कल्पवृक्षपल्लवत्वं एतत्पाणावस्ति तत्साहचर्येण एतस्यां श्रीत्वं चास्तीति तात्पर्यं । रूपकालंकारः । अनुष्टुप वृत्तं ॥ १७ ॥ अत्र 'राजा सागरिकां हस्ते गृहीत्वा स्पर्शसुखं नाटयति' इत्यारभ्य 'स्वेदच्छद्मामृतद्रवं' इत्यंतेन नायकयोः साक्षादन्योन्यदर्शनादिना सविशेषाऽनुरागोद्घाटनात्पुष्पाख्यं प्रतिमुखसंधेरंगं । तल्लक्षणं **भरते** 'विशेषवचनं यत्तु तत्पुष्पमिति संज्ञितं' इति । **सुसंग०**—इदानीं भर्त्रा हस्तग्रहणकाले अतिनिष्ठुरा अतिकठोरा

**साग०**—( सभ्रूभङ्गम् ) [1]अयि सुसंगदे, अज्ज वि ण विरमेसि ।

**राजा**—प्रिये सागरिके, न खलु सखीजने युक्त एवं कोपानुबन्धः कर्तुम् ।

**वसन्त०**—[2]भोदि बुभुक्खिदो वम्हणो विअ किं कुप्पसि ।

**सुसं०**—[3]सहि, तुए सह ण वोलइस्सं ।

**राजा**—अयि कोपने नैतद्युक्तं समानप्रतिपत्तिषु सखीषु ।

**वसन्त०**—[4]एसा खु अवरा देवी वासवदत्ता ।

( राजा सचकितं सागरिकाया हस्तं मुञ्चति । )

---

१. अयि सुसंगते, अद्यापि न विरमसि ।
२. भवति, बुभुक्षितो ब्राह्मण इव किं कुप्यसि ।
३. सखि, त्वया सह न विहृष्ये ।
४. एषा खलु अपरा देवी वासवदत्ता ।

---

"कठोरं निष्ठुरं दृढं' इत्यमरः । भर्त्रा प्रियेण हस्तेऽवलंबिताऽपि धृताऽपि । इतरा मानिन्यः प्रियहस्ताऽवलंबनपर्यंतमेव मानं कुर्वंति त्वं तु हस्ताऽवलंबनोत्तरमपि कोपं न मुंचसि । अनेनाऽतिनिष्ठुरत्वमुपपाद्यते । **साग०**—भ्रुवो भंगः उन्नयनं तेन सहितं सभ्रूभंगं अद्यापि इदानीमपि न विरमसि भाषणादिति शेषः । अत्र 'सखि, अतिनिष्ठुरेदानीमसि त्वं' इत्यारभ्य 'सुसंगते, अद्यापि न विरमसि' इत्यंतेन अनुरागबीजोद्घाटनान्वयेन तदुत्था प्रीतिर्नर्मद्युतिः इति दर्शितं । उक्तं च विद्यानाथेन—'अनुरागबीजोद्घाटनेन परिहासवचनजन्या प्रीतिर्नर्मद्युतिरिति' । सभ्रूभंगं अद्यापि न विरमसि इत्यादिभाषणेन इयं सखीजने क्रुद्धेत्यभिप्रेत्य तन्निवारणार्थं राजा प्राह—**प्रिय इत्यादिना** । सखीजने एवं त्वदुक्तः कोपानुबन्धः कोपसंबंधः कर्तुं आचरितुं न खलु युक्तः, खलु निश्चये नैव युक्त इत्यर्थः । इतरत्रापि न युक्तः सखीजने तु सुतरां न युक्त इत्यर्थः । **विदूष०**—भवति इति संबोधनाऽर्थोऽयं । अथवा सति इत्यर्थः । 'भवद्युष्मत्सतोस्त्रिषु' इति मेदिनी । बुभुक्षितः क्षुधितः बुभुक्षा क्षुधा संजाताऽस्य 'तदस्य संजातं तारकादिभ्य इतच्' इति तारकादित्वादितच् 'अशनायाबुभुक्षाक्षुत्' इत्यमरः । ब्राह्मण इव द्विज इव किं कुप्यसि कुतः कुप्यसीत्यर्थः । क्षुधितब्राह्मणे कोपस्य सुलभत्वात् स एव दृष्टांतेनोपात्तः । **सुसंगता**—विहृष्ये इदं रूपं विचारणीयं । व्याहरिष्ये वक्ष्यामि एतादृशः शब्दोऽत्र उचित इति भाति । **राजा**—कोपने क्रोधने समाना तुल्या प्रतिपत्तिः प्रवृत्तिः यासां ताः । 'प्रतिपत्तिः प्रवृत्तौ च' इति मेदिनी । तुल्याचरणासु सवयस्कासु इति यावत् । **विदूष०**—खलु निश्चयेन अपरा द्वितीया वासवदत्ता । तत्तुल्यकोपवत्त्वात् अपरवासवदत्तात्वमेतस्याः । **सचकितमित्यादि** । सचकितं सभयं । कोपनत्वाऽभिप्रायेण एषा खल्वपरा वासवदत्ता इति सागरिकामुक्तवतो

**साग०**—( ससंभ्रमम् ) सुसंगदे, किं दाणिं करिस्सं ।

**सुसं०**—सेहि, एदं तमालविडवं अंतरिअ इदो णिक्कमम्ह ।

( इति निष्क्रान्ते । )

**राजा**—( पार्श्वतोऽवलोक्य सविस्मयम् ) क्वासौ देवी वासवदत्ता ।

**वसन्त०**—भो, ता एदं । सा खु अवरा देवी वासवदत्ता अदिदीहरोसदाएत्ति भणिदं ।

**राजा**—धिङ्मूर्ख,

प्राप्ता कथमपि दैवात्कण्ठमनीतैव सा प्रकटरागा ।
रत्नावलीव कान्ता मम हस्ताद्भ्रंशिता भवता ॥ १८ ॥

---

१. सुसंगते, किमिदानीं करिष्ये ।
२. सखि, एतत्तमालविटपमन्तर्य इतो निष्क्रमावः ।
३. भोः, तदेतत् । सा खल्वपरा देवी वासवदत्ताऽतिदीर्घरोषतयेति भणितम् ।

---

विदूषकस्य वाक्यमाकर्ण्य इयमेका सागरिकाऽत्र वर्तते अपरा ह्येषा वासवदत्ताऽऽगतेति तद्वाक्यस्यार्थं परिकल्प्य स्वीयवासवदत्तात्यागेन परकीयास्वीकरणापराधभीत्या सागरिकाया हस्तं मुंचति । **साग०**—ससंभ्रममिति । अत्र सागरिकायाः संभ्रमकारणमपि पूर्वोक्तमेव । इदानीं, वासवदत्ताया आगमनकाले । **सुसंगता**—एतत्तमालविटपं एष चासौ तमालविटपश्चेति कर्मधारयः । अंतर्य व्यवधाय । अत्र ल्यवादेशो विचारणीयः । समासाभावात् । अथवाऽत्र प्राग्न्यतमपूर्वकव्यवधानवाचकाऽन्तरशब्दात् णिजंतात्क्त्वाप्रत्यये उपसर्गसमानाकारस्य पूर्वपदस्य पृथक्कारे क्त्वांतेन कुगतीति समासे ल्यवादेशे 'विनापि प्रत्यय'मिति प्रादेर्लोपः । इतीयं यथाकथंचित्सिद्धस्य गतिः । इतः अस्मात्स्थानात् निष्क्रमावः गच्छावः । निष्क्रांते गते । **राजा**—पार्श्वयोरिति पार्श्वतः सप्तम्यंतादाद्यादित्वात्तसिः । सविस्मयमिति अकस्माद्देव्याऽऽगमनं विस्मयकारणं । देवी वासवदत्ता एषेति यद्भवतोक्तं असौ क्वेत्यन्वयः । **विदूषकः**—स्वाभिप्रायं प्रकटयति—भोस्तदित्यादिना । भोः सखे, यदि त्वं वासवदत्ताऽऽगतेति मन्यसे तत् तर्ह्येतत् वक्ष्यमाणं मदीयं भाषणं विद्धीति शेषः । तदेवाह—**सा खल्वित्यादिना** । अतिदीर्घरोषतया सा सागरिका अपरा देवी वासवदत्तेति भणितं इत्यन्वयः । **राजा**—धिङ् मूर्खेति अत्र यथाधिको योगे द्वितीया न तथा पूर्वं प्रतिपादितं तत एव द्रष्टव्यं । तदेव मूर्खत्वं प्रकाशयति—**प्राप्तेत्यादिना** । कथमपि दैवात्प्राप्ता अनेनाऽतिदुर्लभत्वं द्योतितं । इदं विशेषणं रत्नावल्याः कांतायाश्च । एवमग्रेतनान्यपि द्रष्टव्यानि । सा रत्नावली कांता च प्रकटरागा, प्रकटः स्पष्टः रागोऽनुरागो

( ततः प्रविशति वासवदत्ता काञ्चनमाला च )

**वासव०**—[1]हंजे कंचणमाले, अध केत्तिअदूरे दाणिं सा अज्जउत्तेण परिगहिदा णोमालिआ ।

**काञ्चन०**—[2]एदं कअलीहरं अदिक्कमिअ दीसदि ।

**वासव०**—[3]तेण हिं आदेसेहि मग्गं । तत्थ एव्व गच्छम्ह ।

**काञ्चन०**—[4]ता एदु एदु भट्टिणी ।

( इति परिक्रामतः । )

---

१. हञ्जे काञ्चनमाले, अथ कियद्दूर इदानीं सा आर्यपुत्रेण परिगृहीता नवमालिका ।

२. एतत्कदलीगृहमतिक्रम्य दृश्यते ।

३. तेन हि आदेशय मार्गम् । तत्रैव गच्छामः ।

४. तदेतु एतु भट्टिनी ।

---

यस्याः सा 'रागोऽनुरागे मात्सर्ये' इत्यभिधानात् । अथ च रत्नावलीमालापक्षे प्रकटः विष्वक् प्रसृतः रागः तेजो रक्तिमा यस्याः सा कंठं अनीतैव अनालिंगितैवेत्यर्थः । पक्षे भूषार्थं कंठं अनीतैव अप्रापितैव अधृतैवेत्यर्थः । रत्नावली एतन्नाम्नी कांता रत्नमाला च मम हस्तात् मम करात् भवता त्वया भ्रंशिता दूरीकृता अधःपातिता च । श्लेषोपमयोरंगांगिभावः संकरः । अत एतादृशदुर्लभरत्नस्य त्वया वियोजितत्वात् तव मूर्खत्वं स्पष्टमेवेति भावः । आर्यावृत्तं ॥ १८ ॥ अत्र 'राजा—धिङ्मूर्खे'त्यारभ्य 'मम हस्ताद्भ्रंशिता भवता' इत्यंतेन वत्सराजस्य सागरिकासमागमरूपहितस्य वासवदत्ताप्रवेशसूचकेन विदूषकवचसा निरोधान्निरोधनाख्यं प्रतिमुखसंधेरंगं 'हितरोधो निरोधनम्' इति लक्षणात् । वासवदत्ता वत्सराजपत्नी कांचनमाला तस्या दासी । चकारः समुच्चयार्थः । **वासव०**—हंजे इति संबोधने 'हंडे हंजे हलाह्वाने नीचां चेटीं सखीं प्रति' इत्यमरः । अथ इति प्रश्ने । आर्यपुत्रेण वत्सराजेन परिगृहीत्वा स्वीयत्वेन स्वीकृता सा पूर्वोक्ता नवमालिका इदानीं कियद्दूरे कियच्च तद्दूरं च तस्मिन् 'सप्तम्यधिकरणे च' इति प्रातिपदिकार्थे सप्तमी । **काञ्चन०**—एतत् पुरोवर्ति अतिक्रम्य अतिवाह्य दृश्यते अवलोक्यते लोकैरिति शेषः । तेन समानकर्तृकत्वादतिक्रम्येति क्त्वोपपत्तिः । **वासव०**—तेनेति 'हेतौ' इति हेत्वर्थे तृतीयेयं, नवमालिकाया निकटवर्तित्वहेतुनेति भावः । तत्रैव नवमालिकायाः प्रदेशे एव, यदि नवमालिका दूरमभविष्यत् तर्हि मध्ये व्यश्रमिष्यत् । तस्याः समीपवर्तित्वे तु मध्ये विश्रान्तिं विना तत्रैव गच्छाव इति एवकारस्वारस्यं । गमनकर्त्राधारत्वविवक्षायां तत्रेति सप्तमी, फलाश्रयत्वविवक्षायां तु कर्मत्वाद्द्वितीयाऽपि भवति । **काञ्च०**—तत् तस्मात्कारणात् तत्र जिगमिषारूपकारणादित्यर्थः । एतु एतु इति संभ्रमे द्वित्वं ।

राजा—वयस्य, केदानीं प्रियतमा द्रष्टव्या।

काञ्चन०—भट्टिणि, जह समीवे भट्टा मंतेदि तह तक्केमि भट्टिणीं एव्व पडिवालअंतो चिट्ठदि। ता उवसप्पदु भट्टिणी।

वास०—(उपसृत्य) जेंअदु जअदु अज्जउत्तो।

वसन्त०—एँस्सा खु देवी आअदा।

राजा—(अपवार्य) वयस्य, प्रच्छादय चित्रफलकम्। (विदूषको गृहीत्वा कक्षे स्थापयति) (प्रकाशम्) देवि, स्वागतं इहाऽऽस्यताम्।

वास०—(उपविश्य) अँज्जउत्त, अध सच्चकं ज्जेव कुसुमिदा णोमालिआ।

राजा—(सविस्मयम्) देवि, प्रथममागतैरस्माभिस्त्वं चिरयसीति न सा दृष्टा तदेहि। समेतावेव तां पश्यावः।

---

१. भट्टिनि, यथा समीपे भर्ता मन्त्रयति तथा तर्कयामि भट्टिनीमेव परिपालयंस्तिष्ठति। तदुपसर्पतु भट्टिनी।

२. जयतु जयतु आर्यपुत्रः।

३. एषा खलु देवी आगता।

४. आर्यपुत्र, अथ सत्यकमेव कुसुमिता नवमालिका।

---

परिक्रामतः गच्छतः। राजा—प्रियतमेति अतिशयेन प्रिया इति 'अतिशायने तमविष्ठनौ' इति तमप्। इदानीं संप्रति वियोगकाले इत्यर्थः। क्व द्रष्टव्या कुत्राऽवलोकितव्येत्यर्थः। काञ्चन०—यथा यतो हेतोरित्यर्थः। 'यथा निदर्शने द्वौ तूद्देशे निर्देशसाम्ययोः। हेतूपपत्तौ च' इति हेमचंद्रः। समीपे निकटे भर्ता वत्सराजः। तथा ततो हेतोरित्यर्थः। तर्कयामि अनुमिनोमि। भट्टिनीमेव वासवदत्तां त्वामेवेत्यर्थः। प्रतिपालयन् प्रतीक्षमाणः तत् राजकर्तृकत्वत्प्रतीक्षणाद्धेतोरित्यर्थः। उपसर्पतु समीपं गच्छतु। प्रार्थनायां लोट्। वासव०—जयतु जयतु इति संभ्रमे द्विरुक्तिः। राजा—अपवार्येति। एतल्लक्षणमुक्तं। प्रच्छादय चित्रफलकमिति। इदं च प्रच्छादनं वासवदत्ताया भीतेः। गृहीत्वेति अर्थाच्चित्रफलकं निक्षिपति स्थापयति। वासव०—कुसुमिता कुसुमानि पुष्पाणि संजातानि अस्याः सा। तारकादित्वादितच्प्रत्ययः। राजा—सविस्मयमिति वासवदत्तोक्त्या नवमालिकायाः स्मरणात्। तस्याश्च सिद्धस्य मंत्रादिना कुसुमितत्वदिदृक्षया विस्मयः। प्रथममिति आगमनक्रियाया विशेषणं, अस्माभिरिति कर्तरि तृतीया सा च दृष्टेतिदर्शनक्रियानिरूपिता चिरयसि चिरमित्यव्ययात्तत्करोतीति णिचि इष्ठवद्भावाट्टिलोपे लटो मध्यमपुरुषस्यैकवचनं, न दृष्टा नाऽवलोकिता, तत्

वासव०—( निर्वर्ण्य ) [1]अज्जउत्तमुहाणुरागादो ज्जेव मए जाणिदं जहा कुसुमिदा णोमालिआत्ति ता गमिस्सं ।

वसन्त०—[2]भोदि, जइ एवं ता जिदं अम्हेहिं । ( इति बाहू प्रसार्य नृत्यति । कक्षायाः फलकं पतति तत् दृष्ट्वा विषादं नाटयति )

( राजापवार्याङ्गुल्या दर्शयन्वसन्तकमुखं पश्यति । )

वसन्त०—( अपवार्य ) [3]भो, मा कुप्प । तुवं चिट्ठ अहं जेव एत्थ जाणिस्सं ।

काञ्च०—( फलकं गृहीत्वा ) [4]भट्टिणि, पेक्ख दाव किं एत्थ चित्तफलए आलिहिदं ।

वास०—( निर्वर्ण्य स्वगतम् ) [5]अअं अज्जउत्तो । इअं उण साअरिआ । ( प्रकाशं राजानं प्रति सकोपहासम् ) अज्जउत्त, किं एदं ।

---

१. आर्यपुत्रमुखानुरागत एव मया ज्ञातं यथा कुसुमिता नवमालिकेति तत् गमिष्ये ।

२. भवति, यद्येवं तज्जितमस्माभिः ।

३. भो, मा कुप्य । त्वं तिष्ठ । अहमेवात्र ज्ञास्ये ।

४. भट्टिनि, प्रेक्षस्व तावत् किमत्र चित्रफलक आलिखितम् ।

५. अयमार्यपुत्रः । इयं पुनः सागरिका । आर्यपुत्र, किमेतत् ।

---

तस्मात् यस्मात् दृष्टा अतो हेतोरित्यर्थः । समेतावेव मिलितावेव पश्यावः अवलोकयावः । **वासव०**—निर्वर्ण्य अवलोक्य 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणं' इत्यमरः । आर्यपुत्रस्य पत्युः मुखस्य अनुरागः तेजोविशेषः तस्मात् । आद्यादित्वात्तसिः । मया ज्ञातं अवगतं, किमवगतमित्याकांक्षायामाह—**यथेत्यादिना** । तत् नवमालिकायाः कुसुमितत्वाद्धेतोः गमिष्ये गमिष्यामीत्यर्थः । अत्राऽऽत्मनेपदं चिन्त्यं । **विदू०**—भवति महाराज्ञीत्यर्थः । **यद्येवमिति** । यदि नवमालिका कुसुमितेत्यर्थः । तत् नवमालिकायाः कुसुमितत्वाद्धेतोरित्यर्थः । अस्माभिरिति कर्तरि तृतीया । जितं जयः कृत इत्यर्थः । वासवदत्तापरिगृहीतमाधवीलतास्पर्धया वत्सराजगृहीतनवमालिकायाः कुसुमितत्वेनोत्कर्षातिशयात् अस्माकं जय इत्यर्थः । बाहू भुजौ प्रसार्य विस्तीर्य । इदं हर्षातिशयसूचकं, विषादं खेदं नाटयति अभिनयति, तदभिनयश्च मुखवैवर्ण्यादिना अंगुल्या दर्शयन् सूचयन्नित्यर्थः । तच्च सूचनं फलकपिधानरूपं । **वसं०**—मा कुप्य कोपं कुर्वित्यर्थः । अत्र निषेधार्थो माशब्दो न तु माङ् तेन 'माङि लुङि'ति लुङ् भवति । अत्र फलकाच्छादनविषये ज्ञास्ये ज्ञानवानस्मीत्यर्थः । 'अपह्नवे ज्ञः' इत्यतो ज्ञ इत्यनुवर्तमाने 'अकर्मकाच्चे'ति आत्मनेपदं । **काञ्चन०**—प्रेक्षस्व अवलोकय, तावदिति वाक्यालंकारे । किमिति सामान्ये नपुंसकं । यथा यत्किंचित् एतत् । **वासव०**—निर्वर्ण्य विलोक्येत्यर्थः ।

राजा—( सवैलक्ष्यं अपवार्य ) वयस्य, किं ब्रवीमि।

वसन्त०—[1]भो, मा चिंता करेहि। अहं उत्तरं दाइस्सं। ( प्रकाशं वासवदत्तां प्रति ) अप्पा किल दुक्खं लिहदित्ति मम वचो सुणीअ पिअवअस्सेण एद विण्णाणं दंसिदं।

राजा—यथाह वसंतकस्तथैवैतत्।

वासव०—( फलकं निर्दिश्य ) [2]अज्जउत्त, एसा वि जा अवरा तुह समीवे आलिहिदा। ता किं वसंतअस्स विण्णाणं।

राजा—( सवैलक्ष्यस्मितं ) देवि, अलमन्यथा शङ्कया। इयं हि कापि कन्यका स्वचेतसैव परिकल्प्याऽऽलिखिता। न तु दृष्टपूर्वा।

---

१. भोः, मा चिन्तां कुरु। अहमुत्तरं दास्यामि। आत्मा किल दुःखं लिखति* इति मम वचनं श्रुत्वा प्रियवयस्येनेदं विज्ञानं दर्शितम्।

२. आर्यपुत्र, एषाऽपि याऽपरा तव समीप आलिखिता। तत्किं वसन्तकस्य विज्ञानम्।

---

पुनरिति भेदे। विशेषे इति यावत्। सकोपहासं मामप्यनादृत्य परकीयामनुवर्ततेऽयमिति कोपः, सुधापानरतस्य तिंतिणिकारसास्वादप्रवृत्तिवत् एतस्य कृत्यमिति हासः। किमेतदिति चित्रफलके उभयोर्लेखनं किं कुतो हेतोरित्यर्थः। वसं०—चिंतां मा कुर्विति। पूर्वोक्तमाकुप्येतिवल्लोद्र। आत्मा आत्मप्रतिकृतिः आत्मचित्रमित्यर्थः। दुःखं कष्टं यथा स्यात्तथा लिखतीति। अत्र लिख्यत इत्युचितं। अथवा आत्मा स्वयं, लिखतीत्यस्य कर्म आत्मानमिति शेषलब्धं। एवं च स्वयं आत्मानं दुःखं लिखतीति यथाकथंचित्सिद्धस्य गतिश्चिंतनीया। इह चित्रफलके, विज्ञानं स्वचित्रलेखनकौशलं। वासव०—फलकं फलकगतं सागरिकाचित्रमित्यर्थः। मंचाः क्रोशंतीतिवत् तात्स्थ्यात्ताच्छब्द्यं। निर्दिश्य प्रदर्श्य। तव समीपे तव चित्रसमीपे इत्यर्थः। सादृश्यादभेदारोपः। वसंतकस्य विदूषकस्य विज्ञानं कौशलं। इदं केवलहास्येन विहितं नर्माख्यं कैशिकीवृत्तेरंगं। राजा—विलक्षस्य विस्मितस्य भावो वैलक्ष्यं ब्राह्मणादित्वात् ष्यञ्। वैलक्ष्यस्मिताभ्यां सहितं सवैलक्ष्यस्मितं तेन सहेति बहुव्रीहिः। 'विलक्षो विस्मयान्विते' इत्यमरः। कथमनया इयमवाधारीति विस्मयः तत्खेदमार्जनार्थं स्मयः। अन्यथा शंकया एनामयं अनुरुणद्धीति शंकया अलं उपयोगो नास्तीत्यर्थः 'मास्म माऽलं च वारणे' इत्यमरः। हिर्हेतौ, इयं कापि कन्यका स्वचेतसैव स्वांतःकरणेनैव परिकल्प्य कल्पयित्वा। पूर्वं दृष्टा दृष्टपूर्वा।

---

* लिख्यते इति छायांतरम्।

विदू०—सच्चं सवामि वम्हसुत्तेण जइ कदावि अम्हेहिं ईदिसी दिट्ठपुवा ।

काञ्च०—(अपवार्य) भट्टिणि, कदावि ईदिसं घुणक्खरं संभवदि ज्जेव । ता अलं कोपेण ।

वासव०—( अपवार्य ) अइ उजुए, एदस्स वक्कभणिदाइं ण आणासि वसंतओ खु एसो । ( प्रकाशं राजानं प्रति ) अज्जउत्त, मम उण एदं चित्तं पेक्खिअ सीसवेअणा समुप्पण्णा । ता सुहं चिट्ठदु अज्जउत्तो । अहं गमिस्सं । ( इति उत्थाय गन्तुमिच्छति ) ।

राजा—( पटान्तेन गृहीत्वा )—देवि,

---

१. सत्यं शपे ब्रह्मसूत्रेण यदि कदाप्यस्माभिरीदृशी दृष्टपूर्वा ।

२. भट्टिनि, कदापीदृशं घुणाक्षरं संभवत्येव । तदलं कोपेन ।

३. अयि ऋजुके, एतस्य वक्रभणितानि न जानासि । वसन्तकः खल्वेषः । आर्यपुत्र, मम पुनरिदं चित्रं प्रेक्ष्य शीर्षवेदना समुत्पन्ना । तत्सुखं तिष्ठत्वार्यपुत्रः । अहं गमिष्ये ।

---

विदूष०—ब्रह्मसूत्रेण यज्ञोपवीतेन ईदृशी एतच्चित्रतुल्येति वंचनीयोऽर्थः । एतादृशी अपरा दृष्टा नास्ति एतस्या अद्वितीयत्वात् । एतादृशी द्वितीया न दृष्टेति वास्तवोऽर्थः । कांचन—घुणाक्षरमिति । अयं भावः—घुणाख्यः कीटविशेषः निजस्वाभाव्यात् काष्ठं कृणत्ति तत्र तेन असंकल्पितोऽपि तादृशकृन्तनेन अक्षराकारः संपद्यते तदेतद्घुणाक्षरं तद्वत् राज्ञा एतच्चित्रं स्वमनीषया कल्पितमपि कया चिल्लोकोत्तरकन्यकया तुल्यं समजनि अतो निरपराधे राज्ञि कोपं मा कार्षीरित्यर्थः । तदेवाह—तदलमित्यादिना । तत् राज्ञो निरपराधत्वाद्धेतोः कोपेनाऽलमित्यर्थः । वासव०—अयि ऋजुके सरले 'ऋजावजिह्मप्रगुणौ' इति कोशः । एतस्य वसंतकस्य वक्रभणितानि कुटिलभाषणानि भणितानीत्यत्र 'नपुंसके भावे क्तः' न जानासि । एष पुरोवर्ती वसंतकः इति साभिप्रायं वसंतको हि शठत्वेन प्रसिद्धः तस्य भाषणं ऋजुत्वेन न ग्राह्यमित्यर्थः । ममेत्यस्य शीर्षवेदना समुत्पन्नेत्यत्रान्वयः । तत् यस्माच्छीर्षवेदना समुत्पन्ना तस्मादित्यर्थः । आर्यपुत्रः सुखं प्रतिबंधरहितं तिष्ठतु ममाऽत्र सत्वे तद्व्यवहारस्य प्रतिबंधः स्यात् अतः सुखं तिष्ठतु इति साकूतमुक्तिः । अत्र 'वासवदत्ता—( फलकं निर्दिश्य ) आर्यपुत्र, एषाप्यपरा तव समीप आलिखिता तत्किं वसंतकस्य विज्ञानं' तथा 'आर्यपुत्र, मम पुनरेतच्चित्रं प्रेक्ष्य शीर्षवेदना समुत्पन्ना' इत्यनेन वासवदत्तया वत्सराजस्य सागरिकानुरागोद्भेदनात् प्रत्यक्षनिष्ठुराभिधानं वज्रं । तदुक्तं 'वज्रं प्रत्यक्षनिष्ठुरम्' इति । राजा—पटांतेन गृहीत्वा तामिति

प्रसीदेति ब्रूयामिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ।
न मे दोषोऽस्तीति त्वमिदमपि च ज्ञास्यसि मृषा
किमेतस्मिन्वक्तुं क्षममिति न वेद्मि प्रियतमे ॥ १९ ॥

वास०—( सविनयं पटान्तमाकर्षन्ती ) अज्जउत्त, मा अण्णधा संभवेहि । सच्चं मं सीसवेअणा वाधेदि । ता गमिस्सं ।

( इति निष्क्रान्ते । )

---

१. आर्यपुत्र, माऽन्यथा सम्भावय । सत्यं मां शीर्षवेदना बाधते । तद्गमिष्ये ।

---

शेषः । गृहीत्वेति अध्याहृतभाषणक्रियानिरूपितपूर्वकालिकत्वात् क्त्वाप्रत्ययः । स्वकृतापराधेन अंतः क्रुद्धां देवीं वासवदत्तां चाटूक्त्याऽनुवदति—**प्रसीदेत्यादिना** । हे प्रियतमे इष्टतमे, अतिशयेन प्रिया प्रियतमा 'अतिशायने' इति तमप् 'तसिलादिष्वाकृत्वसुच' इति पुंवद्भावः एतस्मिन्नवसरे इति शेषः किं अर्थात् भाषणं वक्तुं भाषितुं क्षमं युक्तं 'शकधृषे'त्यादिना तुमुन् । इति न वेद्मि न जानामि । विद ज्ञाने लट् । तथाहि—प्रसीद प्रसन्ना भव । प्रपूर्वात्सीदतेः प्रार्थनायां लोट् । इतिर्हि अनुकरणबोधकः 'गविल्ययमाहे'त्यादिवत् । ब्रूयां वदेयमित्यर्थः । इदं प्रसीदेति भाषणं कोपे क्रोधे असति अविद्यमाने न घटते न युज्यते । अत्र वासवदत्तायाः कोपे उत्पन्नेऽपि बहिः स्फुटं प्रतीयमानत्वाभावात् असति कोपे इति राज्ञ उक्तिः । एवं परकीयायां मनोनिवेशनं पुनः नो करिष्यामि नाचरिष्यामि इत्येवमुच्यमाने अभ्युपगमः स्वीकारः अर्थादिदानीं कृतस्येति ज्ञेयं, भवेत् स्यात् । पुनर्न करिष्यामीत्युक्ते एकदा कृतमित्यर्थात्सिद्धमिति भावः । मे दोषः परकीयायां मनोनिवेशनरूपः नास्तीति इदमपि भाषणं त्वं मृषा मिथ्या ज्ञास्यसि । प्रत्यक्षदोषदर्शनेऽपि मम दोषो नास्तीत्युक्तिः मिथ्येति स्पष्टमेव । अत्र अनेन श्लोकेन चित्रगतयोर्नायकयोर्दर्शनात् कुपिताया वासवदत्तायाः अनुनयनं नायकयोरनुरागोद्घाटनान्वयेन पर्युपासनाख्यं प्रतिमुखसंधेरंगं । लक्षणमाह भरतः 'क्रुद्धस्यानुनयो यस्तु भवेत्तत्पर्युपासनं इति । काव्यलिंगमलंकारः । शिखरिणीवृत्तं 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी'ति लक्षणात् ॥ १९ ॥ **वासवदत्ता**—सविनयं सप्रणति 'विनयः शिक्षाप्रणत्योः' इति हेमचंद्रः । पटांतं वस्त्रांतं अन्यथा मिथ्या मा संभावय मदुक्तमिति शेषः । सत्यं तथ्यं क्रियाविशेषणमिदं शीर्षवेदना मस्तकपीडा 'उत्तमांगं शिरः शीर्षं' इत्यमरः । बाधते पीडयतीति यावत् । तत् शीर्षवेदनाया उत्पन्नत्वाद्धेतोः गमिष्ये अत्रात्मनेपदं चिंत्यं । निष्क्रांते गते, वासवदत्ताकांचनमाले इत्यर्थः ।

**वसन्त०**—भो, दिट्ठिआ वड्ढसे । क्खमेण अदिक्कंता वासवदत्ता अआलवादलिआ विअ ।

**राजा**—धिङ्मूर्ख, अलं परितोषेण । यान्त्या निगूढो न लक्षितस्त्वया देव्याः कोपानुबन्धः । पश्य

भ्रूभङ्गे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-
मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् ।
अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ॥ २० ॥

१. भोः, दिष्ट्या वर्धसे । क्षेमेणातिक्रान्ता वासवदत्ताऽकालवातूलिकेव ।

**वसं०**—भोः दिष्ट्या वर्धसे । इदं प्राग्व्याख्यातं । क्षेमेण सुखेन क्रोधाद्यकृत्वेति यावत् । अतिक्रांता गता अकाले वातूलिका वातसमूहः । 'वातात्समूहे च' इति वार्तिकेन ऊलप्रत्ययः । ततः स्वार्थिकः कन् । 'वातूलः पुंसि वात्याया'मित्यमरः । सा यथा सहसाऽऽयाति सहसैव गच्छति तद्वदियमपि गतेत्यर्थः । **राजा**—धिङ् मूर्ख ! हे मूर्ख, धिक् । परितोषेण संतोषेण अलं । यतः यांत्या गच्छंत्या निगूढः नितरां संवृतः 'गूढगुप्ते गुंठितरूषिते' इत्यमरः । देव्याः वासवदत्तायाः कोपानुबंधः कोपसंबंधः त्वया न लक्षितः न ज्ञातः मया तु तत्कार्यैरवगत इत्याह—**पश्येत्यादिना** पश्य जानीहीत्यर्थः । 'पश्यार्थैश्चाऽनालोचने' इति पाणिनिस्मृतेः दृशधातुर्ज्ञानसामान्यवाचकः स एवाऽत्र गृह्यते । अन्यथा वासवदत्तायाः पूर्वमेव निष्क्रांतत्वात्तद्विषयं चाक्षुषज्ञानं सर्वथाऽसंभवीति स्पष्टमेव । दयितया प्रियया वासवदत्तयेत्यर्थः । कोपः क्रोधः प्रकटीकृतः स्पष्टीकृतः । प्रकटशब्देन च्व्यंतेन कृतशब्दस्य गतिसमासः । प्रश्रयः प्रणयः 'प्रश्रयप्रणयौ समौ' इत्यमरः । न मुक्तः न त्यक्तः चकारद्वयं त्वर्थे । कोपस्तु प्रकटीकृतः प्रश्रयस्तु न मुक्त इत्यर्थः । तदेव तत्कार्यैर्द्रढयति—सहसा अकस्मात् भ्रूः भ्रुकुटिः भंग इव तरंग इव 'उपमित'मिति समासः । उद्गतेऽपि ऊर्ध्वं गतेऽपि । अनेन कोपप्रकटनं सूचितं । वदनं मुखं, परां उत्कृष्टां अतिशयितामित्यर्थः । नम्रतां नम्रस्य प्रश्रितस्य भावः नम्रता तां प्रश्रयमित्यर्थः । अनेन प्रश्रयोऽपि दर्शितः । मां प्रति भेदं विदारणं 'भेदो विदारणे द्वैधे उपजापविशेषयोः' इति हैमः । अवश्यं करोतीति तथा ईषत् हसितं मनाक् हसितं अनेन क्रोधः । ननु हसनेन कथं क्रोधो गम्यते प्रकरणादित्यवेहि । अत्रापि राज्ञा अपराधस्य कृतत्वादिदं वासवदत्ताया ईषद्धसितं क्रोधजन्यमेवेत्यर्थः । निष्ठुरं कठोरं वचः भाषणं नोक्तं । अंतः मध्ये यद्बाष्पं अश्रु तेन जडीकृतं डलयोरभेदाज्जलीकृतं व्याप्तमित्यर्थः । अनेन क्रोधः सूचितः । प्रभुतया क्रोधरोधसामर्थ्येन चक्षुः नेत्रं न विस्फारितं न विकासितं । अनेन प्रश्रयः, सर्वत्र दयितयेति तृतीयांतः कर्ताऽवगंतव्यः । शार्दूलविक्रीडितं वृत्तं 'सूर्याश्वैर्यदिमः

वसन्त०—गदा देवी वासवदत्ता । ता कीस तुमं अरण्णरुदिअं करेसि ।

राजा—तदेहि । देवीं प्रसादयितुमभ्यंतरमेव प्रविशावः ।

( इति निष्क्रान्तौ । )

इति कदलीगृहो नाम द्वितीयोऽङ्कः ।

---

१. गता देवी वासवदत्ता । तत्कस्मात्त्वमरण्यरुदितं करोषि ।

---

सजौ सततगाः शार्दूलविक्रीडितं' इति लक्षणात् ॥ २० ॥ तत् तस्याः क्रुद्धत्वाद्धेतोः प्रसादयितुं प्रसन्नां कर्तुं अभ्यंतरमेव अंतर्गृहमेव प्रविशावः गच्छावः ।

इति श्री ६ युतपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायपदव्यलंकृतपंडित-
प्रकांडश्रीकरहाटकरोपनामकश्रीमद्गोपालाचार्यांतेवासिना
निगुडकरोपाभिधेन नारायणशर्मणा विरचितायां
प्रभाख्यरत्नावलीटीकायां द्वितीयोऽङ्कः
समाप्तः ।

श्रीः ।



# तृतीयोऽङ्कः

। प्रवेशकः ।

( ततः प्रविशति मदनिका । )

**मदनिका**—( आकाशे । ) कौसंबिए, अवि दिट्ठा तुए भट्टिणो सआसे कंचणमाला ण वेत्ति । ( कर्णं दत्वाऽऽकर्ण्य । ) किं भणासि—को वि कालो ताए आअच्छिअ गदाए त्ति । ता कहिं दाणिं पेक्खिस्सं । ( अग्रतोऽवलोक्य ) कहं एसा खु कंचणमाला इदो ज्जेव आअच्छदि । ता जाव णं उवसप्पामि ।

---

१. कौशाम्बिके, अपि दृष्टा त्वया भर्तुः सकाशे काञ्चनमाला न वेति । किं भणसि—कोऽपि कालस्तयाऽऽगत्य गतया इति । तत्कुत्रेदानीं प्रेक्षिष्ये । कथमेषा खलु काञ्चनमालेत एवाऽऽगच्छति । तद्यावदेनामुपसर्पामि ।

---

अथेदानीं तृतीयाङ्कटीकाऽऽरभ्यते । अतिक्रांते द्वितीयाङ्के वत्सराजे सागरिकाऽनुरागातिशयं वर्णयित्वाऽस्मिंस्तृतीयाङ्के सागरिकायां वत्सराजाऽनुरागं वर्णयितुं प्रवेशकमाह—**ततः प्रविशति मदनिकेति** । यद्यपि पूर्वमेकनिष्ठत्वे पश्चादुभयनिष्ठत्वे रतेराभासत्वं इति श्रीमल्लोचनकाराः । एवं च प्रकृते तथा वर्तमानत्वात् आभासत्वं प्राप्तं तथापि 'शून्यं वासगृहं' इत्यादि श्लोकस्य काव्यप्रकाशे शृङ्गारोदाहरणत्वोक्तेः 'पूर्वं रक्ता भवेन्नारी पुमान्पश्चात्तदिंगितैः' इत्युक्तेर्नायिकाऽऽरब्धं संभोगशृङ्गारं उक्त्वा नायकारब्धमुदाहरति इति तट्टीकाकृतः । 'त्वं मुग्धेति' श्लोकावतरणोक्तेश्चाऽत्र शृङ्गार एव । तत्र द्वितीयाङ्के सांगः प्रतिमुखसंधिरुक्तः अत्र तृतीयाङ्के तु क्रमप्राप्तो गर्भसंधिः । तल्लक्षणं तु दशरूपके 'गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः । द्वादशांगः पताका स्यान्न वा स्यात्प्राप्तिसंभव' इति । प्रतिमुखसंधौ लक्ष्यालक्ष्यरूपतया स्तोकोद्भिन्नस्य बीजस्य सविशेषोद्भेदपूर्वकः सांतरायो लाभः पुनर्विच्छेदः पुनः प्राप्तिः पुनर्विच्छेदः पुनश्च तस्यैवान्वेषणं वारंवारं सोऽनिर्धारितैकांतफलप्राप्त्याशात्मको गर्भसंधिः तत्र चौत्सर्गिकत्वेन प्राप्तायाः पताकायाः अनियमं दर्शयति—पताका स्यान्न वेत्यनेन, प्राप्तिसंभवस्तु स्यादेवेति दर्शयति स्यात्प्राप्तिसंभव इति । तच्च लक्षणं प्रकृतांके संभवति । तथा हि—वत्सराजस्य वासवदत्तालक्षणोपायेन तद्वेषपरिग्रहसागरिकाभिसरणोपायेन च विदूषकवचसा सागरिकाप्राप्त्याशा प्रथमं, पुनर्वासवदत्तया विच्छेदः पुनः प्राप्तिः पुनर्विच्छेदः पुनरपायनिवारणोपायान्वेषणं 'नास्ति देवीप्रसादनं मुक्त्वाऽन्य उपायः' इत्यनेन दर्शितम् । तस्य च गर्भसंधेर्द्वादशांगानि तानि चोद्देशतो यथा 'अभूताहरणं मार्गो रूपोदाहरणे क्रमः । संग्रहश्चानुमानं च तोटकाधिबले तथा । उद्वेगसंभ्रमाक्षेपा' इति एतेषां यथासंभवं लक्षणानि तत्र तत्र प्रदर्शयिष्यंते इति दिक् । प्रकृतमनुसरामः । **तत इति** देवीं प्रसा-

( ततः प्रविशति काञ्चनमाला )

**काञ्चनमाला**—( सोत्प्रासम् । ) साहु रे वसंतअ, साहु । अदिसइदो तुए अमच्चजोअंधराअणो वि इमाए संधिविग्गहचिंताए ।

**मदनिका**—( सस्मितमुपसृत्य ) हला कंचणमाले, किं अज्ज वसंतएण किदं जेण सो एव्वं सलाहीअदि ।

**काञ्चनमाला**—हला मअणिए, किं तव एदिणा पुच्छिदेण पओअणं । तुमं इमं रहस्सं रक्खिदुं ण पारेसि ।

---

१. साधु रे वसन्तक, साधु । अतिशयितस्त्वयामात्ययौगन्धरायणोऽप्यनया संधिविग्रहचिन्तया ।

२. हला काञ्चनमाले, किमद्य वसन्तकेन कृतं येन स एवं श्लाघ्यते ।

३. हला मदनिके, किं तवैतेन पृष्टेन प्रयोजनम् । त्वमिदं रहस्यं रक्षितुं न पारयसि ।

---

दयितुमभ्यंतरमेव प्रविशाव इत्युक्त्वा विदूषकवत्सराजनिष्क्रमणानंतरं । मदनिका एतन्नाम्नी वासवदत्ताया दासी । **आकाशे इति** । एतल्लक्षणं 'किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् । श्रुत्वेवानुक्तमप्येकस्तस्यादाकाशभाषितं' इति विना पात्रं भाषणमेव दर्शयति कौशांबिके इति । त्वया भर्तुः वत्सराजस्य सकाशे समीपे कांचनमाला वासवदत्ताया मुख्यदासी । अपि दृष्टा न वेति । अपिः प्रश्ने । कर्णं दत्वेति अर्थात् श्रवणार्थं, आकर्ण्य श्रुत्वा, अत्र च आकर्णनाभिनयमात्रं न तु वस्तुत आकर्णनं वक्तुरभावात्, किं भणसि किं वदसि तया आगत्य, अत्रेति शेषः । गताया अर्थात्तस्या इत्यर्थः । कोऽपि इयत्तया निर्वक्तुमशक्यः बहुरिति यावत् । कालः समयः जात इति शेषः, तत् तस्या गमनोत्तरं बहुकालसत्त्वाद्धेतोः इदानीं सांप्रतं कुत्र प्रेक्षिष्ये कुत्राऽवलोकयिष्यामि । अग्रतः सप्तम्यंतात्तसिः अग्रभागे इत्यर्थः । कथमिति संभावनायां प्रश्ने वा । खलु निश्चये । इतः अस्मिन्स्थले सप्तम्यंताद्बाहुलकात्तसिल् तत् यस्माद्धेतोरत्रेयमागच्छति तस्मादित्यर्थः । उपसर्पामि समीपं गच्छामि । ततः मदनिकाभाषणसमाप्त्यनंतरं । **कांचनमाला**—सोत्प्रासं सोल्लुण्ठनं सोपहासमित्यर्थः । 'सोल्लुंठनं तु सोत्प्रासं' इत्यमरः । साधु सुष्ठु इत्यर्थः । पुनः साध्वित्युक्तिः लौकिकोक्त्यनुसारेण, अमा सह भवः अमात्यः 'अमांतिकसहार्थयोः' इति मेदिनी । स चासौ यौगंधरायणश्च सोऽपि संधिविग्रहादिचिन्तानिपुणोऽपीत्यपेरर्थः । अनयेति इदानीं त्वत्कृतयेत्यर्थः । संधिश्च विग्रहश्च संधिविग्रहौ तयोश्चिंतया विचारेण अतिशयितः अतिक्रांत इत्यर्थः । अत्र साधु रे इत्यारभ्य प्रवेशकेन गृहीतवासवदत्तावेषायाः सागरिकायाः छद्माश्रयेण वत्सराजाभिसरणं विदूषकसुसंगताक्लृप्तकांचनमालाऽनुवादवाक्येन दर्शितं इति अभूताहरणाख्यं नाम गर्भसंधेरंगं । एतल्लक्षणं भरतेनोक्तं 'कपटाद्याश्रयं वाक्यमभूताहरणं विदुः' इति । **मदनिका**—येन यादृशाचरणेन स आर्यवसंतक एवं सोल्लुंठनं श्लाघ्यते स्तूयते । **कांचनमाला**—एतेन आर्यवसंतकाचरणेन पृष्टेन तव किं

**मदनिका**—सैवामि देवीए चरणेहिं जइ कस्स वि पुरदो पआसेमि।

**काञ्चनमाला**—*तो जाव सुणु। अज्ज खु मए राअकुलादो पडिणिवत्तमाणाए चित्तसालिआदुवारे वसंतअस्स सुसंगदाए समं आलावो सुदो।

**मदनिका**—(सकौतुकम्) सैहि, कीदिसो।

**काञ्चनमाला**—जैह—सुसंगदे, णहि साअरिअं वज्जिअ पिअवअस्सस्स अण्णं किं पि अस्सत्थदाए कालणं। ता एत्थ पडिआरं चिंतेहि।

---

१. शपे देव्याश्चरणैर्यदि कस्यापि पुरतः प्रकाशयामि।

२. तद्यावच्छृणु। अद्य खलु मया राजकुलात्प्रतिनिवर्तमानया चित्रशालिकाद्वारे वसन्तकस्य सुसंगतया सममालापः श्रुतः।

३. सखि, कीदृशः।

४. यथा—सुसंगते, न हि सागरिकां वर्जयित्वा प्रियवयस्यस्यान्यत्किमप्यस्वस्थतायाः कारणम्। तदत्र प्रतीकारं चिन्तय।

---

प्रयोजनं किं फलमित्यर्थः। ननु प्रयोजनाऽभावेपि आर्यवसंतकस्यास्मदीयत्वात् श्लाघ्यं तद्वृत्तं श्राव्यमेव इति चेद्गोपनार्हं तत् त्वया गोपायितुं न शक्येतेत्यत आह—**त्वमिदमित्यादिना**। रहस्यं रहोभवं गोपनार्हमित्यर्थः। वृत्तमिति शेषः। रक्षितुं गोपायितुं न पारयसि न पूर्णा भविष्यसि 'पर्याप्तिवचनेष्वि'ति तुमुन्। **मदनिका**—यदि कस्याऽपि पुरतः प्रकाशयामि वदामि आर्यवसंतकस्य वृत्तमित्यर्थाद्गम्यते तर्हि देव्याश्चरणैः शपे शपथं करोमीत्यन्वयः। यद्यपि चरणयोर्द्वित्वाद्द्विवचनं न्याय्यं तथापि गुरवः समागता इतिवत् आदरार्थे बहुवचनं। **कांचन०**—तत् तस्मात् यावत् सकलं आचरितं श्रृणु आकर्णय। खल्विति वाक्यालंकारे। राजकुलात् राजगृहात्। 'कुलं कुल्यगणे गेहे देहे जनपदेऽन्वये' इति हैमः। प्रतिनिवर्तमानया प्रत्यागतया चित्राणां शालैव शालिका स्वार्थे कः तस्या द्वारे वसंतकस्य सुसंगतया समं सह साकं सत्रा समं सह इत्यमरः 'सहयुक्तेऽप्रधाने' इति सहार्थे तृतीया। आलापो भाषणं श्रुतः आकर्णितः। **मदनिका**—सकौतुकमिति सकौतूहलमित्यर्थः। 'रम्यवस्तुसमालोके लोलता स्यात्कुतूहलं' एतादृशः गोपनार्हः कोऽयं वृत्तांत इति कौतुकं। कीदृशः एतस्य प्रक्रांत आलापो विशेष्यं तमेव दर्शयति कांचनमाला यथेत्यादिना। **कांचन०**—यथा येन प्रकारेण अयं च प्रकारः पूर्वोक्तस्यालापस्य विशेषणं यत्प्रकारक आलाप इत्यर्थः। प्रियवयस्यस्य वत्सराजस्य सागरिकां वर्जयित्वाऽन्यत् अस्वस्थताया

---

* जइ एवं ता सुणु कथइस्सं इति पाठः। यद्येवं तच्छृणु, कथयिष्ये इति छाया

**मदनिका**—[1]तदो सुसंगदाए किं भणिदं ।

**काञ्चनमाला**—[2]तदो ताए एव्वं भणिदं—अज्ज खु देवीए चित्तफलअवुत्तंतसंकिदाए साअरिअं मम हत्थे समप्पअंतीए जं णेवत्थं मे पसादीकिदं तदो तस्सिं जेव्व विरइदभट्टिणीवेसं साअरिअं गेण्हिअ अहं पि कंचणमालवेसधारिणी भविअ पदोसकाले भट्टिणो आगमिस्सं । तुमं पि इध आट्ठिदो पडिवालइस्ससि । तदो माहवीलदामंडवे ताए सह भट्टिणो समागमो भविस्सदि ।

**मदनिका**—[3]सुसंगदे, हदासि खु तुमं जइ एव्वं परिअणवच्छलां देवीं वंचेसि ।

---

१. ततः सुसंगतया किं भणितम् ।

२. ततः तयैवं भणितम्—अद्य खलु देव्या चित्रफलकवृत्तान्तशङ्कितया सागरिकां मम हस्ते समर्पयन्त्या यन्नेपथ्यं मे प्रसादीकृतं ततस्तस्मिन्नेव विरचितभर्त्रीवेषां सागरिकां गृहीत्वाऽहमपि काञ्चनमालावेषधारिणी भूत्वा प्रदोषकाले भर्तुरागमिष्ये । त्वमपीहास्थितः प्रतिपालयिष्यसि । ततो माधवीलतामण्डपे तया सह भर्तुः समागमो भविष्यति ।

३. सुसंगते, हतासि खलु त्वं यद्येवं परिजनवत्सलां देवीं वञ्चयसि ।

---

अस्वास्थ्यस्य कारणं नह्यस्ति, एतेन सागरिकानिमित्तमेवेदमस्वास्थ्यमिति स्पष्टमेवोक्तप्रायं, तत् सागरिकानिमित्ताऽस्वास्थ्याद्धेतोः अत्र अस्वास्थ्यविषये प्रतिकारं निवर्तनोपायं चिंतय विचारय । **मदनिका**—तत इति विदूषकभाषणानंतरं । **कांचन०**—तदा विदूषकस्य प्रत्युत्तरदानसमये तया सुसंगतया एवं वक्ष्यमाणप्रकारेण भणितं उक्तं तमेव भाषणप्रकारमाह—**अद्येत्यादिना** । अद्य अस्मिन्नहनि । खल्विति वाक्यालंकारे । चित्रफलकवृत्तांतेन चित्रफलकदर्शनरूपवृत्तांतेन शंकितया संजातशंकया मम हस्ते सागरिकां समर्पयंत्या देव्या वासवदत्तया यत् यतः नेपथ्यं आकल्पः मे मह्यं प्रसादीकृतं प्रसादरूपेण अर्पितं ततस्तस्मात् तस्मिन्नेवेत्यस्य प्रदोषकाले इत्यनेनान्वयः । अथवा तस्मिन्नेव तन्नेपथ्ये एव, तेनैवेत्यर्थः; विरचितः भर्त्र्याः वासवदत्ताया वेषो यया तां सागरिकां गृहीत्वाऽहमपि सुसंगताऽपि कांचनमालाया वेषो नेपथ्यं तस्य धारिणी भूत्वा प्रदोषकाले भर्तुः वत्सराजस्य आगमिष्ये । 'षष्ठी शेषे' इति संबंधसामान्ये षष्ठी । भर्तुः समीपं आगमिष्यामीत्यर्थः । त्वमपि वसंतकोपि इह राजगृहनिकटे चित्रशालाद्वारि आस्थितः सन् प्रतिपालयिष्यसि प्रतीक्षां करिष्यसि, कुर्वित्यर्थः । तया सह सागरिकया सह । **मदनिका**—हतासि नष्टासि लौकिकोक्त्या गालिप्रदानमिदं कुतोऽयमाक्रोश इति चेत्तत्राह—यदि एवं पूर्वोक्तप्रकारेण परिजनेषु वत्सलां कारुणिकां देवीं वासवदत्तां वंचयसि प्रतारयसि ।

**काञ्च०**—हला मअणिए, दाणिं तुमं कहिं पत्थिदा ।

**मदनि०**—अस्सत्थसरीरस्स भट्टिणो कुसलवुत्तंतं जाणिदुं गदा तुमं चिरअसीत्ति उत्तम्मंतीए देवीए तुह सआसं जाणिदुं पेसिदम्हि ।

**काञ्चनमाला**—अदिउज्जुआ सा देवी जा एवं पत्तिआअदि । ( परिक्रम्यावलोक्य च । ) कहं एत्थ एसो खु भट्टा अस्सत्थदामिसेण अत्तणो मअणावत्थं पच्छादअंतो दंततोरणवलहीए उवरिं उवविट्ठो चिट्ठदि । ता एहि । एदं वुत्तंतं भट्टिणीए णिवेदेम्ह ।

( इति निष्क्रान्ते । )

**इति प्रवेशकः ।**

---

१. हला मदनिके, इदानीं त्वं क्व प्रस्थिता ।

२. अस्वस्थशरीरस्य भर्तुः कुशलवृत्तान्तं ज्ञातुं गता त्वं चिरयसीत्युत्ताम्यन्त्या देव्या तव सकाशं ज्ञातुं प्रेषितास्मि ।

३. अतिऋजुका सा देवी यैवं प्रत्यायते । कथमत्रैष खलु भर्ताऽस्वस्थतामिषेणात्मनो मदनावस्थां प्रच्छादयन्दन्ततोरणवलभ्या उपर्युपविष्टस्तिष्ठति । तदेहि । एतद्वृत्तान्तं भट्टिन्यै निवेदयावः ।

---

**कांचनमा०**—इदानीं संप्रति त्वं मदनिका । प्रस्थिता गंतुं प्रवृत्ता । प्रस्थितेत्यत्र आदिकर्मणि क्तः । **मद०**—अस्वस्थं अकुशलं शरीरं यस्य तस्य भर्तुः वत्सराजस्य कुशलवृत्तांतं क्षेमोदंतं 'वार्ता प्रवृत्तिर्वृत्तांत उदंतः स्यात्' इत्यमरः । ज्ञातुमवगंतुं गता त्वं कांचनमाला चिरयसि चिरं करोषि, चिर इत्यस्मात्प्रातिपदिकणिजंताल्लट्, इति हेतोः उत्ताम्यंत्या ग्लायंत्या देव्या वासवदत्तया तव कांचनमालायाः । प्रेषितास्मि प्रेरितास्मि । **कांचन०**—ऋजुरेव ऋजुका स्वार्थे कः, अतिसरलस्वभावा इत्यर्थः । सा देवी वासवदत्ता । अतिऋजुकत्वं स्पष्टयति—**येत्यादि** । एवं पूर्वोक्तप्रकारेण प्रत्यायते मन्यते । प्रत्याङ्भ्यामुपसर्गाभ्यामय्धातोर्लट् । अवलोक्य अर्थाद्राजानं । कथं प्रश्ने । एष खल्विति वाक्यालंकारे । भर्ता वत्सराजः । अस्वस्थतायाः अकुशलस्य मिषेण निमित्तेन आत्मनः स्वस्य मदनावस्थां कामदशां । प्रच्छादयन् अपिदधत् । दंततोरणस्य हस्तिदंतकृतवहिर्द्वारस्य 'तोरणोऽस्त्री बहिर्द्वारं' इत्यमरः । वलभ्याः सुधाकृतचंद्रशालायाः ('गच्ची' इति भाषायां) 'शुद्धांते वलभीचंद्रशाले सौधोर्ध्ववेश्मनि' इति रभसः । उपरि ऊर्ध्वभागे उपविष्टः कृतोपवेशनः तिष्ठति वर्तते, तत् तस्मात् एष चासौ वृत्तांतश्चेति कर्मधारयः । एतस्य वृत्तांतमिति षष्ठीतत्पुरुषो वा भट्टिन्यै वासवदत्तायै निवेदयावः कथयावः । संप्रदाने चतुर्थी । निष्क्रांते गते । प्रवेशक इति

( ततः प्रविशति मदनावस्थां नाटयन्नुपविष्टो राजा । )

**राजा**—( सोत्कण्ठं निश्वस्य । )

संतापो हृदय स्मरानलकृतः संप्रत्ययं सह्यतां
नास्त्येवोपशमोऽस्य तां प्रति पुनः किं त्वं मुधा ताम्यसि ।
यन्मूढेन मया तदा कथमपि प्राप्तो गृहीत्वा चिरं
विन्यस्तस्त्वयि सान्द्रचन्दनरसस्पर्शो न तस्याः करः ॥ १ ॥

अहो महदाश्चर्यम् ।

मनश्चलं प्रकृत्यैव दुर्लक्ष्यं च तथापि मे ।
कामेनैतत्कथं विद्धं समं सर्वैः शिलीमुखैः ॥ २ ॥

---

समाप्तः । प्रवेशकलक्षणं तु प्रागुक्तं । ततः मदनिकाकांचनमालयोर्निष्क्रमणानंतरं उपविष्टः कृतोपवेशनः पूर्वोक्तस्थले इति शेषः । **राजा**—सोत्कंठं सोत्कलिकं 'उत्कंठोत्कलिके समे' इत्यमरः । उत्कंठा च प्रकरणादिना सागरिकाविषयैव । निःश्वस्येत्यनेन तन्मनस्कता प्रदर्शिता । उत्कंठामेव प्रकटयति हे हृदय अंतःकरण, संप्रति इदानीं अयमनुभूयमानत्वेन सन्निकृष्टः स्मरः अनल इव अंतर्दाहकत्वात् तेन कृतः संतापः संज्वरः । सह्यतां सोढव्यः । प्राप्तकाले लोट् । संतापसहनस्य कालः प्राप्त इत्यर्थः । अस्य संतापस्य उपशमो नाशः कारणे कार्यारोपान्नाशोपायो वा नास्त्येव सर्वथा नास्तीत्येवकारार्थः । तां प्रति सागरिकां प्रति उद्दिश्येत्यर्थः । त्वं हृदयं मुधा वृथा 'व्यर्थके तु वृथा मुधा' इत्यमरः । ताम्यसि ग्लायसि । तापोपशमोपायो नास्त्येवेत्युक्तं तत्कारणमाह—यत् यस्मात् कारणात् मूढेन कार्याकार्यमजानता मया तदा सागरिकासमागमसमये । कथमपि अनिर्वचनीयप्रकारेणापि । महाप्रयासेनेत्यर्थः । प्राप्त उपलब्धः सांद्रचंदनरसस्पर्शः सांद्रः स्निग्धः यश्चंदनरसः तद्वत्स्पर्शो यस्य सः । सुगंधशीतलस्पर्श इत्यर्थः । एतादृशः तस्याः प्रियनायिकायाः करः हस्तः चिरं गृहीत्वाऽऽदाय गृहीत्वा एतस्यार्थिकं कर्म करमित्युन्नेयं, प्रधानक्रियोत्तरप्रत्ययेन कररूपकर्मण उक्तत्वात्प्रथमा । त्वयि हृदये न विन्यस्तः न स्थापितः । अत्रानुप्रासशब्दालंकारः हेत्वलंकारश्चार्थालंकार इति भाति । तल्लक्षणं तु 'हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते' इति । शार्दूलविक्रीडितं छंदः ॥ १ ॥ अहो महदाश्चर्यं किं महदाश्चर्यमित्याकांक्षायामाह—मनोऽन्तःकरणं प्रकृत्यैव स्वभावेनैव चलं चंचलं । तदुक्तं गीतायां 'चंचलं हि मनः कृष्ण प्रमाथि बलवद् दृढं । तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करं' इति । दुःखेन संकटेन लक्ष्यते ज्ञायते इति दुर्लक्ष्यं । अणुत्वादित्यर्थः । तस्याणुत्वं हि 'सुखाद्युपलब्धिसाधनमिंद्रियं मनः तच्च प्रत्यात्मनियतत्वात् अनंतमणुरूपं नित्यं च' इति तार्किकसिद्धांतात् । चकारः समुच्चयार्थः । चलं दुर्लक्ष्यं चेत्यर्थः । तथापि वेधहेतोः स्थिरत्वस्थूलत्वस्य मनस्यभावे सत्यपीत्यर्थः । मे मम एतत् अंतःकरणं कामेन मदनेन सर्वैः शिलीमुखैः बाणैः समं समकालं कथं केन प्रकारेण विद्धं प्रहतं चंचलत्वाद्दुर्लक्ष्यत्वाच्च वेध एव तावदसंभवी तत्रापि च

(ऊर्ध्वमवलोक्य) भोः कुसुमधन्वन् !

बाणाः पञ्च मनोभवस्य नियतास्तेषामसंख्यो जनः
प्रायोऽस्मद्विध एव लक्ष्य इति यल्लोके प्रसिद्धिं गतम् ।
दृष्टं तत्त्वयि विप्रतीपमधुना यस्मादसंख्यैरयं
विद्धः कामिजनः शरैरशरणो नीतस्त्वया पञ्चताम् ॥ ३ ॥

(विचिन्त्य) न तथाहमेवंविधावस्थमात्मानमनुचिन्तयामि यथान्तर्गूढकोपसंभाराया देव्या लोचनगोचरगतां तामेव तपस्विनीं सागरिकाम् । तथाहि ।

ह्रिया सर्वस्याधो नयति विदितोऽस्मीति वदनं
द्वयोर्दृष्ट्वाऽऽलापं कलयति कथामात्मविषयाम् ।

---

नान्यतमेन किंतु सर्वैः तत्रापि न यदाकदाचित् किंतु समकालं इति महदाश्चर्यमित्यर्थः । अत्र वेधस्य लक्ष्यस्थैर्यरूपहेतोरसमग्रत्वेऽपि वेधरूपकार्योत्पत्तेर्वर्णनात् विभावनालंकारस्य द्वितीयो भेदः । उक्तंच 'हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता' इति । अनुष्टुब्वृत्तं ॥ २ ॥ ऊर्ध्वं ऊर्ध्वप्रदेशे अवलोक्य विलोक्य । भो इति संबोधने 'स्युः पाट्प्याडंगहे है भोः' इत्यभिधानात् । कुसुमधन्वन् 'धनुषश्च' 'वा संज्ञायां' इति वाऽनङ् । मनसि अंतःकरणे भव उत्पत्तिर्यस्य । सप्तमीविशेषणेति ज्ञापकात् व्यधिकरणबहुव्रीहिः । तस्य मदनस्य पंचसंख्याकाः बाणाः नियताः निश्चिताः अन्यूनाऽनतिरिक्तसंख्याका इत्यर्थः । तेषां बाणानां, नास्ति संख्या गणनं यस्य स असंख्यः अस्मद्विधः अस्माकमिव विधा प्रकारो यस्य प्रियावियुक्त इत्यर्थः । 'विधा विधौ प्रकारे च' इत्यमरः, जनः लोकः प्रायः बहुशः लक्ष्यः शरव्यः इति एवंप्रकारेण लोके यत् प्रसिद्धिं ख्यातिं गतं प्राप्तं तत् त्वच्चरितं त्वयि अधुना सांप्रतं विप्रतीपं विपरीतं दृष्टं अवलोकितं । विप्रतीपदर्शनस्य हेतुमाह—**यस्मादिति** । यस्मात्कारणात् । असंख्यैः संख्यारहितैः अनंतैरित्यर्थः । शरैः बाणैः त्वया विद्धः ताडितः अशरणः नास्ति शरणं रक्षिता यस्य । 'शरणं गृहरक्षित्रोः' इत्यमरः । एतादृशः अयं मद्रूपः कामिजनः अतिशयितः कामोऽस्य कामी भूमार्थे इनिः स चासौ जनश्च लोकश्च त्वया पंचतां पंचसंख्यावत्तां अथ च पंचमहाभूतरूपतां नीतः प्रापितः । नीधातोर्द्विकर्मकत्वात् 'गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहां' इत्युक्तेः प्रधाने कर्मणि क्तप्रत्ययः । शार्दूलविक्रीडितं वृत्तं ॥ ३ ॥ विचिंत्य विचार्य यथा अंतः अंतःकरणे गूढः संवृतः कोपसंभारः कोपसमूहो यस्याः सा 'कोपक्रोधामर्षरोषे'त्यमरः । देव्या वासवदत्ताया लोचनयोः नयनयोः गोचरः विषयः तं गतां प्राप्तां तामेव तपस्विनीं अनुकंप्यां 'तपस्वी तापसे चानुकंप्ये त्रिषु' इति मेदिनी । सागरिकामनुचिंतयामि स्मरामि । तथाऽहं वत्सराजः एवं पूर्वोक्तप्रकारेण विधा प्रकारो यस्याः सा एवंविधा तादृशी अवस्था दशा यस्य तादृशमात्मानं नानुचिंतयामि न

सखीषु स्मेरासु प्रकटयति वैलक्ष्यमधिकं
प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरा ॥ ४ ॥

प्रेषितश्च मया तद्वार्तान्वेषणाय वसन्तकः । तत्कथं चिरयति ।

( ततः प्रविशति हृष्टो वसन्तकः । )

**वसन्त०**—( सपरितोषम् ) [1]हीही भोः । अच्चरिअं अच्चरिअं । कोसंबीरज्जलाहेणावि ण तादिसो पिअवअस्सस्स हिअआभिलासो आसी जादिसो मम सआसादो अज्ज पिअवअणं सुणिअ हविस्सदित्ति तक्केमि ।

---

१. हीही भोः । आश्चर्यम् आश्चर्यम् । कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य हृदयाभिलाष आसीद्यादृशो मत्सकाशादद्य प्रियवचनं श्रुत्वा

---

स्मरामि । क्रुद्धाया वासवदत्तायाः लोचनगोचरसागरिकायाः दुःखं स्मरतो मम एतादृश्यपि अवस्था स्मृता न भवति, मद्दुःखापेक्षया तद्दुःखमेव दुःसहमित्यर्थः । तथा हि तदेव दर्शयति । सर्वस्य जनस्येति शेषः । विदिताऽस्मि ज्ञाताऽस्मि । अत्र सागरिकाया विदितत्वं न लज्जावहं किंतु तच्चरितस्यैव विदितत्वं लज्जावहं, अतः शिखी ध्वस्त इतिवत् विशिष्टे बाधात् विशेषणे सागरिकाचरिते विदितत्वं पर्यवस्यति । एवं च विदितास्मीत्यस्य मच्चरितं विदितमित्यर्थः । इति हेतोः ह्रिया लज्जया वदनं मुखं अधः अधोभागे नयति प्रापयति । द्वयोः इदमुपलक्षणं त्र्यादीनामपि । आलापं आभाषणं दृष्ट्वा आत्मा स्वं विषयः प्रतिपाद्यो यस्यां तां कथां गोष्ठीं कलयति संख्याति । सखीषु स्मेरासु हास्यवतीषु सतीषु अधिकमतिशयितं वैलक्ष्यं विस्मितत्वं यतः इमाः सख्यः स्मेराः अतो मद्विषयमेव किंचिन्मनस्यानीय स्मेराः इत्यधिकं निकारं प्रकटयतीत्यर्थः । अतः प्रिया इष्टा सागरिकेत्यर्थः । प्रायेण बाहुल्येन हृदये निहितः स्थापितो य आतंकः भयं पीडा वा 'आतंको भयपीडयोः' इत्यभिधानात् । तेन विधुरा विकला 'विधुरं तु प्रविश्लेषे विकले विधुरा पुनः' इति हेमचंद्रः । आस्ते आस उपवेशने लट् । अत्र शंकाव्यभिचारिभावः । तदुक्तं 'अनर्थप्रतिभा शंका परक्रौर्यात्स्वदुर्नयात् । कंपशोषाभिवीक्षादिरत्र वर्णस्वरान्यता' इति । प्रकृते परक्रौर्यात् । शिखरिणीवृत्तं ॥ ४ ॥ मया वत्सराजेन तस्याः सागरिकाया वार्ता वृत्तांतः तस्या अन्वेषणाय शोधनाय । 'अन्वेषणं गवेषणं' इत्याद्यमरः । वसंतकः विदूषकः प्रेषितः प्रेरितः तत् तस्मात् प्रेषणकारणादित्यर्थः । कथमिति प्रश्ने । चिरयति । चिरशब्दाण्णिजंताल्लट् । ततः राजभाषणाऽनंतरं हृष्टः । हर्षकारणं तु अनुपदमेव स्पष्टीभविष्यति । **वसंतकः**—'ही ही भो आश्चर्यं' इदं प्राग्व्याख्यातं । यादृशो यत्प्रकारकः हृदयाभिलाषः इत्यार्थिकं विशेष्यं । तथा च प्रियवयस्यस्य वत्सराजस्य मत्सकाशात् अद्य प्रियवचनं इष्टभाषणं श्रुत्वा यादृशोऽभिलाषः कामः उत्कंठेति यावत् भविष्यति उत्पत्स्यते तादृशः कौशांबीराज्यलाभेनापि कौशांब्याः एतन्नामकनगर्याः यद्राज्यं राजकर्म आधिपत्यमिति यावत् तस्य लाभेनापि प्रियवयस्यस्य हृदयाभिलाषः नासीत्

ता जाव गदुअ पिअवअस्सस्स णिवेदइस्सं। (परिक्रम्यावलोक्य च।) कधं एसो पिअवअस्सो जधा इमं ज्जेव दिसं अवलोअंतो चिट्ठदि तहा तक्केमि मं ज्जेव पडिमालेदि। ता जाव णं उवसप्पामि। (इत्युपसृत्य।) जअदु जअदु पिअवअस्सो। भो वअस्स, दिट्ठिआ वड्डसे तुमं समीहिदकज्जसिद्धीए।

**राजा**—(सहर्षम्।) वयस्य, अपि कुशलं प्रियायाः सागरिकायाः।

**वसन्त०**—(सहर्षम्।) भो वअस्स, अइरेण सअं एव्व पेक्खिअ जाणिस्ससि।

---

भविष्यतीति तर्कयामि। तद्यावद्गत्वा प्रियवयस्यस्य निवेदयिष्ये। कथमेष प्रियवयस्यो यथेमामेव दिशमवलोकयंस्तिष्ठति तथा तर्कयामि मामेव प्रतिपालयति। तद्यावदेनमुपसर्पामि। जयतु जयतु प्रियवयस्यः। भो वयस्य, दिष्ट्या वर्धसे त्वं समीहितकार्यसिद्ध्या।

१. भो वयस्य, अचिरेण स्वयमेव प्रेक्ष्य ज्ञास्यसि।

---

इति तर्कयामीत्यन्वयः। तत् अतीवाह्लादकारित्वाद्धेतोः यावदिति वाक्यालंकारे गत्वा प्रियवयस्यस्य इयंच संबंधसामान्ये षष्ठी। परिक्रम्य इतस्ततो हिंडित्वा अवलोक्य वत्सराजमित्यर्थाद्गम्यते। कथं संभवे संभावनायामित्यर्थः। 'कथं प्रश्ने प्रकारार्थे संभ्रमे संभवेऽपि च' इति हैमः। यथातथेति अव्ययद्वयं हेतूपपत्तौ। एवं च यथेत्यस्य यत इत्यर्थः तथेत्यस्य तत इत्यर्थः। 'यथा निदर्शने द्वौ तूद्देशे निर्देशसाम्ययोः। हेतूपपत्तौ च' इत्यनेकार्थसंग्रहः। एवं च प्रियवयस्यः यतो हेतोः इमामेव मदधिष्ठितामेव दिशमवलोकयन् पश्यन् तिष्ठति वर्तते ततो हेतोः मामेव प्रतिपालयति प्रतीक्षते इति तर्कयामि इति तात्पर्यार्थः। तत् तस्मात् यतो मामेव प्रतिपालयति तस्माद्धेतोरित्यर्थः। यावदिति वाक्यालंकारे। एनं वत्सराजं उपसर्पामि समीपं गच्छामि। उपसृत्य समीपं गत्वा। जयतु जयतु इत्यत्र लौकिकोक्त्या आदराद्द्विरुक्तिः। अत्र 'ही ही भोः' इत्यारभ्य 'तर्कयामि' इत्यंतेन रत्नावलीप्राप्तिवार्तापि कौशांबीराज्यलाभादतिरिच्यते इत्यतिशयाभिधानात् उदाहरणाख्यं गर्भसंधेरंगं। तदुक्तं भरतेन 'यत्सातिशयवद्वाक्यं तदुदाहरणं स्मृतं' इति। समीहितं इष्टं यत्कार्यं तस्य सिद्ध्या निष्पत्त्या त्वं वर्धसे वृद्धियुक्तोऽसि उत्कर्षवानसीति यावत्। एतद्दिष्ट्या आनंदजनकम्। **राजा**—सहर्षमिति हर्षकारणं तु समीहितकार्यसिद्धिश्रवणं, प्रियायाः सागरिकायाः अपि कुशलं इति अपिः प्रश्ने। **वसंत०**—सगर्वमिति गर्वकारणं तु मयैवैतत्कार्यं निष्पादितमिति। तदेवाह—**भो वयस्येत्यादिना**। स्वयमेव प्रेक्ष्य अर्थात्सागरिकां। ज्ञास्यसि सागरिकायाः कुशलं इत्यर्थतो लभ्यं ज्ञाने

**राजा**—( सपरितोषम् । ) वयस्य, दर्शनमपि भविष्यति प्रियायाः ।

**वसन्त०**—( साहंकारम् । ) भोः, किं त्ति ण भविस्सदि जस्स दे उवहसिदविहप्पदिवुद्धिविहवो अअं अमच्चो ।

**राजा**—( विहस्य । ) न खलु चित्रम् । किं न संभाव्यते त्वयि । तत्कथय । विस्तरतः श्रोतुमिच्छामि ।

( विदूषकः कर्णे एवमेवं कथयति । )

**राजा**—( सपरितोषम् । ) वयस्य, इदं ते पारितोषिकम् ।

( इति हस्तादवतार्य कटकं ददाति । )

---

१. भोः, किमिति न भविष्यति यस्य त उपहसितबृहस्पतिबुद्धिविभवोऽयममात्यः ।

---

कर्म । **राजा**—सपरितोषमिति सागरिकादर्शनज्ञानेन परितोषः प्रियायाः सागरिकायाः । दर्शनमपीति 'मया तु कुशलमेव पृष्टं त्वं तु अचिरेण स्वयमेव प्रेक्ष्य ज्ञास्यसि' इति वदसि अतः कुशलं दर्शनं च भविष्यतीत्यपेरर्थः । **वसंत०**—साहंकारमिति । अहंकारकारणं तु प्रागुक्तं तदेव वसंतकः स्वमुखेनैव स्पष्टयति—**भोः किमित्यादिना** । किमिति कुत इत्यर्थः । न भविष्यति, सागरिकादर्शनं पूर्वं राजभाषणोक्तं अत्र भवनक्रियायां कर्तृत्वेन संवध्यते । उपहसितः तुच्छीकृतः अधः कृत इति यावत् । बृहस्पतेः गीष्पतेः बुद्धिविभवःबुद्ध्यैश्वर्यं येन बृहस्पतेरपि बुद्धिमत्तर इत्यर्थः । अयं मद्रूपो यस्य ते अमात्यः । **राजा—विहस्येति** । बुद्धिमांस्तु वर्तते चापलेन तु अत्युक्तिं वदति इति विहासकारणं । न खलु चित्रं नैवाश्चर्यं, त्वयि किं न संभाव्यते काकुरत्र अपि तु सर्वमेव संभाव्यते इत्यर्थः । तत् त्वयि सर्वकार्यकर्तृसंभवात् हेतोः कथय अर्थाद्वृत्तं । ननु उक्तं प्रेक्ष्य ज्ञास्यसीति अत आह—**विस्तरत इति** संक्षेपणोक्तं विस्तरतस्तु श्रोतुमिच्छामीत्यर्थः । विस्तरत इत्यत्र आद्यादित्वात्तृतीयांतात्तसिः । तच्च श्रवणे करणं कर्णे कर्णसमीपे एवमेवमिति चरितोक्त्यभिनयो लौकिकोक्त्या । अत्र विदूषकभाषणोक्तं 'भो वयस्य दिष्ट्या वर्धसे' इत्यारभ्य विदूषकः 'कर्णे एवमेवं कथयति' इत्यंतेन यथा विदूषकेण सागरिकासमागमः सूचितः तथैव निश्चितरूपो राज्ञे निवेदितः इति तत्वार्थकथनान्मार्गाख्यं गर्भसंधेरंगं । एतल्लक्षणं भरते 'तत्त्वार्थकथनं चैव मार्ग इत्यभिधीयते' इति । **राजा**—सपरितोषं परितोषकारणं तु अनेन महाकार्यं कृतमिति । अत एवाह वयस्येत्यादिना । पारितोषिकमिति 'प्रयोजनं' 'तस्मै प्रभवति' इत्यादिना वा ठञ् । हस्तादवतार्य निष्कास्य कटकं वलयं ददाति अर्पयति अर्थाद्विदूषकाय । अत्र सामदानाभ्यां विदूषकस्य सागरिकासमागमकारिणः संग्रहात्संग्रहः, तदुक्तं 'सामदानार्थसंयुक्तः संग्रहः परिकीर्तितः' इति ।

**वसन्त०**—(कटकं परिधायात्मानं निर्वर्ण्य) भोदु एवं दाव। इमं सुद्धसोवण्णकडअमंडिअहत्थं अत्तणो बम्हणीए गदुअ दंसइस्सं।

**राजा**—(हस्ते गृहीत्वा निवारयन्।) सखे, पश्चाद्दर्शयिष्यसि। ज्ञायतां तावदधुना किमवशिष्टमह्न इति।

**वसन्त०**—(परिक्रम्यावलोक्य च सहर्षम्।) भो, पेक्ख पेक्ख। एसो खु गुरुअणुराओक्खित्तहिअओ वारुणीवहूदिण्णसंकेदो विअ अत्थगिरिसिहरकाणणं अणुसरदि भअवं सहस्सरस्सी।

---

१. भवत्वेवं तावत्। इमं शुद्धसौवर्णकटकमण्डितहस्तमात्मनो ब्राह्मण्यै गत्वा दर्शयिष्यामि।

२. भो, प्रेक्षस्व प्रेक्षस्व। एष खलु गुर्वनुरागोत्क्षिप्तहृदयः वारुणीवधूदत्तसंकेत इवास्तगिरिशिखरकाननमनुसरति भगवान्सहस्ररश्मिः।

---

**वसंत०**—परिधाय हस्ते धृत्वा आत्मानं देहं 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरः। निर्वर्ण्य अवलोक्य भवतु अस्तु अन्यत्कार्यमिदानीं तिष्ठत्विति यावत्। एवं वक्ष्यमाणं तावत् प्रथमतः सर्वं हित्वा इदमेव तावत् करिष्यामीत्यर्थः। तदेवाह—**इममित्यादिना**। इममिति हस्तस्य विशेषणं शुद्धं मिश्रणरहितं अत्युत्तममिति यावत्। यत्सौवर्णकटकं सुवर्णविकारः सौवर्णं 'तस्य विकारः' इत्यण् तच्च तत्कटकं वलयं 'कटको वलयोऽस्त्रियां' इत्यमरः। तेन मंडितं भूषितं हस्तं करं आत्मनः किं हस्तमित्यन्वयः। गत्वा अर्थाद्गृहं ब्राह्मण्यै भार्यायै दर्शयिष्यामि। **राजा**—हस्ते गृहीत्वेति विदूषकमित्यार्थिकं कर्म निवारयन् गृहगमनादित्यर्थः। पश्चात् मदीयकार्यकरणानंतरं दर्शयिष्यसि निजहस्तं ब्राह्मण्यै इति शेषः। तदेव निजं कार्यमाह—**ज्ञायतामित्यादिना**। अधुना तावत् इदानीमित्यर्थः। अह्नः दिवसस्य किमवशिष्टं। कियान् भाग उर्वरित इत्यर्थः। इति ज्ञायतां अवगम्यतां। **वसं०**—परिक्रम्य इतस्ततो हिंडित्वा अवलोक्य अग्रिमविदूषकवाक्यात्सूर्यमिति अवलोकने कर्म। सहर्षमिति यथा प्रियवयस्यः कामुकः एवं भगवान्सहस्ररश्मिरपि कामुक इव लक्ष्यते इति हर्षकारणं। भोः इति संबोधने प्रेक्षस्व विलोकय एषः पुरो दृश्यमानः खलु निश्चयेन गुरुश्चासावनुरागश्च तेनोत्क्षिप्तं भ्रांतं हृदयं यस्य, पक्षे गुरुः अनु पश्चाद्रागः रक्तिमा तेन उत्क्षिप्तं व्याप्तं हृदयं हृदयतुल्यं मंडलं यस्य वारुणी पश्चिमा दिक् सैव वधूः नायिका तया दत्तः कृतः संकेतः अमुकस्थले अमुकसमये त्वयाऽऽगंतव्यं इत्येवंरूपः यस्य एतादृश इव अस्तगिरेः अस्ताचलस्य यच्छिखरं सानु तस्य काननं अरण्यं अनुसरति अनुगच्छति। सहस्रं रश्मयो यस्य सः एतादृश प्रयोगादेव सहस्रशब्दोऽनंतवाचीति कल्प्यते। रूपकोत्प्रेक्षयोरंगांगिभावः संकरोऽत्र।

राजा—( विलोक्य सहर्षम् । ) सखे, सम्यगुपलक्षितम् । पर्यवसितमहः । तथाहि ।

अध्वानं नैकचक्रः प्रभवति भुवनभ्रांतिदीर्घं विलङ्घ्य
प्रातः प्राप्तुं रथो मे पुनरिति मनसि न्यस्तचिन्तातिभारः ॥
संध्याकृष्टावशिष्टस्वकरपरिकरस्पष्टहेमारपङ्क्ति-
र्व्याकृष्यावस्थितोऽस्तक्षितिभृति नयतीवैष दिक्चक्रमर्कः ॥ ५ ॥

अपि च ।

यातोऽस्मि पद्मवदने समयो ममैष
सुप्ता मयैव भवती प्रतिबोधनीया ।

---

राजा—विलोक्य अर्थात्सूर्यं हर्षकारणं सागरिकायाः संकेतावसरप्राप्तिः सम्यक् समीचीनं यथा तथा उपलक्षितं ज्ञातं । अहः दिनं पर्यवसितं समाप्तं । तथाहि तदेव दर्शयति । संध्यायां संध्याकाले पितृप्रस्वां वा 'सायंसंध्या पितृप्रसूः' इत्यमरः आकृष्टेभ्योऽवशिष्टा उर्वरिताः ये स्वकराः निजकिरणाः 'बलिहस्तांशवः कराः' इत्यमरः । तेषां परिकरः समूहः 'परिकरः पर्यंकपरिवारयोः । प्रगाढे गात्रिकाबंधे विवेकारंभयोर्गणे' इति हैमः । स एव स्पष्टा स्फुटा हेम्नः सुवर्णस्य आराणां चक्रांगविशेषाणां पंक्तिर्यस्य । संध्याकाले हि सूर्यमंडलं सौवर्णचक्रारविशिष्टमिव भातीति सार्वजनीनमेतत् । हेमारपंक्तिरेव दिक्चक्रत्वेन उत्प्रेक्षते व्याकृष्येत्यादिना । संध्याकृष्टेत्यादिविशेषणविशिष्टः अस्तक्षितिभृति अस्ताचले अवस्थितः विद्यमानः एषः पुरोदृश्यमानोऽर्कः सूर्यः दिक्चक्रं दिशां चक्रं समूहं व्याकृष्य विशेषेणाकृष्य संक्षिप्येत्यर्थः । नयतीव स्वनिकटं प्रापयतीव । नेयं हेमारपंक्तिः किंतु दिक्चक्रमेव सूर्येण स्वनिकटे आनीतमित्यर्थः । ननु सूर्यस्य दिक्चक्रस्य स्वसमीपानयने कोऽभिप्राय इत्यत आह—**अध्वानमित्यादिना** । एकं चक्रं यस्य स एकचक्रः एतादृशो मे रथः स्यंदनः 'एकचक्रो रथो यस्य दिव्यः कनकभूषणः । स मे भवतु सुप्रीतः पद्महस्तो दिवाकरः ।' इत्युक्तेः । भुवनभ्रांतिदीर्घं भुवने भ्रांतिः भ्रमणं तया दीर्घः एतादृशो योऽध्वा तं विलंघ्य पुनः प्रातः प्रातःकाले प्राप्तुं उदयाचले इत्यर्थाज्ज्ञेयं, न प्रभवति न समर्थो भवति । अतिक्रांतमार्गस्य पुनस्तादृशमार्गातिक्रमणं अशक्यमिति लोकसिद्धमिदं । इति हेतोः मनसि अंतःकरणे न्यस्तः स्थापितः चिंताया अतिभारो येन सः । उत्प्रेक्षालंकारः । स्रग्धरावृत्तं ॥ ५ ॥ अपिच अन्यदपीत्यर्थः । पद्ममेव वदनं यस्याः सा पद्मवदना तत्संबोधनं हे पद्मवदने कमलिनि । अथ च पद्ममिव वदनं यस्याः सा पद्मवदना तत्संबोधनं । अहं यातोऽस्मि गतोऽस्मीत्यर्थः । ननु ममाह्लादकेन प्रियेण त्वया न गंतव्यमिति चेत्तत्राह—**मम एष समय इति** । मम एषः अस्तसमय इत्यर्थः । भगवदाज्ञापालकत्वात् अस्माभिः सर्वैः यथावसरं स्वस्वकर्मानुष्ठेयमित्यर्थः । **तथा च श्रुतिः** 'भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः ।

१४ आश्वासन, बोधन या विश्वासजनक तरह करती है।

See Darshanpalan Page c. 29.

प्रत्यायनामयमितीव सरोरुहिण्याः
सूर्योऽस्तमस्तकनिविष्टकरः करोति ॥ ६ ॥

तदुत्तिष्ठ । तत्रैव माधवीलतामण्डपे गत्वा प्रियतमासंकेतावसरं प्रतिपालयावः ।

वसन्त०—[1]सोभणं भणिदं । (इत्युत्तिष्ठति । विलोक्य ।) भो वअस्स, पेक्ख पेक्ख । एसो खु वहलीकिदविरलवणराइसण्णिवेसो गहीदघणपंकपीवरवणवराहमहिसकसणच्छवी ओसरदि पुव्वदिसं पच्छाद-अंतो तिमिरसंघाओ ।

---

१. शोभनं भणितम् । भो वयस्य, प्रेक्षस्व प्रेक्षस्व । एष खलु वहलीकृत-विरलवनराजिसंनिवेशो गृहीतघनपङ्कपीवरवनवराहमहिषकृष्णच्छविरपसरति पूर्वदिशां प्रच्छादयंस्तिमिरसंघातः ।

---

भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पंचमः' इति । ननु भवति अस्तंगते कथं मया कालो यापयितव्य इत्यत आह—**सुप्तेति** । सुप्ता मुकुलिता शयिता च ञिष्वप् शये क्तप्रत्यये 'वचिस्वपी'ति संप्रसारणं । विरहेण सुप्तेव यथाकथंचित्कालो यापयितव्य इत्यर्थः । ननु एतादृशविरहेण कियत्कालपर्यन्तं मया स्थातव्यं इत्यत आह—**मयैवेति** । मयैव सूर्येणैव भवती त्वं प्रतिबोधनीया विकासयितव्या समाधातव्या च । अनेनाऽनन्यगतिकत्वमुक्तं । इति पूर्वोक्तप्रकारेण अस्तमस्तकनिविष्टकरः अस्तस्य अस्ताचलस्य मस्तके शिखरे निविष्टा प्रविष्टा गता इति यावत् । कराः किरणा यस्य । अस्तं 'शोकेन अव्यवस्थितं यथा स्यात्तथा पतितं' यन्मस्तकं अर्थान्नायिकाया इति गम्यते । तत्र निविष्टः समाधानार्थं स्थितः करो हस्तो यस्य एतादृशः अयं सूर्यः सुवति कर्मणि लोकं प्रेरयति इति सूर्यः 'राजसूयसूर्ये'त्यादिना निपातनात्क्यप् रुडागमश्च । अथ च सूरिषु साधुः सूर्यः कश्चन नायकः सरोरुहिण्याः सरसि रोहतीति सरोरुहं कमलं । मूलविभुजादित्वात्कप्रत्ययः । तदस्या अस्तीति मत्वर्थे 'अत इनिठनौ' इति इनिः तदंतान्ङीप् । अथ च सरोरुहाणि कमलानि भूषणार्थं कर्णादिषु संति अस्याः सा तस्याः कस्याश्चिन्नायिकायाः प्रत्यायनं बोधनं । अनुनयमिति यावत् । करोतीव । अत्र श्लेषोत्प्रेक्षासमासोक्तीनां संकरः । तल्लक्षणानि तु पूर्वोक्तानि । वसंततिलका-वृत्तं ॥ ६ ॥ तत् संकेतकालस्य प्राप्तत्वाद्धेतोः उत्तिष्ठ । तत्रैव तस्मिन्नेव माधवील-ताया वासंत्याः मंडपे । अधिकरणविवक्षया सप्तमी । प्रियतमायाः सागरिकायाः यः संकेतः तस्याऽवसरं कालं प्रतिपालयावः प्रतीक्षावहे । **वसं०**—शोभनं साधु भणितं भाषितं त्वयेति शेषः । विलोक्येति अग्रिमवाक्यात् अंधकारो विलोकनस्य कर्म । प्रेक्षस्व प्रेक्षस्वेति संभ्रमाद्विरुक्तिः । एष इति तिमिरसंघातस्य विशेषणं । खल्विति वाक्यालंकारे । वहलीकृतः विपुलीकृतः विरलायाः सांतरायाः वनराज्याः वन-

**राजा**—( सहर्षं समन्ताद्विलोक्य । ) वयस्य, सम्यगुपलक्षितम् । तथाहि ।

पुरः पूर्वामेव स्थगयति ततोऽन्यामपि दिशं
क्रमात्क्रामन्नद्रिद्रुमपुरविभागांस्तिरयति ॥
उपेतः पीनत्वं तदनु च जनस्येक्षणपथं
तमःसंघातोऽयं हरति हरकण्ठद्युतिहरः ॥ ७ ॥

तदादेशय मार्गम् ।

**वसन्त०**—एदु एदु पिअवअस्सो ।[1]

( इति परिक्रामतः । )

---

१. एतु एतु प्रियवयस्यः ।

---

पंक्त्याः संनिवेशो रचना येन । अंधकारप्रसारे हि वनराजीनां मध्ये अंतरालभागो न दृश्यते किंतु सर्वं व्याप्तमिव प्रतिभातीति भावः । गृहीतः घनो निविडः पंकः कर्दमः येन 'घनं निरंतरं सांद्रं' 'पंकोऽस्त्री शादकर्दमौ' इत्यमरः । एतादृशः पीवरः पुष्टः यो वनवराहः अरण्यसूकरः 'वराहः सूकरो घृष्टिः' इत्यमरः । महिषश्च तद्वत्कृष्णा छविः कांतिर्यस्य सः । तिमिरस्य अंधकारस्य यः संघातः समूहः । पूर्वा चासौ दिशा च 'यथा वाचा निशा दिशा' इति भागुरिमतेन टाप् । तां प्रच्छादयन् अपसरति । सर्वत्र प्रसरतीत्यर्थः । **राजा**—सहर्षं हर्षकारणं संकेतकालप्राप्तिरेव । विलोक्येति अर्थाद्दिशः इति कर्म । सम्यक् समीचीनं उपलक्षितं ज्ञातं । तथाहि तदेव दर्शयति । अयं पुरोवर्ती हरकंठद्युतिहरः हरः शिवः तस्य कंठः गलः तस्य द्युतिः छविः तां हरतीति 'हरतेरनुद्यमनेऽच्' इत्यच्प्रत्ययः । तमसः अंधकारस्य संघातः समूहः पुरः अग्रतः पूर्वामेव प्राचीमेव दिशं काष्ठां स्थगयति आच्छादयति । ततः पूर्वदिगाच्छादनानंतरं अन्यामपि पूर्वेतरामपि दिशं स्थगयतीति संवध्यते । एवं क्रमादनुक्रमेण क्रामन् व्याप्नुवन् अद्रेः पर्वतस्य ये द्रुमाः वृक्षाः पुरस्य नगरस्य विभागा अवयवाश्च तान् तिरयति तिरःशब्दाण्णिच् टिलोपः । आच्छादयति । तदनु तस्यानु तदनु । ननु 'पूरणगुणे'ति निषेधेनाऽत्र भाव्यं इति चेन्न । तत्र पूर्वोत्तरसाहचर्येण कृदव्ययमेव गृह्यते इति सिद्धांतः । अत एव तदुपरीत्यादि सिध्यति । पीनस्य पुष्टस्य भावः पीनत्वं । पुष्टत्वमित्यर्थः । उपेतः प्राप्तः जनस्य लोकस्य ईक्षणस्य अवलोकनस्य पंथाः मार्गः 'ऋक्पूरब्धूःपथामानक्षे' इति समासांतोऽप्रत्ययः । तं हरति । लोकदृष्टिपथमंधयतीत्यर्थः । शिखरिणीवृत्तं ॥ ७ ॥ तत् सागरिकायाः संकेतकालस्य प्राप्तत्वाद्धेतोः मार्गं अध्वानं आदेशय दर्शय । **वसं०**—एतु एतु इति 'आनुपूर्व्ये द्वे वाच्ये' इति द्वित्वं ।

**वसन्त०**—( निरूप्य । ) भो वअस्स, एदं खु समासण्णं बहलपादवदाए पिंडीकदंधआरं विअ मअरंदुज्जाणम् । ता कधं एत्थ मग्गो लक्खीअदि ।

**राजा**—( गन्धमाघ्राय ) वयस्य, गच्छाग्रतः । ननु सुपरिज्ञात एवात्र मार्गः । तथाहि

पालीयं चम्पकानां नियतमयमसौ सुन्दरः सिन्दुवारः
सान्द्रा वीथी तथेयं बकुलविटपिनां पाटला पङ्क्तिरेषा ॥
आघ्रायाघ्राय गन्धं विविधमधिगतैः पादपैरेवमस्मिन्
व्यक्तिं पन्थाः प्रयाति द्विगुणतरतमो निह्नुतोऽप्येष चिह्नैः ॥ ८ ॥

( इति परिक्रामतः । )

---

१. भो वयस्य, एतत् खलु समासन्नं बहुलपादपतया पिण्डीकृतान्धकारमिव मकरन्दोद्यानम् । तत्कथमत्र मार्गो लक्ष्यते ।

---

**वसं०**—निरूप्य अवलोक्य । अर्थान्मकरंदोद्यानं एतत् समीपतरवर्ति बहला बहवः पादपाः वृक्षाः यस्मिन् 'विटपी पादपस्तरुः' इत्यमरः । तस्य भावः बहलपादपता भावे तल् । तया घनवृक्षवत्वेनेति यावत् । पिंडीकृतं पुंजीकृतं यदन्धकारं तमः तदिव । 'अन्धकारोऽस्त्रियां ध्वान्त'मित्यमरः । घनवृक्षत्वेन पुंजीभूतांधतमसमिव दृश्यमानमित्यर्थः । मकरंदोद्यानं मकरंदनामक आक्रीडः समासन्नं समीपं प्राप्तं । तत् निबिडांधकारत्वाद्धेतोः अत्र अस्मिन्मकरंदोद्याने मार्गः अध्वा । कथं लक्ष्यते कथं ज्ञायते । **राजा**—गंधमाघ्राय उपादायेत्यर्थः । स च योग्यतया नासिकेंद्रियेणैव । अग्रतः अग्रभागे आद्यादित्वात्सप्तम्यंतात्तसिः । अत्र अस्मिन्देशे सुपरिज्ञातः सम्यगवगतः । तथा हि तदेव दर्शयति । इयं समीपवर्तिनी चंपकानां हेमपुष्पकाणां 'अथ चांपेयश्चंपको हेमपुष्पकः' इत्यमरः । पाली पंक्तिः 'पालिः कर्णलताग्रेऽस्त्री पंक्तावंकप्रभेदयोः' इति मेदिनी । नियतं निश्चितमित्यर्थः । अस्तीति शेषः । अयं असौ 'इदमस्तु सन्निकृष्टे' 'अदसस्तु विप्रकृष्टे' इत्युक्तत्वात् अयमसौ इत्यनेन नातिदूरः नातिसमीपः एतादृशो गृहीतव्य इति भाति । अथवा इदमदसोः पूर्वोक्तमर्थं हित्वा लौकिकोक्त्या केवलनिर्देशार्थं उभयोः प्रयोगः । सुंदरः मनोहरः सिंदुवारः निर्गुंडीवृक्षः । तथेति समुच्चयार्थे तथा तेन प्रकारेण पूर्ववदित्यर्थः । वकुलाः केसराः 'अथ केसरे । वकुलः' इत्यमरः । ते च ते विटपिनः विटपाः शाखाः संति येषां ते विटपिनः वृक्षाः तेषामियं समीपवर्तिनी सांद्रा निबिडा 'घनं निरंतरं सांद्रं' वीथी पंक्तिः 'वीथ्यालिरावलिः पंक्तिः' इत्यमरः । पाटलानां पाटलीवृक्षाणां ( 'पाडळी' इति भाषायां ) पंक्तिः एषा अस्तीति शेषः । द्विगुणेति । अतिशयेन द्विगुणं द्विगुणतरं तच्च तत्तमश्च अंधकारश्च अंधतमसमिति यावत् । तेन निह्नुतः तिरस्कृतः आच्छन्न इति यावत् । एतादृशोऽपि एषः आवाभ्यामधिष्ठितः पंथाः मार्गः विशिष्टाः विधाः प्रकारा यस्य तमनेकप्रकारकमित्यर्थः । गंधमाघ्राय आघ्राय 'आभीक्ष्ण्ये णमुल् चे'ति आभीक्ष्ण्ये

वसन्त०—[1]भोः, एदं खु णिपडंतमत्तमहुअरवउलकुसुमामोदवासिददिसामुहं मसिणमरगअमणिसिलाकुट्टिमसुहाअंतचरणसंचारसूइदं तं ज्जेव माहवीलदामंडवं संपत्तम्ह । ता इह जेव्व चिट्ठदु भवं जाव अहं देवीवेसधारिणीं साअरिअं गेण्हिअ लहुं आअच्छामि ।

राजा—वयस्य, तेन हि त्वर्यताम् ।

वसन्त०—[2]वेअस्स, मा उत्तम्म । एसो आअदोम्हि ।

(इति निष्क्रान्तः)

१. भोः, एतत्खलु निपतन्मत्तमधुकरवकुलकुसुमामोदवासितदिङ्मुखं मसृणमरकतमणिशिलाकुट्टिमसुखायमानचरणसंचारसूचितं तमेव माधवीलतामण्डपं संप्राप्तौ स्वः । तदिहैव तिष्ठतु भवान्यावदहं देवीवेशधारिणीं सागरिकां गृहीत्वा लघ्वागच्छामि ।

२. वयस्य, मा उत्ताम्य । एष आगतोऽस्मि ।

क्त्वाप्रत्ययः । 'नित्यवीप्सयोः' इति द्वित्वं । अधिगतैः तत्तद्विशेषरूपेण ज्ञातैः पादपैः वृक्षैः तद्रूपैः चिह्नैः लक्ष्मभिः । 'चिह्नं लक्ष्म च लक्षणं' इत्यमरः । व्यक्तिं स्फुटतां अयममुकमार्ग इत्यादिरूपां प्रयाति प्राप्नोति । अत्रांधकारेण वृक्षाणां भेदानवगमात् तत्र च तत्तद्गंधेन तत्तद्वृक्षज्ञानपूर्वकमार्गज्ञानात् उन्मीलिताऽलंकारः । तदुक्तं 'भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ' इति । स्रग्धरावृत्तम् ॥ ८ ॥ **वसं०**—एतत् पुरो दृश्यमानं 'सामान्ये नपुंसकं' इत्यभिप्रायेण एतत् इति नपुंसकं । खल्विति वाक्यालंकारे । निपतन्तः मत्ता उन्मत्ताः मधुकराः भ्रमराः येषु एतादृशानि यानि वकुलानां कुसुमानि पुष्पाणि तेषां य आमोदः गंधः 'आमोदो गंधहर्षयोः' इत्यभिधानात् । तेन वासितानि सुगंधीनि दिशां मुखानि येन तं तथोक्तं । मसृणः अकर्कशः सुस्पर्श इति यावत् । 'मसृणोऽकर्कशे स्निग्धे त्रिषु मायां तु योषिति' इति विश्वः । मरकता गारुत्मता ये मणयः रत्नानि तेषां शिलाः पाषाणाः तासां कुट्टिमः निबद्धभूमिः ('फरसबंदी' इति भाषायां) तस्मिन् सुखायमानौ सुखमनुभवंतौ मृदुस्पर्शादित्यर्थः । 'सुखादिभ्यः कर्तृवेदनायां' इति क्यङ् । तयोः संचारेण सूचितं ज्ञापितं । तमेव पूर्वोक्तमेव माधवीलतायाः वासंतीलतायाः मंडपं जनाश्रयं 'मंडपोऽस्त्री जनाश्रयः' इत्यमरः । संप्राप्तौ स्वः आगतौ स्वः । मसृणकुट्टिमसुखस्पर्शसंचारेण माधवीलतामंडपं प्राप्तौ स्वः इति मन्यामहे । तत् संकेतस्थानप्राप्तत्वाद्धेतोः भवानिहैव माधवीलतामंडपे एव तिष्ठतु । कियत्पर्यंतं स्थातव्यमिति चेत्तदवधिं दर्शयति—**यावदित्यादिना** । यावदित्यवधौ । अहं वसंतकः देव्याः वासवदत्तायाः वेशं आकल्पं 'आकल्पवेशौ नेपथ्यं' इत्यमरः । अवश्यं धरतीति वेशधारिणी धृधातोः 'आवश्यकाधमर्ण्ययोर्णिनिः' उपपदसमासः । तां सागरिकां गृहीत्वा लघु क्षिप्रं आगच्छामि तावत्तिष्ठतु इति पूर्वेणान्वयः । **राजा**—तेन हि तेन त्वदीयोक्तेन हेतुना गम्यते इति शेषः । तर्हि त्वर्यतां सागरिकाऽऽनयनार्थं गच्छसि चेत्तर्हि त्वरां कुरु इत्यर्थः । **वसंत०**—मा उत्ताम्य मा

**राजा**—तावदहमप्यस्यां मरकतशिलावेदिकायामुपविश्य प्रियायाः संकेतसमयं प्रतिपालयामि । ( उपविश्य सचिन्तम् । ) अहो । कोऽपि कामिजनस्य स्वगृहिणीसमागमपरिभाविनोऽभिनवजनं प्रति पक्षपातः । तथाहि ।

प्रणयविशदां दृष्टिं वक्त्रे ददाति न शङ्किता
घटयति घनं कण्ठाश्लेषे रसान्न पयोधरौ ॥
वदति बहुशो गच्छामीति प्रयत्नधृताप्यहो
रमयतितरां संकेतस्था तथापि हि कामिनी ॥ ९ ॥

---

ग्लासीरित्यर्थः लोडुत्पत्तिः पूर्वमुपपादिता । एष आगतोऽस्मीति वर्तमानसामीप्ये भविष्यति लट् । तदनुरोधेन 'धातुसंबंधे प्रत्ययाः' इत्यनेन आगत इति भविष्यदर्थे क्तप्रत्ययः । झटिति आगमिष्यामीत्यर्थः । निष्क्रांतः गतः । **राजा**—तावत् त्वदागमनपर्यंतं अहमपि वसंतकः सागरिकानयनार्थं गतः अहमपि वक्ष्यमाणं करिष्यामीत्यपेरर्थः । अस्यां समीपवर्तिन्यां मरकतानां गारुत्मतानां या शिलाः तासां वेदिकायां अलंकृतभूम्यां 'वेदिरंगुलिमुद्रायां बुधेऽलंकृतभूतले' इति हैमः । उपविश्य आसित्वा प्रियायाः सागरिकायाः संकेतसमयं संकेतकालं प्रतिपालयामि प्रतीक्षे । सचिन्तं चिंताकारणं कथमेतस्या लाभ इति तदेवाह—**अहो इति** । अहो इति आश्चर्ये कामिजनस्य अतिशयितः कामोऽस्य कामी भूम्नि इनिप्रत्ययः । स चासौ जनश्च तस्य कोऽपि अनिर्वचनीयः । अभिनवजनं प्रति अभिनवो नूतनः यो जनः परस्त्रीरूपः तं प्रति पक्षपातः पक्षग्रहः तदभिलाष इति यावत् । कथंभूतस्य कामिजनस्य, स्वस्य या गृहिणी भार्या तस्या यः समागमः तं परिभावयति तिरस्करोति तस्य इत्यर्थः । तथाहीति तदेव प्रतिपादयति—**प्रणयविशदामित्यादिना** । प्रणयेन प्रेम्णा विशदां स्वच्छां प्रेमार्द्रामित्यर्थः । दृष्टिं अवलोकनं 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इत्यमरः । वक्त्रे अर्थान्नायकस्य न ददाति नार्पयति, वक्त्र इत्यस्याऽधिकरणत्वविवक्षया उद्देश्यत्वाभावेन च संप्रदानसंज्ञा न भवति । ननु प्रेयसि कुतः प्रेमदृष्टिं न ददाति इत्यत आह—**शंकितेति** । मामयं अनुगृह्णीयान्न वेति शंका, परपुरुषावलोकने किं मां लोका ब्रूयुरिति वा शंका संजाता अस्याः सा शंकिता । तारकादित्वादितच् प्रत्ययः । कंठाश्लेषे कंठालिंगने घनं निविडं यथा स्यात्तथा रसात् शृंगाररसाद्धेतोः हेतौ पंचमी । 'शृंगारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः । पयोधरौ धरतस्तौ धरौ पचाद्यच् । पयसः दुग्धस्य धरौ । कर्मणः शेषत्वविवक्षया गंगाधर इतिवत् साधुः । न घटयति न संयोजयति । अहो इति आश्चर्ये । प्रकृष्टो यत्नः प्रयत्नः प्रयासः तेन धृतापि गृहीतापि बहुशः बहुवारं 'बह्वल्पार्थाच्छस्कारका'दिति शस्प्रत्ययः । गच्छामीति वदति भाषते । तथापि एवमापाततः रत्यननुकूलापीत्यर्थः । संकेते संकेतस्थले तिष्ठतीति संकेतस्था सुपीति कः । कामिनी कामवती स्त्री रमयतितरां हि अतिशयेन

अये कथं चिरयति वसन्तकः । तत्किं नु खलु विदितः स्यादयं वृत्तान्तो देव्या वासवदत्तया ।

( ततः प्रविशति वासवदत्ता काञ्चनमाला च )

वासव०—[1]हंजे कंचणमाले, सच्चं ज्जेव मह वेसधारिणी भविअ साअरिआ अज्जउत्तं अहिसरिस्सदि ।

काञ्चन०—[2]कधं अण्णधा भट्टिणीए णिवेदीअदि । अहवा चित्तसालीआदुवारे उवविट्ठो वसंतओ ज्जेव दे पच्चअं उप्पादइस्सदि ।

---

१. हञ्जे काञ्चनमाले, सत्यमेव मम वेशधारिणी भूत्वा सागरिकार्यपुत्रमभिसरिष्यति ।

२. कथमन्यथा भट्टिन्यै निवेद्यते । अथवा चित्रशालिकाद्वार उपविष्टो वसन्तक एव ते प्रत्ययमुत्पादयिष्यति ।

---

रमयत्येव 'हि हेतावधारणे' इत्यमरः । रमधातोर्णिजंतात् 'तिङश्चे'ति तरप् । 'किमेत्तिङव्ययघे'ति तरवंतादाम् । अत्र रमणकारणस्य कटाक्षप्रक्षेपदृढालिंगनादेः प्रसिद्धकारणस्याऽभावेऽपि अतिशयरमणरूपकार्यवर्णनात् विभावनालंकारः । नवसंगमत्वेन च विरोधपरिहारः । 'विभावना विनापि स्यात्कारणं कार्यजन्म चेत्' इति लक्षणात् । हरिणीवृत्तं । एतल्लक्षणं 'नसमरसला गः षड्वेदैर्हयैर्हरिणी मता' इति ॥ ९ ॥ कथं प्रश्ने चिरयतीति 'तत्करोतीति' प्रातिपदिकाण्णिच् । तत् वसंतकस्य चिरागमनाद्धेतोः अयं वृत्तांतः वासवदत्तावेषेण सागरिकाया वत्सराजकृते संकेतस्थानागमनरूपः वासवदत्तया विदितः अवगतः । किंनु इति वितर्के । खल्विति वाक्यालंकारे । अत्र 'राजा अहो किमपि कामिजनस्ये'त्यारभ्य 'तत्किं नु खलु विदितः स्यादयं वृत्तांतो देव्या वासवदत्तया' इत्यनेन रत्नावलीसमागमप्राप्त्याशानुगुण्येनैव देवीशंकायाश्च वितर्काद्रूपाख्यं गर्भसंधेरंगं । तदुक्तं 'रूपं वितर्कवद्वाक्यं' इति । **वासवदत्ता**—मम वासवदत्तायाः, वेशं धरतीति 'सुप्यजाता'विति णिनिः उपपदसमासः । नन्वत्र ममेत्येतत्सापेक्षत्वात् कथं वेशधारिणीति उपपदसमासः । 'सापेक्षमसमर्थवत्' इति सिद्धांतात् इति चेच्छृणु । देवदत्तस्य गुरुकुलमितिवत् वेश इत्यस्य ममेत्येतं प्रति नित्यसापेक्षत्वात् । वेशो नाम अनुकरणं तद्धि अनुकार्यसापेक्षमिति स्पष्टमेव । तदुक्तं हरिणा 'संबंधिशब्दः सापेक्षो नित्यं सर्वैः समस्यते । वाक्यवत्सा व्यपेक्षा हि समासेऽपि न हीयते' इति । अभिसरिष्यति कांतार्थित्वेन संकेतस्थानं प्राप्स्यति । तथा चामरसिंहः 'कांतार्थिनी तु या याति संकेतं साभिसारिका' इति । **कांचन०**—कथं प्रश्ने । अन्यथा विपरीतं मिथ्येत्यर्थः । निवेद्यते कथ्यते । अथवेति पक्षांतरे । चित्रशालिकायाः चित्रशालायाः द्वारे उपविष्टः आसितः । ते तव प्रत्ययं विश्वासं ज्ञानं वा उत्पादयिष्यति । चित्रशालिकाद्वारे प्रतीक्षमाणो वसंतकश्चेत्स्थितः स्यात्

**वासव०**—तदो तहिं एव्व गच्छम्ह।

**काञ्चन०**—एदु भट्टिणी।

(इति परिक्रामतः।)

(ततः प्रविशत्युपविष्टः कृतावगुण्ठनो वसन्तकः।)

**वसन्त०**—(कर्णौ दत्वा।) जह अअं चित्तसालिआदुवारे पदसद्दो सुणीअदि तह तक्केमि आअदा साअरिआत्ति।

**काञ्चनमाला**—भट्टिणि, इयं सा चित्तसालिआ। ता जाव वसंतअस्स सण्णं करेमि। (इति छोटिकां ददाति)।

**वसन्त०**—(सहर्षमुपसृत्य सस्मितम्।) सुसंगदे, सरिसो खु तुए किदो कंचणमालाए वेसो। अध साअरिआ कहिं दाणिं।

---

१. ततस्तत्रैव गच्छावः।

२. एतु भट्टिनी।

३. यथायं चित्रशालिकाद्वारे पदशब्दः श्रूयते तथा तर्कयाम्यागता सागरिकेति।

४. भट्टिनि, इयं सा चित्रशालिका। तद्यावद्वसन्तकस्य संज्ञां करोमि।

५. सुसङ्गते, सदृशः खलु त्वया कृतः काञ्चनमालाया वेषः। अथ सागरिका कुत्रेदानीम्।

---

तदा तव मदीयभाषणे विश्वासः स्यादित्यर्थः। **वासव०**—ततः ततो हेतोः वसंतकनिरीक्षणाद्धेतोरित्यर्थः। तत्रैव चित्रशालिकाद्वार एव। **काञ्चन०**—एतु आगच्छतु। परिक्रामतः गमनाभिनयं विधत्त इत्यर्थः। उपविष्टः कृतोपवेशनः। कृतावगुंठनः कृतं अवगुंठनं वस्त्रेण मुखाच्छादनं येन एतादृशः। **वसंत०**—कर्णौ दत्वेति आकर्णने कर्णौ सावधानौ कृत्वेत्यर्थः। किंचिदाकर्णनाभिनयं विधायेत्यर्थः। यथा यतः अयं प्रत्यक्षमनुभूयमानः पदशब्दः पदयोश्चरणयोः शब्दः 'पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु' इति कोशः। श्रूयते आकर्ण्यते कर्मणि लट्। मयेति कर्ता बोध्यः। तथा ततो हेतोः तर्कयामि अनुमिनोमि तर्कक्रियायां सागरिका आगता इति विशिष्टं कर्म। **काञ्चन०**—इयं पुरोवर्तिनी सा दिदृक्षिता चित्रशालिका वर्तते इति शेषः। तत् चित्रशालिकाप्राप्तेर्हेतोः संज्ञां हस्तादिनाऽर्थस्य सूचनं 'संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना' इत्यमरः। छोटिकां ('चुटकी' इति भाषायां) अत्र कांचनमालाभाषणेन वासवदत्ताकांचनमालभ्यां सागरिकासुसंगतावेषाभ्यां कपटेन राजविदूषकयोरभिसंधीयमानत्वात् अधिवलं नामांगं गर्भसंधेः। तदुक्तं 'कपटेनाभिसंधानं ब्रुवतेऽधिवलं बुधाः' इति। **वसं०**—सहर्षमिति हर्षकारणं यथासंकेतमागतेति। उपसृत्य समीपं गत्वा सस्मितमिति यथावद्वेशकरणं स्मयकारणं। कांचनमालायाः सदृशः तुल्यः 'वाच्यलिंगाः समस्तुल्यः' इत्यमरः। वेषः आकल्पः खल्विति निश्चये।

**काञ्चनमाला**—( अङ्गुल्या दर्शयन्ती । ) [1]णं एसा ।

**वसन्त०**—( दृष्ट्वा सविस्मयम् ) [2]एसा फुडं ज्जेव वासवदत्ता ।

**वासवदत्ता**—( साशङ्कमात्मगतम् । ) [3]कहं पच्चभिण्णादम्हि एदेण । ता गमिस्सं । ( इति गन्तुमिच्छति । )

**वसन्त०**—[4]भोदि साअरिए, इदो आअच्छ ।

( वासवदत्ता विहस्य काञ्चनमालामवलोकयति । )

**काञ्चनमाला**—( अपवार्याङ्गुल्या विदूषकं तर्जयन्ती । ) ह[5]दास, सुमरिस्ससि एदं वअणं ।

**वसन्त०**—[6]तुवरदु तुवरदु साअरिआ । एसो खु पुव्वदिसादो उग्गच्छदि भअवं मिअलञ्छणो ।

---

१. नन्वेषा ।

२. एषा स्फुटमेव वासवदत्ता ।

३. कथं प्रत्यभिज्ञाताऽस्म्यनेन । तद्गमिष्यामि ।

४. भवति सागरिके, इत आगच्छ ।

५. हताश, स्मरिष्यसीदं वचनम् ।

६. त्वरतां त्वरतां सागरिका । एष खलु पूर्वदिशात उद्गच्छति भगवान्मृगलाञ्छनः ।

---

अथेति प्रश्ने । इदानीं सांप्रतं सागरिका कुत्र वर्तते इति शेषः । **काञ्चन०**—अंगुल्या दर्शयंती बोधयंती इदमभिनयस्वरूपं, आहेति शेषः । किमाह तद्दर्शयति—**नन्वेषेति** । नन्विति आमंत्रणे । **वसंत०**—दृष्ट्वा वासवदत्तामितिशेषः । सविस्मयमिति विस्मयकारणं तु यथावद्वासवदत्ताऽनुकृतिस्तदेवाह—**एषेत्यादिना** । एषा पुरोवर्तिनी स्फुटमेव स्पष्टमेव यथावद्वासवदत्तानुकरणेनेयं सागरिका वासवदत्तेति स्फुटं भासते इति विदूषकाभिप्रायः । **वासवद०**—साशंकमिति । आशंकाकारणं अनेन अहं प्रत्यभिज्ञातेति तदेवाह—**कथमित्यादिना** । कथमाशंकायां प्रत्यभिज्ञातास्मि लक्षितास्मि अनेन विदूषकेण । **वसंत०**—इयं वासवदत्तावेशधारिणी सागरिकैव इत्यभिप्रेत्य तां तथाऽऽह्वयति—**भवतीत्यादिना** । भवतीति संबोधनार्थे, इत अनेन मार्गेण आगच्छ मा प्रतियाहीत्यर्थः । विहस्येति वासवदत्तावेशधारिणी सागरिकेयमित्येव मामभिजानातीति विहासः । कांचनमालामवलोकयतीति तदवलोकनकारणं तु त्वदुक्तं सत्यमिति बोधनार्थं । **काञ्चन०**—तर्जयंती भर्त्सयंती । हताशेति हता आशा यस्य । मृतस्य हि आशा सर्वा हता भवति मृतेति फलितं । लौकिकोक्त्या गालिप्रदानमेतत् । इदं वचनं वासवदत्तायाः सागरिकाभिप्रायेणाऽऽह्वानवचनं स्मरिष्यसि मा विस्मार्षीरित्यर्थः । **वसं०**—त्वरता

**वासवदत्ता**—( ससंभ्रममपवार्य ) भअवं मिअलंछण, णमो दे । मुहुत्तअं दाव ओवारिदसरीरो होहि । जेण पेक्खामि से भावाणुबंधं ।

( सर्वे परिक्रामन्ति । )

**राजा**—( सोत्कण्ठमात्मगतम् । ) उपस्थितप्रियासमागमस्यापि किमिदमत्यर्थमुत्ताम्यति मे मनः । अथवा ।

तीव्रः स्मरसंतापो न तथादौ बाधते यथाऽऽसन्ने ।
तपति प्रावृषि नितरामभ्यर्णजलागमो दिवसः ॥ १० ॥

**वसन्त०**—( आकर्ण्य । ) भोदि साअरिए, एसो खु पिअवअस्सो तुमं जेव्व उद्दिसिअ उक्कंठाणिब्भरं मंतेदि । ता चिट्ठ तुमं । णिवेदेमि से तुहागमणं ।

---

१. भगवन्मृगलाञ्छन, नमस्ते । मुहूर्तं तावदपवारितशरीरो भव । येन प्रेक्षिष्येऽस्य भावानुबन्धनम् ।

२. भवति सागरिके, एष खलु प्रियवयस्यस्त्वामेवोद्दिश्योत्कण्ठानिर्भरं मन्त्रयते । तत्तिष्ठ त्वम् । निवेदयाम्यस्मै तवागमनम् ।

---

त्वरतामिति आगमनार्थमिति शेषः । कुत इत्याकांक्षायामाह—**एष खल्वित्यादिना।** मृगः लांच्छनं चिह्नं यस्य एतादृशश्चंद्रः । पूर्वदिशातः पंचम्यंतात्तसिः । पूर्वदिशायाः सकाशादित्यर्थः । उद्गच्छति उदयं प्राप्नोति । चन्द्रोदये हि विरहिणां अतीव संतापो जायते । अतः प्रियवयस्यस्य संतापशांत्यर्थं शीघ्रमागच्छेत्यर्थः । सर्वे परिक्रामंति । किंचिद्भ्रमणं कुर्वंति । **राजा**—सोत्कंठं सोत्कलिकं । इष्टवस्तुप्राप्तिसमीपकाले अतीवोत्कंठा जायते इति सर्वजनीनमेतत् । तदेव द्रढयति शंकाद्वारेण । उपस्थितः समीपं प्राप्तः प्रियायाः सागरिकायाः समागमः संगतिर्यस्य । समागमे दूरीभूते हि ताम्यतु मनः उपस्थितप्रियासमागमस्यापि ताम्यति इति तु आश्चर्यमित्यर्थः । एतादृशस्य मे इदं मनः अत्यर्थं भृशं किं कुतः उत्ताम्यति ग्लायते इत्यर्थः । **अथवेति** । यन्मनस्ताम्यति तद्युक्तमेवेत्यर्थः । तदेवाह—**तीव्र इत्यादिना** । तीव्रः अतिशयितः स्मरस्य मदनस्य संतापो दाहः । आसन्ने समीपे अर्थादिष्टवस्तुनि यथा येन प्रकारेण बाधते पीडयति तथा तेन प्रकारेण आदौ इष्टवस्तुनो दूरस्थत्वे न बाधते । एतदेव दृष्टांतेन द्रढयति । प्रावृषि वर्षासु 'स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः' इत्यमरः । अभ्यर्णः समीपवर्ती जलागमः जलप्राप्तिः वर्षणमित्यर्थः, तद्यस्मिन् एतादृशो दिवसः नितरां अत्यंतं तपति संतापयति । दृष्टांतालंकारः एतल्लक्षणं 'चेद्विंबप्रतिविंबत्वं दृष्टांतस्तदलंकृतिः' इति । आर्यावृत्तं ॥ १० ॥ **वसंत०**—आकर्ण्य राजभाषणमित्यर्थः । त्वामेव सागरिकामेव उद्दिश्य हेतुं कृत्वा उत्कंठा निर्भरा यस्मिन् मंत्रणक्रियाया विशेषणं । अत्र निर्भरमित्यस्य राजदंतादित्वात्परनि-

(वासवदत्ता शिरःसंज्ञां ददाति ।)

**वसन्त०**—(राजानमुपसृत्य ।) [1]भो वअस्स, दिट्ठिआ वड्ढसे एसा क्खु मए आणीदा साअरिआ ।

**राजा**—(सहर्षं सहसोत्थाय ।) वयस्य, क्वासौ क्वासौ ।

**वसन्त०**—(सभ्रूभङ्गम् ।) [2]णं एसा ।

**राजा**—(उपसृत्य ।) प्रिये सागरिके,

शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भागर्भनिभं तवोरुयुगलं बाहू मृणालोपमौ ।

---

१. भो वयस्य, दिष्ट्या वर्धसे । एषा खलु मयाऽऽनीता सागरिका ।

२. नन्वेषा ।

---

पातः । अथवा उत्कंठाया निर्भरो यस्मिन् इति व्यधिकरणो बहुव्रीहिः । निरंतरो भरः अतिशयो निर्भरः 'भरोतिशयभारयोः' इति मेदिनी । मंत्रयते गुप्तं भाषते । तत् राज्ञः उत्कंठितत्वात् तव सागरिकायाः आगमनं निवेदयामीत्यन्वयः । अत्र राजा (सोत्कंठमात्मगतं) अये! उपस्थितेत्यारभ्य तन्निवेदयामि तवागमनमित्यंतेन वत्सराजस्य सागरिकासमागममभिलषत एव श्रांतसागरिकाप्राप्तिः अतः क्रमाख्यं गर्भसंधेरंगं 'क्रमः संचिंत्यमानाप्तिः' इत्युक्तेः । शिरःसंज्ञामिति शिरसा मस्तकेन संज्ञा अर्थसूचनं ददाति करोति । मदागमनं राज्ञे निवेदयेति मस्तकचालनेन सूचयतीत्यर्थः । **वसंत०**—राजानमुपसृत्य राजसमीपं गत्वा । वर्धसे वृद्धिं प्राप्नोषि, इति दिष्ट्या आनंदजनकमित्यर्थः । का सा वृद्धिः इति चेत्सागरिकाप्राप्तिरेवेत्याह—**एषा खल्वित्यादिना** । एषा सागरिका मयाऽऽनीता इत्यन्वयः । **राजा**—सहर्षमिति अभीष्टागमनेन हर्षः । सहसा अकस्मात् 'अतर्किते तु सहसा' इत्यमरः । अकस्मादिष्टागमनश्रवणात् सहसोत्थानं तदेवाह—**वयस्येत्यादिना** । क्वासौ क्वासौ इति नेदं द्वित्वं पदाभावात् किंतु संभ्रमेण यथेष्टं अनेकधा प्रयोगः । **वसंत०**—सभ्रूभंगमिति भ्रूभंगः भ्रूतरंगः । अत्र भ्रूभंगपदेन सागरिकासूचनोपयोगि भ्रूभंगोन्नयनं लक्ष्यते । तदेवाह—**नन्वेषेति । राजा**—उपसृत्य समीपं गत्वा । तव मुखं शीतांशुः शीताः शीतला अंशवः किरणा यस्य सः चंद्र इत्यर्थः । आह्लादकत्वादिना मुखे चंद्रत्वमारोप्यते । तथा तव दृशौ नेत्रे उत्पले कुवलये 'स्यादुत्पलं कुवलयं' इत्यमरः । करौ हस्तौ पद्मानुकारौ पद्मे कमले अनुकुर्वाते इति 'कर्मण्यण्' । सर्वत्र यथायोग्यं अस्तिक्रियायाः संबंधः तवेत्यस्य च । तव ऊर्वोः सक्थ्नोः 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । युगलं युग्मं रंभायाः कदल्याः यो गर्भः अंतर्भागः तेन निभं तुल्यं 'निभसंकाशनीकाशप्रतीकाशोपमादयः' इत्यमरः । रंभागर्भवत् मृदु शीतलं चेत्यर्थः । तथा बाहू भुजौ मृणालोपमौ मृणालं बिसं उपमा ययोस्तौ । मृणालवत्

इत्याह्लादकराखिलाङ्गि रभसान्निःशङ्कमालिङ्ग्य मा-
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥ ११ ॥

**वासवदत्ता**—( अपवार्य । ) [1]कंचणमाले, एवं सअं मंतेदि अज्ज-उत्तो । पुणो वि मं कहं आलविस्सदित्ति अहो अच्चरिअं ।

**काञ्चनमाला**—( अपवार्य । ) [2]भट्टिणि, एव्वं णेदं । किं उण अवरं साहसिआणं पुरिसाणं ण संभावीअदि ।

**वसन्त०**—[3]भोदि साअरिए, वीसद्धा भविअ पिअवअस्सं आला-

१. काञ्चनमाले, एवं स्वयं मन्त्रयत आर्यपुत्रः । पुनरपि मां कथमालापयिष्यतीत्यहो आश्चर्यम् ।

२. भट्टिनि, एवमिदम् । किं पुनरपरं साहसिकानां पुरुषाणां न संभाव्यते ।

३. भवति सागरिके, विश्रब्धा भूत्वा प्रियवयस्यमालापय । अद्यापि ताव-

सुस्निग्धतनू इत्यर्थः । इति एवं प्रकारेण आह्लादं सुखविशेषं कुर्वंति तच्छीलानि आह्लादकराणि 'कृञो हेतुताच्छील्ये'त्यादिना ताच्छील्ये टप्रत्ययः । एतादृशानि अखिलानि सर्वाणि अंगानि गात्राणि यस्याः सा तत्संबोधनं । आह्लादकराखिलांगि एतादृशे विषये ङीषः साधुत्वं पूर्वमुपपादितं । रभसात् वेगात् निर्गता शंका यस्मात्तन्निःशंकं । निःसंदेहमित्यर्थः । मां वत्सराजं आलिंग्य आश्लिष्य त्वं सागरिका अनंगतापविधुराणि नास्ति अंगं यस्य स अनंगः शंकरेण दग्धत्वात् । एतद्वर्णनं प्रथमांके कृतं, तस्य यस्तापः दुःखं तेन विधुराणि विकलानि 'विधुरं तु प्रविश्लेषे विकले' इति हेमचंद्रः । अंगानि अवयवान् निर्वापय सुखय । निपूर्वकाद्वातेर्णिजंताल्लोट् । एह्येहि संभ्रमे द्विरुक्तिः । अत्र रूपकोपमे अलंकारौ । शार्दूलविक्रीडितं वृत्तं । अस्मिन्पद्ये मध्यमकैशिकीवृत्तिः, शृंगाररसः, पांचाली रीतिः, प्रसादगुणः ॥ ११ ॥ 'भावज्ञानमथापरे' इति मतभेदेन अत्र 'राजा—( उपसृत्य ) प्रिये सागरिके शीतांशुर्मुख'मित्यारभ्य 'इह तदप्यस्त्येव बिंबाधरे' इत्यन्तेन वासवदत्तया वत्सराजभावस्य ज्ञातत्वात्प्रकारांतरेण क्रमाख्यं गर्भसंधेरंगम् । **वासव०**—आर्यपुत्रः वत्सराजः एवं शीतांशुर्मुखमित्यादिप्रकारेण मंत्रयते चाटुकरोति । पुनरपि मां कथमालापयिष्यति आङ् पूर्वकाल्लपधातोर्णिजंतात्प्रेषणात्यागे लृटो रूपं 'निवृत्तप्रेषणाद्धातोः शुद्धेन तुल्योऽर्थः' इति न्यायेन आलपिष्यतीत्यनेन समानार्थमिदं । अहो आश्चर्यं महदाश्चर्यमित्यर्थः । इदानीमेवं वदति मम प्रत्यभिज्ञानोत्तरं तु मां कथं वदेत् तत्त्वमेव ज्ञास्यसीत्यर्थः । **कांचन०**—इदं त्वदुक्तं एवं यथा भणसि तथेत्यर्थः । त्वयोक्तं सत्यमिति यावत् । साहसिकानां सहसा वर्तंते इति साहसिकाः 'ओजः सहोम्भसा वर्तते' इति ठक् । तेषां पुरुषाणां अपरं द्वितीयं किं न संभाव्यते । साहसिकैः कर्तुमनुचितमपि क्रियेत इति संभाव्यते इति तात्पर्यं । **विदूष०**—विश्रब्धा विश्वासवती भूत्वा किंचिल्लज्जां विहायेत्यर्थः ।

वेहिं । अज्जवि दाव णिच्चरुट्टाए देवीए वासवदत्ताए दुट्ठवअणेहिं कडुइदा कण्णा । सुहावेदु मउमहुरवअणोवण्णासो ।

**वासवदत्ता**—( अपवार्य सरोषस्मितम् । ) [1]हंजे कंचणमाले, अहं ईदिसी कडुअणअणा । अज्ज वसंतओ उण पिअंवदो ।

**काञ्चनमाला**—( अपवार्याङ्गुल्या तर्जयन्ती । ) [2]हदास, सुमरिस्ससि एदं वअणं ।

**वसन्त०**—( विलोक्य । ) [3]भो वअस्स, पेक्ख पेक्ख । एसो खु कुविदकामिणीकवोलसण्णिहो पुव्वदिसं पआसअंतो अदिदो भअवं मिअलंछणो ।

---

न्नित्यरुष्टाया देव्या वासवदत्ताया दुष्टवचनैः कटुकिताः कर्णाः । सुखयतु मृदु-मधुरवचनोपन्यासः ।

१. हञ्जे काञ्चनमाले, अहमीदृशी कटुकवचना । अद्य वसन्तकः पुनः प्रियंवदः ।

२. हताश, स्मरिष्यसीदं वचनम् ।

३. भो वयस्य, प्रेक्षस्व प्रेक्षस्व । एष खलु कुपितकामिनीकपोलसंनिभः पूर्वदिशं प्रकाशयन्नुदितो भगवान्मृगलाञ्छनः ।

---

श्रंभु विश्वासे क्तः प्रत्ययः । उदित्वात् क्त्वायां वेट्त्वात् 'यस्य विभाषे'ति नेट् । प्रियवयस्यं वत्सराजं आलपय आलपेत्यर्थः । पूर्ववत् निवृत्तप्रेषणाल्लपेर्णिच् । अद्यापि एतावत्कालपर्यंतं । तावदिति वाक्यालंकारे । नित्यं रुष्टा नित्यरुष्टा तस्याः सुप्सुपेति समासः । अतिकोपनाया इत्यर्थः । दुष्टवचनैः कर्णकटुभाषणैः कटुकिताः कट्वेव कटुकं तत्संजातं येषां ते कटुकिताः तारकादित्वादितच् । दूषिता इत्यर्थः । वर्तंते इति शेषः । अत्र कर्णा इति बहुवचनं सपरिवारस्य राज्ञः कर्णबहुत्वाभिप्रायेण । मृदु च तत् मधुरं कर्णप्रियं यद्वचनं तस्योपन्यासः उच्चारणमित्यर्थः, तवेति शेषः सः सुखयतु राजानमिति शेषः । **वासव०**—सरोषमिति रोषकारणं स्पष्टमेव स्मितमपि रोषसंबंध्येव । अहं वासवदत्ता ईदृशी वसंतकोक्तप्रकारिका कटुकवचना कठोरभाषणा पुनःशब्दस्त्वर्थे वसंतकस्तु इत्यर्थः । प्रियंवदः 'प्रियवशे वदः खच्' इति खच् । प्रियशब्दस्य मुमागमः । **कांचन०**—अंगुल्या तर्जयंती भर्त्सयंती हताशेत्यादि प्राग्व्याख्यातं । **वसं०**—विलोक्येति चंद्रमसमिति कर्म अग्रिमभाषणाल्लभ्यते । तदेवाह–**प्रेक्षस्वेत्यादिना ।** प्रेक्षस्वेत्यादिसंभ्रमादैच्छिकं द्वित्वं । एषः पुरो दृश्यमानः । खल्विति वाक्यालंकारे । कुपिता प्रणयक्रुद्धा या कामिनी स्त्री तस्याः कपोलो गल्लः तत्सन्निभः तत्तुल्यः । चंद्रोदये चंद्रबिंबस्य किंचिदारक्तत्वात् कुपितकामिनीकपोलसन्निभत्वं । पूर्वा चासौ दिक् च

**राजा**—( निरूप्य सस्पृहम् । ) प्रिये, पश्य पश्य ।

आरुह्य शैलशिखरं त्वद्वदनापहृतकान्तिसर्वस्वः ।
प्रतिकर्तुमिवोर्ध्वकरः स्थितः पुरस्तान्निशानाथः ॥ १२ ॥

ननु प्रिये, किं न दर्शितमनेनोद्गच्छता जडत्वम् । कुतः ।

किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते
दर्पः स्यादमृतेन चेदिह तवाप्यस्त्येव बिम्बाधरे ॥ १३ ॥

---

तां 'स्त्रियाः पुंवत्' इति 'सर्वनाम्नो वृत्तिमात्रे' इति वा पुंवद्भावः । प्रकाशयन् भासयन् भगवान् विरहिकासुकावश्यपीडकत्वरूपैश्वर्यवत्त्वाद्भगवत्त्वं चंद्रमसः । मृगलांच्छनः मृगो लांच्छनं चिह्नं यस्य । **राजा**—निरूप्य दृष्ट्वा सागरिकामिति शेषः । सस्पृहं सतर्षं प्रिये, पश्य पश्य इति आदरे द्विरुक्तिः । किं पश्येत्याकांक्षायां आरुह्येत्यादि संपूर्णं वाक्यं कर्म । तव वदनं मुखं तेनापहृतं बलात्कारेण गृहीतं कांतिरूपं सर्वं स्वं धनं यस्य एतादृशः निशायाः रात्र्याः नाथः अधिपतिः चंद्रः 'ओषधीशो निशापतिः' इत्युक्तत्वात् । शैलस्य उदयाचलस्य शिखरं सानु आरुह्य प्राप्येत्यर्थः । प्रतिकर्तुमिव त्वन्मुखरूपशत्रुप्रतीकारं कर्तुमिवेत्यर्थः । ऊर्ध्वकरः ऊर्ध्वाः कराः किरणा यस्य पुरस्तात् पूर्वस्यां दिशि स्थितः वर्तते इत्यर्थः । यथा कस्य चित् केन चित् सर्वस्वापहारे कृते तत्प्रतिकारेच्छया उच्चस्थलमारुह्य ऊर्ध्वकरं कृत्वा शत्रुमाह्वयन् पुरस्थितो भवति तद्वदित्यर्थः । अत्र समासोक्त्युत्प्रेक्षारूपकालंकाराः । आर्यावृत्तं ॥ १२ ॥ नन्विति आमंत्रणे । प्रिये सागरिके । उद्गच्छता उदयता । अनेन पुरोवर्तिना चंद्रेण जडत्वं डलयोरभेदात् जलरूपत्वं चंद्रस्य जलरूपत्वं च **हरिवंशे प्रथमपर्वणि** पंचविंशतितमे । प्रजावृद्ध्यर्थं अत्रिः महत्तपश्चचारेत्युपक्रम्य 'तत्रोर्ध्वरेतसस्तस्य स्थितस्यानिमिषस्य ह । सोमत्वं तनुरापेदे महासत्त्वस्य भारत । ऊर्ध्वमाचक्रमे तस्य सोमत्वं भावितात्मनः । नेत्राभ्यां वारि सुस्राव दशधा द्योतयद्दिशः । तं गर्भं विधिना हृष्टा दश देव्यो दधुस्तदा । समेत्य धारयामासुर्न च ताः समशक्नुवन् । स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः । पपात भासयँल्लोकान् शीतांशुः सर्वभावनः' इत्यादि । **वराहमिहिराचार्योऽपि** 'सलिलमये शशिनि रवेर्दीधितयो मूर्छितास्तमो नैशं । क्षपयंति' इति । अथ च जडत्वं मंदत्वं न दर्शितं किं इति काकुः । दर्शितमेवेत्यर्थः । कुतः कस्माज्जडत्वमित्यर्थः । स्वकार्यभारवाहके अपरस्मिन् विद्यमाने तादृशकार्यार्थं प्रयत्नकरणं जडत्वमित्यभिप्रेत्याह—**किं पद्मस्येत्यादिना** । चंद्रो हि पद्मस्य सूर्यविकासिकमलस्य रुचिं कांतिं हंति नाशयति । तव वक्त्रेन्दुरपि पद्मस्य रुचिं न हंति किं हंत्येवेत्यर्थः । प्रसिद्धचंद्रः नयनानंदं विधत्ते । तव वक्त्रेन्दुरपि नयनयोः नेत्रयोः आनंदं आह्लादं न विधत्ते किं न करोति किं । अपि तु विधत्त एवेत्यर्थः । प्रसिद्धचंद्रः

**वासवदत्ता**—(सरोषमवगुण्ठनपटमपनीय।) अज्जउत्त, सच्चं एव्व अहं साअरिआ। तुमं उण साअरिआ क्खित्तहिअओ सव्वं एव्व साअरिआमअं पेक्खसि।

**राजा**—(दृष्ट्वा सवैलक्ष्यम्। अपवार्य।) हा धिक् कष्टम्। कथं देवी वासवदत्ता। वयस्य, किमेतत्।

---

१. आर्यपुत्र, सत्यमेवाहं सागरिका। त्वं पुनः सागरिकाऽऽक्षिप्तहृदयः सर्वमेव सागरिकामयं प्रेक्षसे।

---

आलोकः प्रकाशः तन्मात्रेण झपकेतनस्य झषः मीनः केतनं ध्वजो यस्य तस्य समुद्रस्य वृद्धिं जलवृद्धिं कुरुते। चंद्रोदये समुद्रजलस्य वृद्धिर्भवति इति 'प्रभावस्तास्तु तं दृष्ट्वा ववृधे कामसागरः। चंद्रस्येवोदये प्राप्ते पर्वण्यां सरितां पतिः' इत्यादिना हरिवंशादिषु स्पष्टं। वक्त्रेंदुरपि आलोकः अवलोकनं स एव आलोकमात्रं तेन केवलालोकनेनापीत्यर्थः। झपकेतनस्य मदनस्य 'प्रद्युम्नो मीनकेतनः' इत्यमरः। वृद्धिं वर्धनं न करोति किं अपि तु करोत्येव। एवं तव वक्त्रमेव इंदुः चंद्रः तस्मिन् सति विद्यमानेऽपि निजकार्यधूर्वहेऽपीत्यर्थः। यत् यस्मात्कारणात् अपरः त्वद्वक्त्रेंद्वपेक्षया द्वितीयः शीतांशुः चंद्रः उज्जृंभते विकसति उदयत इत्यर्थः। स व्यर्थ इति तात्पर्यं। ननु मदीयं सर्वं कार्यं वक्त्रेंदुः करिष्यति चेत् नाहमुदेष्यामि तत्तु न संभवति मयि अमृतस्य विद्यमानत्वात् वक्त्रेंदौ तदभावात् अवश्यं मयोदेतव्यमित्यत आह—अमृतेन स्वस्मिन् स्थितया सुधया दर्पः गर्वः स्याचेत् इह वक्त्रेंदौ तदपि अमृतमपि बिंब्या फलं बिंबं "फले लुगि"ति लुक्। तदिव अधरः अधरोष्ठः तस्मिन् अस्त्येव वर्तत एव। अत्र अपरः शीतांशुरित्यनेन वक्त्रेंदोः प्रसिद्धचंद्रात् भेदमाविष्कृत्य तस्य च प्रसिद्धचंद्रकार्यकारित्वमात्रप्रतिपादनेन उत्कर्षापकर्षयोरप्रदर्शनात् अनुभयताद्रूप्यरूपकालंकारः। तदुक्तं 'विषय्यभेदताद्रूप्यरंजनं विषयस्य यत्। रूपकं तत्त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः' इति। शार्दूलविक्रीडितं॥ १३॥ **वासव०**—सरोषं रोषकारणं तु निजवंचनमिति स्पष्टमेव अवगुंठनपटं मुखाच्छादनपटं अपनीय दूरीकृत्य अहं वासवदत्ता सागरिकेति सत्यमेव। सोल्लुंठनोक्तिरियं। एवं विपरीतसोल्लुंठनोक्त्या अहं सागरिका नास्मीति अर्थो व्यंग्यः, तर्हि स्वस्याः सागरिकात्वाभावे कथं राजा स्वां सागरिकेत्याह्वयति तत्राह—**त्वं पुनरित्यादिना**। पुनरिति त्वर्थे सागरिकयाऽऽक्षिप्तं आकृष्टं हृदयं अंतःकरणं यस्य सः त्वं तु इत्यर्थः। सर्वमेव सागरिकामयं सागरिकारूपं प्रेक्षसे पश्यसि। यस्य ह्यंतःकरणं द्वेषबुद्ध्या प्रेमबुद्ध्या वा यत्र संलग्नं भवति तस्य सर्वत्र तन्मनस्कता भवतीति सार्वजनीनमेतत्। **राजा**—दृष्ट्वा वासवदत्तामिति शेषः। सवैलक्ष्यं विलक्षस्य विस्मितस्य भावः 'विलक्षो विस्मयान्विते' इत्यमरः। विस्मयकारणं तु कथमस्मत्संकेतोऽनया ज्ञातः कथं वाऽत्रागतेत्यादि। हा धिक् खेदद्योतके इमे शब्दरूपे। कथमिति वितर्के। **वयस्य किमेतदिति**।

वसन्त०—(सविषादम् ।) भो[1] वअस्स, किं अवरं । अम्हाणं जीविदसंसओ जादो एसो ।

राजा—(उपविश्याञ्जलिं बद्ध्वा) प्रिये वासवदत्ते, प्रसीद प्रसीद ।

वासवदत्ता—(तदभिमुखमश्रूणि निपातयन्ती ।) अज्जउत्त[2], मा एव्वं भण । अदिक्कंदाइं दाणिं एदाइं अक्खराइं ।

वसन्त०—(आत्मगतम् ।) [3]किं दाणिं एत्थ विरअइस्सं । भोदु । एव्वं दाव । (प्रकाशम् ।) भोदि, महाणुभावा खु तुमं । ता क्खमीअदु दाव एक्को अवराहो पिअवअस्सस्स ।

---

१. भो वयस्य, किमपरम् । अस्माकं जीवितसंशयो जात एषः ।

२. आर्यपुत्र, मा एवं भण अतिक्रांतानीदानीमेतान्यक्षराणि ।

३. किमिदानीमत्र विरचयामि । भवतु । एवं तावत् । भवति, महानुभावा खलु त्वम् । तत्क्षम्यतां तावदेकोऽपराधः प्रियवयस्यस्य ।

---

सागरिकाऽगतेति त्वयोक्तं इयं तु वासवदत्ता इदं कथं जातं अग्रे च कथं करणीयमित्यर्थः । **वसंत०**—सविषादं विषादकारणं तु इयमतिकोपनाऽतोऽस्याहितं प्राप्तं इति तदेवाह—**भो इत्यादिना** । अपरं अन्यत् किं स्यादित्यर्थः । किमप्यन्यन्न स्यात्किंतु इदमेव स्यात्तदेवाह—**अस्माकमिति** । अस्माकमिति बहुवचनं 'अस्मदोद्वयोश्च' इत्यनेन एतत्कर्मानुकूलपुरुषाणां बहुत्वात्तदभिप्रायेण वा । जीवितस्य जीवनस्य संशयः संदेहः । मरणांतामपि शिक्षां कदाचित्कुर्यादित्यर्थः । **राजा**—अंजलिं करसंपुटं बध्वा कृत्वा प्रसीद प्रसीदेत्यनुनये लौकिकोक्त्या द्विरुच्चारणं । लोके हि अनुनये द्विस्त्रिश्चतुर्वा क्रियापदं संबोधनपदं वोच्चार्यते तद्वदिदमित्यर्थः, नेदं द्वित्वं । **वास०**—तदभिमुखं तस्य राज्ञः अभिमुखं मुखस्य संमुखं अभिमुखं 'लक्षणेनाभिप्रती' इत्यादिना समासः, इदं च क्रियाविशेषणं, अश्रूणि बाष्पाणि निपातयंती उत्सृजती, एतस्या अश्रुपातनकारणं तु राज्ञः अन्यासक्तत्वं आत्मनो वंचकत्वं च । एवं मा भण माङ्योगेऽपि लोडुत्पत्तिः पूर्वमुपपादिता । इदानीं संप्रति एतान्यक्षराणि 'प्रिये, वासवदत्ते', इति त्वदुक्तान्यक्षराणि अतिक्रांतानि गतानि । इदानीं प्रिये, इत्याद्यक्षराणामुच्चारणेऽपि मयि प्रीत्यभावात् तानि निरर्थकानीत्यर्थः । पूर्वं प्रीतिरासीत् अतस्तदा तानि सार्थकानि आसन् अतोऽतिक्रांतानीत्युक्तं । इदानीं प्रियत्वाद्यर्थविशिष्टानि प्रिये इत्यादि विशेषणानि न संति किंतु वंचनार्थमेव एवं वदसीत्यर्थः । **वसं०**—इदानीमेतस्याः क्रोधकाले इत्यर्थः । अत्र क्रोधनिवारणविषये भवतु अस्तु एवं वक्ष्यमाणं तावदादौ करिष्यामीत्यर्थः । तदेवाह—**महेति** । महान् अतिशयितः अनुभावः प्रभावो यस्याः सा 'अनुभावः प्रभावे च' इत्यमरः । महानुभावानामपराधे क्षमा सुलभा इत्यर्थः । तदेवाह—**तदित्यादिना** । तत् भवत्या महानुभावत्वाद्धेतोः प्रियवयस्यस्य एकः

**वासवदत्ता**—अज्ज वसंतअ, णं पढमसंगमे विग्घं करंतीए मए ज्जेव एदस्स अवरद्धं ।

**राजा**—एवं प्रत्यक्षदृष्टव्यलीकः किं ब्रवीमि । तथापि विज्ञापयामि ।

आताम्रतामपनयामि विवर्ण एष
लाक्षाकृतां चरणयोस्तव देवि मूर्ध्ना ॥
कोपोपरागजनितां तु मुखेन्दुबिम्बे
हर्तुं क्षमो यदि परं करुणा मयि स्यात् ॥ १४ ॥

(इति पादयोः पतति ।)

---

१. आर्य वसन्तक, ननु प्रथमसंगमे विघ्नं कुर्वन्त्या मयैवैतस्यापराद्धम् ।

---

प्रथमः अपराधः अन्यासक्तिरूपः क्षम्यतां सह्यतां । त्वयेति शेषः । **वासव०**—राज्ञा नापराद्धं किंतु मयैवापराद्धं इति सोल्लुंठनाभिप्रायेणाह—**आर्य वसंतके-त्यादिना** । नन्विति आमंत्रणे, प्रथमश्चासौ संगमश्च प्रथमः पूर्वः यः संगमः अर्थात्सागरिकायाः । विघ्नं अंतरायं 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः । कुर्वंत्या आचरंत्या 'न लोके'ति निषेधात् विघ्नमित्यत्र कर्मणि षष्ठी न । मयैव वासवदत्तयैव एतस्य राज्ञः अपराद्धं अपराधः कृत इत्यर्थः । अपपूर्वकाद्राधते'र्नपुंसके भावे क्तः' । **राजा**—एवं पूर्वोक्तप्रकारेण प्रत्यक्षं समक्षं 'प्रतिपरसमनुभ्योऽक्ष्णः' इति टच् प्रत्ययः 'लक्षणेनाभी'त्यव्ययीभावः । प्रत्यक्षं दृष्टं सुप्सुपेति समासः । व्यलीकं अप्रियं यस्य सः 'व्यलीकं व्यंगवैलक्ष्याप्रियाकार्येषु पीडने' इति हेमचंद्रः । किं ब्रवीमीति । प्रत्यक्षापराधेन मया किं वक्तव्यमित्यर्थः । तथापि अपराधिनो भाषणाऽनवसरेऽपीत्यर्थः । विज्ञापयामि प्रार्थये । हे देवि, विवर्णः विगतः वर्णः स्तुतिः यस्य 'वर्णो द्विजादौ शुक्लादौ स्तुतौ' इत्यमरः । विवर्णो नीच इत्यर्थः । 'विवर्णः पामरो नीचः' इत्यमरः । एष अपराधविशिष्ट इत्यर्थः । अहमिति शेषः । मूर्ध्ना मस्तकेन तव चरणयोः पादयोः लाक्षया जतुना कृतां उत्पादितां 'कर्तृकरणे'ति समासः । ताम्रयोः रक्तयोः भावस्ताम्रता ईषत्ताम्रता आताम्रता प्रादिसमासः । तां अपनयामि दूरीकरोमि । तु यदि परं सामान्ये नपुंसकं करुणा दया मयि स्यात् तवेति शेषः । तर्हि मुखेंदुबिंबे मुखमेव इंदुबिंबं तस्मिन् कोपोपरागजनिता कोपः क्रोधः स एव उपरागो ग्रहः 'उपरागो ग्रहः' इत्यमरः । तेन जनितां उत्पादितां । ग्रहणे हि चन्द्रबिंबस्य आताम्रता भवति तादृशीं आताम्रतामिति शेषः । हर्तुं दूरीकर्तुं क्षमः शक्तः अस्मीति शेषः । 'क्षमं शक्ते हिते त्रिषु' इत्यमरः । द्विविधा हि आताम्रता पादयोर्लाक्षाकृता मुखे कोपकृता च तत्र पादगताऽऽताम्रता मूर्धसंघर्षणेन दूरीकर्तुं मया सुशका मुखगता क्रोधजनिता तु मत्प्रयत्नसाध्या न भवति । अतस्त्वं यदि करुणां करिष्यसि तर्ह्येव तां दूरीकर्तुमहं समर्थ इत्यर्थः । त्वयि प्रसन्नायां सा गमिष्यत्येवेति तात्पर्यं । वसंततिलकं वृत्तं 'ज्ञेयं वसंततिलकं तभजा जगौ गः' इति लक्षणात् ॥ १४ ॥ पादयोः

**वासवदत्ता**—( हस्तेन वारयन्ती । ) अज्जउत्त, उट्ठेहि उट्ठेहि । णिल्लज्जो खु एसो जणो जो अज्जउत्तस्स ईदिसं हिअअं जाणिअ पुणोवि कुप्पदि । ता सुहं चिट्ठदु अज्जउत्तो । अहं गमिस्सं ।

( इति गन्तुमिच्छति । )

**काञ्चनमाला**—भट्टिणि, करेहि से पसादं । एवं चरणपडिअं महाराअं उज्झिअ गदाए देवीए पच्चादावेण होदव्वं ।

**वासवदत्ता**—अवेहि अपंडिदे, कुदो एत्थ पसादस्स पच्चादावस्स वा कारणं । ता एहि गच्छम्ह । ( इति निष्क्रान्ते । )

---

१. आर्यपुत्र, उत्तिष्ठोत्तिष्ठ । निर्लज्जः खल्वेष जनो य आर्यपुत्रस्येदृशं हृदयं ज्ञात्वा पुनरपि कुप्यति । तत्सुखं तिष्ठत्वार्यपुत्रः । अहं गमिष्ये ।

२. भट्टिनि, कुरुष्व अस्मै प्रसादम् । एवं चरणपतितं महाराजमुज्झित्वा गताया देव्याः पश्चात्तापेन भवितव्यम् ।

३. अपेहि अपण्डिते, कुतः अत्र प्रसादस्य पश्चात्तापस्य वा कारणं, तदेहि गच्छावः ।

---

पतति नमस्करोतीत्यर्थः । **वासव०**—हस्तेन वारयंती नमस्कारक्रियामिति शेषः । उत्तिष्ठोत्तिष्ठेति संभ्रमे द्विरुक्तिः । एष जनः मद्रूपो जनः निर्लज्जः निस्त्रपः । कुत इत्यपेक्षायामाह—**य इत्यादिना** । यो मद्रूपो जनः ईदृशं वंचकं हृदयं अंतःकरणं ज्ञात्वाऽवगत्य पुनरपि कुप्यति क्रुध्यति । एकवारं अंतःकरणं ज्ञात्वा तत्र विश्वास एव न कार्यः मया तु इदं कोपेन अनुकूलं भवेत् इत्यानुकूल्यार्थं यत्यते अतो निर्लज्जाऽहमित्यर्थः । तत् ममैव अपराधित्वात् निर्लज्जत्वाच्च, सुखं तिष्ठतु सुखमिति स्थानक्रियाया विशेषणं । अहं गमिष्ये गमिष्यामि । गमिष्ये इति आत्मनेपदं विचार्यं । गंतुमिच्छतीति, समानकर्तृकेषु तुमुन्' इति तुमुन् । **कांचन०**—प्रसादं अनुग्रहं 'प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसत्तिषु' इति मेदिनी । एवं पूर्वोक्तप्रकारेण । चरणपतितं इति चरणौ पतितं 'द्वितीयाश्रितातीतपतिते'त्यादिना समासः महांश्चासौ राजा च महाराजः 'राजाहःसखिभ्यष्टच्' इति समासांतष्टच् प्रत्ययः । 'आन्महदि'त्यात्वं । तं उज्झित्वा त्यक्त्वा गतायाः देव्याः इति यद्यप्यत्र गतया देव्येति पाठो वर्तते तथापि सः अनन्वितः इत्यभिप्रेत्य गताया इति पाठो लिखितः । पश्चात्तापेन अनुतापेन कर्तरि तृतीयेयं 'पश्चात्तापोऽनुतापश्चे'त्यमरः । भवितव्यमिति 'तयोरेवे'ति भावे तव्यप्रत्ययः । **वासवद०**—अपंडिते पंडा बुद्धिः संजाता अस्याः सा पंडिता न पंडिता अपंडिता 'बुद्धिः पंडा विदा चार्वी' इति त्रिकांडशेषः । तत्संबोधनं हे अपंडिते, प्रकृतविषयाऽनभिज्ञे, इत्यर्थः । अपेहि दूरीभव अपोपसर्गादिणो लोट् । अत्र मद्गमनविषये

**राजा**—देवि, प्रसीद प्रसीद । ('आताम्रतामपनयामी'ति पुनः पठति ।)

**वसन्त०**—[1]भोः, उट्ठेहि । गदा सा वासवदत्ता देवी । ता कीस एत्थ अरण्णरुदिदं करेसि ।

**राजा**—(मुखमुन्नमय्य ।) कथमकृत्वैव प्रसादं गता देवी ।

**वसन्त०**—[2]णं किदो कहं पसादो जं अज्जवि अक्खदसरीरा चिट्ठम्ह ।

**राजा**—धिङ्मूर्ख ! किमेवमुपहससि माम् । ननु त्वत्कृत एवाय-मापतितोऽस्माकमनर्थक्रमः । यतः ।

---

१. भोः, उत्तिष्ठ । गता सा वासवदत्ता देवी । तत्कथादत्रारण्यरुदितं करोषि ।

२. न कृतः कथं प्रसादो यदद्याप्यक्षतशरीरास्तिष्ठामः ।

---

प्रसादस्य अनुग्रहस्य पश्चात्तापस्य अनुतापस्य । वा विकल्पे 'वा स्याद्विकल्पोपमयोः' इति मेदिनी । किं कारणं को हेतुरित्यर्थः । तत् पश्चात्तापानुग्रहकारणयोरभावाद्धेतो-रित्यर्थः । निष्क्रांते गते, यद्यप्यत्र गमिष्ये इति वासवदत्तयैवोक्तं तथापि प्रधान-भूतायां तस्यां गतायां कांचनमालापि गतैवेत्यभिप्रेत्य निष्क्रांते इति द्विवचनमुक्तं । **राजा**—देवि, प्रसीद प्रसीदेति अनुनये लौकिकोक्त्या द्विरुच्चारणं । आताम्रता-मित्यादि पूर्वं व्याख्यातं । **वसंत०**—भोः वयस्येत्यर्थः । देवी वासवदत्ता गतेत्य-न्वयः । तत् यस्माद्वासवदत्ता गता तस्माद्धेतोरित्यर्थः । अत्र तद्रहितदेशे । अरण्यरुदि-ततुल्ये भाषणे सादृश्यात् अरण्यरुदितत्वाध्यवसायः । अरण्यरुदितं हि यथा व्यर्थं तद्वत्तद्रहिते देशे देवि, प्रसीद प्रसीदेत्यादि भाषणं व्यर्थमित्यर्थः । **राजा**—उन्न-मय्य ऊर्ध्वं कृत्वा । नमस्कारार्थं यदधो नमितं तदूर्ध्वं कृत्वेत्यर्थः । उत्पूर्वकान्नमधा-तोर्णिजंतात् क्त्वाप्रत्यये ल्यवादेशे 'ल्यपि लघुपूर्वात्' इति णेरयादेशः । कथमिति प्रश्ने प्रसादं अकृत्वैव देवी गता इत्यन्वयः । **वसंत०**—कथमिति प्रश्ने । प्रसादो न कृतः अपि तु कृत एवेत्यर्थः । तमेव प्रसादमाह—**यदिति** । यत् यस्मात् कारणात् अद्यापि एतत्कालपर्यंतमपीत्यर्थः । अक्षतशरीराः न क्षतं न नाशितं शरीरं येषां ते अक्षतशरीरा तिष्ठामः । तिष्ठाव इति पाठे, अक्षतशरीरौ इति द्विवचनं समीचीनमिति भाति । अस्माभिस्तु शरीरा इति बहुवचनाभिप्रायेण तिष्ठाम इति लिखितं । अत्र द्वयोरेव विद्यमानत्वात् द्विवचनांतः पाठः साधीयान् । एतादृशे महा-पराधेऽपि तया किमपि दंडाकरणमेव अनुग्रहं मनुमहे इति विदूषकाभिप्रायः । **राजा**—धिङ्मूर्ख, अत्र यथाधिको योगे द्वितीया न तथा प्रागभिहितं । एवं अद्याप्यक्षतशरीरास्तिष्ठामः इति भाषणप्रकारेण । नन्विति आमंत्रणे, अस्माकमयं देवीक्रोधरूपोऽनर्थस्य क्रमः परिपाटी 'परिपाटी अनुक्रमः' इत्यमरः । त्वया कृतः त्वत्कृत

समारूढा प्रीतिः प्रणयबहुमानादनुदिनं
व्यलीकं वीक्ष्येदं कृतमकृतपूर्वं खलु मया॥
प्रिया मुञ्चत्यद्य स्फुटमसहना जीवितमसौ
प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति॥ १५॥

वसन्त०—[1]भोः रुट्ठा देवी दाव ण जाणीअदि किं करिस्सदित्ति। साअरिआ उण अज्जदुक्खजीवना हुविस्सदित्ति तक्केमि।

राजा—वयस्य, अहमप्येवं चिन्तयामि। हा प्रिये सागरिके!

(ततः प्रविशति वासवदत्तावेषधारिणी सागरिका)

---

१. भोः, रुष्टा देवी तावन्न ज्ञायते किं करिष्यतीति। सागरिका पुनरद्य दुःखजीवना भविष्यतीति तर्कयामि।

---

एव 'कर्तृकरणे'ति समासः। आपतितः प्राप्तः। यतः यस्मात्कारणादित्यर्थः। **समेति।** अनुदिनं प्रतिदिनं वीप्सायामव्ययीभावः। प्रणयस्य प्रीतेः बहुमानात्सत्काराद्धेतोः प्रीतिः समारूढा वृद्धिं गतेत्यर्थः। पूर्वं कृतं कृतपूर्वं सुप्सुपेति समासः। न कृतपूर्वमकृतपूर्वं पूर्वं कदापि नानुष्ठितमित्यर्थः। मया कृतं अनुष्ठितं इदं व्यलीकं अकार्यं 'व्यलीकं व्यंगवैलक्ष्याप्रियाकार्येषु पीडने' इति हैमः। वीक्ष्य खल्विति वाक्यालंकारे असहना अमर्षणा असौ प्रिया वासवदत्ता अद्य संप्रति जीवितं जीवनं स्फुटं स्पष्टं मुंचति त्यजति त्यक्ष्यतीत्यर्थः। वर्तमानसामीप्ये भविष्यति लट्। हि यस्माद्धेतोः प्रकृष्टस्य अतिशयितस्य प्रेम्णः अनुरागस्य स्खलितं भ्रंशः 'स्खलितं छलिते भ्रंशे' इति हेमचंद्रः। अविषह्यं असोढव्यं विपूर्वात्सहतेः 'शकिसहोश्च' इति क्यप् 'परिनिविभ्य' इति षत्वं। अति प्रेम स्खलितं चेत् तदेव जीवितनाशावधिफलायाऽलं भवतीति तात्पर्यं। एतस्य सर्वस्यानर्थस्य त्वमेव कारणं, त्वयि विश्वासमास्थाय मया एवमाचरितत्वात्। काव्यलिंगमलंकारः। शिखरिणीवृत्तं॥ १५॥ **वसं०—** रुष्टा क्रुद्धा देवी किं करिष्यति किं विधास्यति। तावदिति वाक्यालंकारे। न ज्ञायते नावबुध्यते कर्मणि लट्। किं करिष्यतीति विशिष्टं कर्म। पश्य मृगो धावतीतिवत्। सागरिका पुनरिति। पुनरिति त्वर्थे सागरिका तु इत्यर्थः। दुःखेन संकटेन जीवनं यस्याः तादृशी भविष्यति। सागरिकानिमित्तापराधात् क्रुद्धेयं तामपि कदाचिद्घातयेदित्यर्थः। इति तर्कयामि अनुमिनोमि। अत्र राजा—धिङ्मूर्ख, इत्यादिराजभाषणे, विदू०—भोः इत्यादि विदूषकभाषणे च प्रकृष्टप्रेमस्खलनेन सागरिकानुरागजन्येन वासवदत्ताया मरणाभ्यूहनमनुमानं इति गर्भसंधेरंगं। तदुक्तं 'अभ्यूहो लिंगतोऽनुमा' इति। **राजा—**एवं सागरिकाजीवितसंशयप्रकारं चिंतयामि विचारयामीत्यर्थः। प्रिये सागरिके, हा इति खेदे। ततः राजभाषणानंतरं वासव-

सागरिका—(सोद्वेगम्) [1]दिट्ठिआ इमिणा विरइदो देवीवेसेण इमादो संगीदसालादो णिक्कमंती ण केणावि लक्खिदम्हि । ता दाणिं एत्थ किं करिस्सं । (इति सास्रं चिन्तयति ।)

वसन्त०—[2]भोः, किं मूढो विअ चिट्ठसि । चिन्तेसि अवराध-पडिआरं ।

राजा—वयस्य, तदेव चिन्तयामि । देवीप्रसादं मुक्त्वा नान्यमुपायं पश्यामि । तदेहि । तत्रैव गच्छावः ।

(इति परिक्रामतः ।)

सागरिका—(सास्रं विमृश्य ।) [3]वरं दाणिं सअं जेव्व अत्ताणअं उव्बंधिअ उवरदा भविस्सं । जेण ण उण जाणिदसंकेदवुत्तंतए देवीए सुसंगदा विअ परिभूदाम्हि । ता जाव अहं असोअपादवे गदुअ जधासमीहिदं करिस्सं । (इति परिक्रामति ।)

---

१. दिष्टया अनेन विरचित देवीवेषेणास्याः संगीतशालाया निष्क्रामन्ती न केनापि लक्षितास्मि । तदिदानीमत्र किं करिष्यामि ।

२. भोः, किं मूढ इव तिष्ठसि । चिन्तयापराधप्रतीकारम् ।

३. वरमिदानीं स्वयमेवात्मानमुद्बध्योपरता भविष्ये । येन न पुनर्ज्ञात-संकेतवृत्तान्तया देव्या सुसंगतेव परिभूतास्मि । तद्यावदहमशोकपादपे गत्वा यथासमीहितं करिष्ये ।

---

दत्ताया वेषं धरति तच्छीला, सुप्यजाताविति णिनिः । सागरिका—सोद्वेगमिति उद्वेगे कारणं कर्तव्याकर्तव्यविषयकज्ञानशून्यता । तदेवाह—दिष्ट्येत्यादि । विरचितः कृतः यो देव्याः वासवदत्तायाः वेषस्तेन संगीतशालायाः सकाशात् निष्क्रामंती वहिर्गच्छंती केनापि पुरुषेण न लक्षिताऽऽस्मि न ज्ञाताऽऽस्मि इति दिष्ट्या इदमानंद-कारकं । तत् अत्र स्थले प्राप्तत्वाद्धेतोः इदानीं सांप्रतं किं करिष्ये किं कर्तव्यं तन्न जानामीत्यर्थः । सास्रं साश्रु 'अस्रं शोणितेऽश्रुणि' इति हैमः । वसं०—मूढः विचार-शून्य इत्यर्थः । अपराधस्य प्रतीकारं नाशं । तदुपायमित्यर्थः । नान्योपायं पश्यामी-त्यग्रे वक्ष्यमाणत्वात् । चिंतय विचारय । राजा—तदेव देव्यपराधप्रतीकारकारणमेव देव्याः वासवदत्तायाः प्रसादं प्रसन्नतां मुक्त्वा त्यक्त्वा अन्यमुपायं अपराधप्रतीकारो-पायं न पश्यामि न जानामि । दृश्धातुर्ज्ञानसामान्ये 'पश्यार्थैश्चानालोचने' इति पाणि-निसूत्रात् । तत् देवीप्रसादनस्यैवोपायत्वाद्धेतोः तत्रैव वासवदत्ताधिष्ठितस्थले एव । अत्र राजभाषणेन देवीप्रसादायत्ता सागरिकासमागमसिद्धिः इति गर्भबीजोद्भेदा-दाक्षेपाख्यं गर्भसंधेरंगं । तदुक्तं 'गर्भबीजसमुद्भेदादाक्षेपः परिकीर्तितः' इति । सागरिका—सास्रं सबाष्पं विमृश्य विचार्य इदानीं एतस्मिन् काले स्वयमेव

वसन्त०—(आकर्ण्य।) चिट्ठ दाव चिट्ठ। णं पदसद्दो सुणीअदि। जाणामि कदावि गहिदपच्चादावा पुणोवि देवी आअदा भवे।

राजा—वयस्य, महानुभावा खलु देवी। कदाचिदेवमपि स्यात्। तत्त्वरितं निरूपय।

वसन्त०—जं भवं आणवेदि। (इति निष्क्रामति।)

---

१. तिष्ठ तावत्तिष्ठ। ननु पदशब्दः श्रूयते। जानामि कदापि गृहीतपश्चात्तापा पुनरपि देव्यागता भवेत्।

२. यद्भवानाज्ञापयति।

---

आत्मनैव आत्मानं निजशरीरं उद्बध्य बद्धं कृत्वा उपरता मृता भविष्ये भविष्यामि। अत्र आत्मनेपदं चिंत्यं। इदं वरं मनाक् प्रियं 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवे मनाक् प्रिये' इत्यमरः। येन मरणेन विदितसंकेतवृत्तांतया विदितः ज्ञातः संकेतस्य राजनिकटे वासवदत्तावेषेण गमनरूपस्य वृत्तांतो यया एतादृश्या देव्या वासवदत्तया सुसंगतेव सुसंगता सदृशं। यथा सुसंगता दासीत्वात्तया परिभूयते तथाऽहं परिभूता न भवेयमित्यर्थः। अत्र भविष्यकाल उचितो भाति न परिभूताऽस्मीति भूतकाल उचितः। अत एतद्विचारार्हं वर्तते। तत् मरणनिश्चयाद्धेतोः। यावदिति वाक्यालंकारे। अशोकपादपे अशोकवृक्षनिकटे इत्यर्थः। समीहितं अभीष्टं अनतिक्रम्य वर्तते इति यथासमीहितं पदार्थानतिवृत्तौ अव्ययीभावः। उद्बंधनेन मरणमिति यावत्। परिक्रामति अशोकवृक्षगमनाभिनयोऽत्र परिक्रमणं। **वसंत०**—आकर्ण्येति। आकर्णनाभिनयं कृत्वेत्यर्थः। स च एकं कर्णमूर्ध्वं कृत्वा तदेकाग्रमनसा स्थितिः। तिष्ठ तावत्तिष्ठेति इदं लौकिकोक्त्या तिष्ठेत्यस्य द्विरुच्चारणं। किमर्थं तिष्ठेति चेत्तत्राह—**नन्वित्यादिना**। नन्वित्यामंत्रणे पदानां पादप्रक्षेपाणां शब्दः ध्वनिः 'पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु' इत्यमरसिंहः। श्रूयते आकर्ण्यते। मयेत्यध्याहारः। अत एव कर्मणि लट् न तु कर्मकर्तरि यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते तत्रैव कर्मवत्कर्मणेति अतिदेशात्। प्रकृते च तथा कर्मणि क्रियाकृतविशेषाभावात् तङ्यकोर्दौर्लभ्यापत्तेः। कदापि कदाचिदित्यर्थः। गृहीतः स्वीकृतः पश्चात्तापोऽनुतापः यया सा। एतादृशी भूत्वेत्यर्थः। 'पश्चात्तापोऽनुतापश्च' इत्यमरः। पुनरपि भूयोपि देवी वासवदत्ता आगता भवेत्। इति जानामि मन्ये इत्यर्थः। **राजा**—महान् अनुभावः प्रभावो यस्याः सा खलु निश्चयेन देवी वासवदत्ता। वर्तते इति शेषः। अनेन गांभीर्यमुक्तं भवति। कदाचित् जातुचित्। 'कदाचित् जातु' इत्यमरः। एवमपि त्वदुक्तमपीत्यर्थः, तत् त्वदुक्तेः संभवाद्धेतोः त्वरितं शीघ्रं निरूपय पश्य। **वसंत०**—यद्भवानाज्ञापयति तत्करोमीति शेषः। निष्क्रामति

**सागरिका**—( उपसृत्य । ) तां जाव इमाए माहवीलदाए पासं विरइअ असोअपादवे अप्पाणअं उव्बंधिअ वावादेमि । ( इति लतापाशं रचयन्ती । ) हा ताद हा ताद ! हा अम्ब हा अम्ब ! एसा दाणिं अहं अणाधा असरणा विवज्जामि मंदभाइणी ।

( इति कण्ठे लतापाशमर्पयति । )

**वसन्त०**—( विलोक्य ) का उण एसा । कहं उण देवी वासवदत्ता । ( संसभ्रममुच्चैः ) भो वअस्स, परित्ताहि परित्ताहि । एसा खु देवी वासवदत्ता अप्पाणअं उव्बंधिअ वावादेति ।

**राजा**—( कण्ठात्पाशमपनयन् । ) अयि साहसकारिणि किमिदमकार्यं क्रियते ।

---

१. तद्यावदेतया माधवीलतया पाशं विरच्याशोकपादप आत्मानमुद्बध्य व्यापादयामि । हा तात हा तात ! हा अम्ब हा अम्ब ! एषेदानीमहमनाथाऽशरणा विपद्ये मन्दभागिनी ।

२. का पुनरेषा । कथं पुनर्देवी वासवदत्ता । भो वयस्य, परित्रायस्व परित्रायस्व । एषा खलु देवी वासवदत्तात्मानमुद्बध्य व्यापादयति ।

---

गच्छति । **सागरिका**—उपसृत्य अशोकपादपसमीपं गत्वेत्यर्थः । तत् मरणसंकेताद्धेतोः । यावदिति वाक्यालंकारे । एतया समीपवर्तिन्या माधवीलतया वासंत्या पाशं झटिति मरणानुकूलं ग्रंथिविशेषं 'पाशः पक्ष्यादिबंधने' इति हैमः । विरच्य अशोकपादपे अशोकवृक्षे आत्मानं उद्बध्य व्यापादयामि नाशयामि । व्यापादनक्रियाया अपि आत्मानमित्येव कर्म । लतापाशं लताग्रंथिं रचयंती कुर्वती हा इति शोकद्योतकं हा तात हा तातेत्यादि दुःखादौ लौकिकोक्त्या द्विरुच्चारणं नत्विदं द्वित्वं पदस्यैव द्वित्वविधानात् । अत्र तु हा तातेति नैकं पदमिति स्पष्टमेव । एवं हा अंबेत्यत्रापि ज्ञेयं । एषा एतादृशदुःखभागिनी अहं सागरिका अनाथा नास्ति नाथः स्वामी यस्याः सा अशरणा नास्ति शरणं रक्षिता यस्याः सा 'शरणं गृहरक्षित्रोः' इत्यमरः । मंदभागिनी मंदभाग्या । विलोक्य । अर्थात्सागरिकाम् । **वसं०**—का पुनरिति वाक्यालंकारे । एवं कथं पुनरित्यत्रापि । कथमिति प्रश्ने ससंभ्रमं संभ्रमस्त्वरा परित्रायस्व परित्रायस्व संभ्रमे द्विरुक्तिः । एषा खल्विति निश्चये वाक्यालंकारे वा । आत्मानमुद्बध्य उद्बध्य व्यापादयति नाशयति । **राजा**—कंठात् गलात् अपनयन् दूरीकुर्वन् अयीति संबोधने साहसकारिणि साहसं करोति तच्छीला ताच्छील्ये णिनिः । कर्तुं अर्हं कार्यं 'अर्हे कृत्यतृचश्चेति' अर्हार्थे ण्यत्प्रत्ययः । न कार्यं अकार्यं क्रियते आचर्यते । एतस्य अकार्यत्वं च पातित्यापादकत्वेन । तदुक्तं **निर्णयसिंधौ** तृतीयपरिच्छेदोत्तरार्धे **भविष्ये** 'स्वेच्छया मरणे विप्राः शृंगिदंष्ट्रिसरीसृपैः । अंत्यांत्यजविषोद्बंधैरात्मना

मम कण्ठगताः प्राणाः पाशे कण्ठस्थिते तव।
अतः स्वार्थप्रयत्नोऽयं त्यज्यतां साहसं प्रिये ॥ १६ ॥

सागरिका—(राजानं दृष्ट्वा) अयि, कथं एसो भट्टा। (सहर्षमात्मगतम्।) जं सच्चं एणं पेक्खिअ पुणोवि मे जीविदाहिलासो संवुत्तो। अहवा एणं पेक्खिअ कदत्था भविअ सुहं अप्पाणअं उब्बंधिअ जीविदं परिच्चइस्सं। (प्रकाशम्।) मुंचदु भट्टा। पराहीणो खु अअं जणो ण उण ईदिसं अवसरं मरिदुं पावेदि। तुमं पि देवीए मा अप्पाणं अवराहिणं करेसि। (इति पुनः कण्ठे पाशं दातुमिच्छति।)

१. अयि, कथमेष भर्ता। यत्सत्यमेनं प्रेक्ष्य पुनरपि मे जीविताभिलाषः संवृत्तः। अथवा एनं प्रेक्ष्य कृतार्था भूत्वा सुखमात्मानमुद्बध्य जीवितं परित्यजे। मुञ्चतु भर्ता। पराधीनः खल्वयं जनः। न पुनरीदृशमवसरं मर्तुं प्राप्यते। त्वमपि देव्या मात्मानमपराधिनं कुरुष्व।

चैव ताडनैः’ इत्याद्युक्त्वा ‘न तेषां स्नानसंस्कारौ न श्राद्धं न सपिंडनं इति। तथा तत्रैव अग्रे ‘ब्राह्मेऽपी’त्युपक्रम्य ‘शृंगिदंष्ट्री’त्यादिना कांश्चित्पतितानुक्त्वा ‘शस्त्राग्निगरदाश्चैव पाखंडाः क्रूरबुद्धयः। क्रोधात्प्रायं विषं वह्निं शस्त्रमुद्बंधनं जलं। गिरिवृक्षप्रपातं च ये कुर्वन्ति नराधमाः। महापातकिनो ये च पतितास्ते प्रकीर्तिताः। पतितानां न दाहः स्यान्नांत्येष्टिर्नास्थिसंचयः’ इति। अत्र विदूषकः—(विलोक्य) का पुनरेषेत्यादि भाषणेन वासवदत्ता बुद्धिगृहीतायाः सागरिकायाः मरणशंकया संभ्रमाख्यं गर्भसंधेरंगं ‘शंकात्रासौ च संभ्रमः’ इति लक्षणात्। हे प्रिये, साहसं सहसा क्रियते तत्साहसं ‘शेषे’ इति सूत्रेण विहितोऽण् ‘साहसं तु दमे दुष्करकर्मणि। अविमृश्यकृतौ धार्ष्ट्ये’ इति हेमचंद्रः। त्यज्यतां त्यज हानौ लोट्। ननु मयाऽकार्यकरणे तव हानेरभावात् किमिति मां निषेधसीत्यत आह—ममेत्यादिना। पाशे तव कंठे गले स्थितः कंठस्थितः ‘साधनं कृता बहुलं’ इति समासः। तस्मिन् सति मम प्राणा असवः कंठं गताः कंठगताः ‘द्वितीयाश्रिते’त्यादिना समासः। अतः मत्प्राणोद्गमनाद्धेतोः अयं त्वन्निवारणरूपः स्वार्थप्रयत्नः स्वस्मै अयमिति स्वार्थः ‘अर्थेन नित्यसमासो विशेष्यलिंगता चे’ति समासः। स चासौ प्रयत्नश्च। असंगत्यलंकारः। त्वदुक्तं ‘विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसंगतिः’ इति। अनुष्टुब्वृत्तं ॥१६॥

साग०—कथमिति प्रश्ने संभावनायां वा एषः पुरोवर्ती भर्ता वत्सराजः सहर्षमिति हर्षकारणं राजदर्शनं। एनं राजानं प्रेक्ष्य विलोक्य जीविते जीवने ‘नपुंसके भावे क्तः’। अभिलाषः कामः संवृत्तः निष्पन्नः इति यत् तत् सत्यं यथार्थं। एतादृशलोकोत्तरसुंदरपुरुषदर्शने कस्या जीविताशा न भवेत् अतो ममापि जीविताशा उत्पन्ना सापि युक्तैवेत्यर्थः। ननु वासवदत्ताया भीतेः तव जीविताशाऽयुक्तेत्यत आह—अथवेति। अथवेति पक्षांतरे एनं राजानं प्रेक्ष्य कृतः निष्पादितः अर्थः जन्मसाफल्यं

राजा—( निरूप्य सहर्षम् । ) कथं प्रिया मे सागरिका । ( इति कण्ठात्पाशमाक्षिप्य । )

अलमलमतिमात्रं साहसेनामुना ते
त्वरितमयि विमुञ्च त्वं लतापाशमेनम् ।
चलितमपि निरोद्धुं जीवितं जीवितेशे
क्षणमिह मम कण्ठे वाहुपाशं निधेहि ॥ १७ ॥

( इति वाहुपाशमाक्षिप्य कण्ठे गृहीत्वा स्पर्शसुखमभिनीय विदूषकं प्रति । ) सखे, इयमनभ्रा वृष्टिः ।

---

यया सा एतादृशी भूत्वा आत्मानं उद्बध्य उद्बध्य जीवितं जीवनं सुखं यथा स्यात्तथा परित्यजे । जीविताशापेक्षया प्रियं मरणसमये विलोक्य तावतैव जन्मनः साफल्यात् मरणं समुचितमिति अथवेत्यादि पक्षांतराभिप्रायः । मुंचतु त्यजतु इत्यर्थः । अयं मद्रूपो जनः पराधीनः परतंत्रः 'परतंत्रः पराधीनः' इत्यमरः । शौंडादित्वादधिना समासे 'अषडक्षे'त्यादिना खः । ईदृशं अवसरं ईदृशं कालं । अत्र ईदृश अवसर इति प्रथमांतं युक्तं, अथवाऽयं नपुंसकलिंगी चेत्कचिदुपलब्धः ततोऽप्ययं ग्रंथः संगच्छेत् । अत इदं विचार्यं । त्वमपीति । मम मरणे मद्धेतुकः तवापि देव्याः अपराधो न भवेदित्यपेरर्थः । अपराधोऽस्यास्तीत्यपराधी तं । राजा—निरूप्य सम्यगभिज्ञायेत्यर्थः । सागरिकामिति शेषः । सहर्षमिति हर्षकारणं स्पष्टमेव । कथमिति प्रश्ने प्रिया इष्टा कंठात् पाशं आक्षिप्य निष्कास्य कंठादित्यपादाने पंचमी । ते तव अमुना उद्बध्य मरणरूपेण अतिमात्रं अत्यंतं इदं च साहसपदार्थाऽविमृश्यकारित्वक्रियाया विशेषणं । साहसेन अविमृश्यकृत्या अलमलमिति संभ्रमे द्विरुच्चारणमिदं । मा मा इत्यर्थः । अयि त्वमेनं लतायाः पाशः लतापाशः तं त्वरितं शीघ्रं यथा स्यात्तथा विमुंच त्यजेत्यर्थः । जीवितस्य जीवनस्य ईशा अधिपतिः तत्संबोधनं हे जीवितेशे, चलितमपि कंपितमपि 'चलिता कंपिता धुते' इत्यमरः। चंचलमित्यर्थः । त्वद्वियोगेन। निरोद्धुं अवरोद्धुमित्यर्थः । इह अस्मिन्देशे एकांतस्थले इति गूढाभिप्रायः 'इदमो हः' इत्यनेन हप्रत्ययः । 'इदम इश्' इत्यनेनेशादेशः । मम कंठे गले क्षणं 'कालाध्वनोरत्यंतसंयोगे' इत्यनेन द्वितीया । क्षणलक्षणममरसिंहेनोक्तं यदाह—'अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला । तास्तु त्रिंशत्क्षणः' इति । श्रीमद्भागवते तु 'निमेषस्त्रिलवो ज्ञेयः आम्नातस्ते त्रयः क्षणः' इति । वाहू एव पाशः वाहुपाशः तं निधेहि स्थापय निपूर्वाद्धाञो लोटि 'ध्वसोरेद्धावभ्यासे'ति लोपः एत्वं च । अत्र मां आलिंग्येति गम्यस्यार्थस्य मज्जीवितस्य त्वमीशासि अतो गमनोद्यतं मज्जीवितरूपं निजं धनं निजवाहुपाशाभ्यामवरुंधि इति भंग्यंतरेणोक्तत्वात् पर्यायोक्तालंकारः । उक्तं च 'पर्यायोक्तं तु गम्यस्य वचो भंग्यंतराश्रयं' इति । मालिनीवृत्तं 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥ १७ ॥ वाहुपाशं भुजपाशं आक्षिप्य हस्ता-

**वसन्त०**—[1]भो, एवं णेदं । जइ अआलवादावली भविअ ण आआदि देवी वासवदत्ता ।

( ततः प्रविशति वासवदत्ता काञ्चनमाला च । )

**वासवदत्ता**—[2]हंजे कंचणमाले, तं तहा चरणणिवडिदं अज्जउत्तं अवधीरिअ आअच्छंतीए मए अदिणिट्ठुरं किदं । ता दाणिं सअं ज्जेव गदुअ अज्जउत्तं अणुणइस्सं ।

**काञ्चनमाला**—[3]को अण्णा देविं वज्जिअ एवं भणिदुं जाणादि । वरं सो एव्व देवो दुज्जणो होदु ण उण देवी । ता एदु एदु देवी ।

( इति परिक्रामतः । )

**राजा**—अयि मुग्धे, किमद्यापि मध्यस्थतया वयं विफलमनोरथाः क्रियामहे ।

---

१. भोः, एवं न्विदम् । यद्यकालवातावली भूत्वा नायाति देवी वासवदत्ता ।

२. हञ्जे काञ्चनमाले, तं तथा चरणनिपतितमार्यपुत्रमवधीर्यागच्छन्त्या मयातिनिष्ठुरं कृतम् । तदिदानीं स्वयमेव गत्वाऽऽर्यपुत्रमनुनेष्यामि ।

३. काऽन्या देवीं वर्जयित्वैवं भणितुं जानाति । वरं स एव देवो दुर्जनो भवतु न पुनर्देवी । तदेत्वेतु देवी ।

---

भ्यामादायेत्यर्थः । कंठे गृहीत्वा कंठे निक्षिप्येत्यर्थः । स्पर्शसुखमभिनीयेति तदभिनयश्च अंगे रोमांचोत्पत्त्यादिकं । विदूषकं प्रतीत्येतस्याऽग्रे वक्तीति शेषः । तदेवाह—इयं सागरिकाप्राप्तिरूपा वृष्टिः वर्षणं नास्ति अभ्रं मेघो यस्यां सा यथा अतर्कितोपनता भवति एवमियमित्यर्थः । **वसं०**—एतत् त्वदुक्तं एवं यथार्थमिति यावत् । यदि अकाले वातावली वातपंक्तिरिव । 'सुप्सुपे'ति समासः । एतादृशी भूत्वा देवी वासवदत्ता नायाति नागच्छति । अत्रेति शेषः । तर्हि त्वदुक्तं संभवेदित्यर्थः । सा वातावली यथावृष्टि निवारिका एवं वासवदत्तागमनमपि सागरिकासमागमनिवारकमिति भावः । **वासवद०**—चरणयोर्निपतितं 'साधनं कृते'ति समासः । नमस्कुर्वंतमित्यर्थः । अवधीर्य तिरस्कृत्य अतिनिष्ठुरं अतिकठोरं कृतं आचरितं तत् ममापराधाद्धेतोः स्वयमेव गत्वा न तु दूत्यादिद्वारा । अनेन अत्यादरः सूचितः । अनुनेष्यामि प्रसादयिष्ये । **कांचनमा०**—देवीं वासवदत्तां वर्जयित्वा अन्या इतरा । एवं पत्युः अपराधित्वेऽपि स्वतः एव तत्प्रसादनार्थगमनसंबंधिभाषणं । स एव देवः वत्सराजः दुर्जनो भवतु इति वरं मनाक्प्रियं न पुनर्देवी दुर्जना इत्यर्थः । तत् तव प्रसादनार्थगमनस्य योग्यत्वाद्धेतोः । परिक्रामतः परिचरतः । **राजा**—मुग्धे सुंदरि, 'मुग्धस्तु सुंदरे मूढे' इति मेदिनी । अद्यापि एतावत्कालपर्यंतमपीत्यर्थः । मध्यस्थस्य

**काञ्चनमाला**—(कर्णं दत्वा) [1]भट्टिणि, जह समीवे एसो भट्टा मंतेदि तह तक्केमि तुमं ज्जेव अणुणेदुं आअच्छदि । ता उवसप्पदु भट्टिणी ।

**वासवदत्ता**—(सहर्षम्) [2]ता अलक्खिदा एव्व पुट्ठदो गदुअ कंठे गेण्हिअ पसादइस्सं ।

**वसन्त०**—[3]भोदि साअरिए, वीसत्था भविअ पिअवअस्सं आलावेहि ।

**वासवदत्ता**—(आकर्ण्य सविषादम्) [4]कंचणमाले, साअरिआ वि एत्थ चिट्ठदि । ता सुणम्ह । जाणिअ पच्छा उवसप्पिस्सं । (इति तथा करोति ।)

---

१. भट्टिनि, यथा समीपे एष भर्ता मन्त्रयते तथा तर्कयामि त्वामेवानुनेतुमागच्छति । तदुपसर्पतु भट्टिनी ।

२. तदलक्षितैव पृष्ठतो गत्वा कण्ठे गृहीत्वा प्रसादयिष्ये ।

३. भवति सागरिके, विश्वस्ता भूत्वा प्रियवयस्यमालापय ।

४. काञ्चनमाले, सागरिकाप्यत्र तिष्ठति । तच्छृणुवः । ज्ञात्वा पश्चादुपसर्पिष्यामि ।

---

भावो मध्यस्थता तया । 'शरदः कृतार्थते'त्यादिवत् सामान्ये नपुंसकात्तल् प्रत्ययः । अन्यथा 'त्वतलोर्गुणवचनस्य' इति मध्यस्थाशब्दस्य पुंवद्भावो न स्यात् गुणवचनत्वाभावात् । औदासीन्येनेति यावत् । विगतं फलं येषां ते विफलाः व्यर्थाः । 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः' इति समासः । मनोरथा अभिलाषा येषां 'इच्छा कांक्षा स्पृहेहा तृट् वांच्छा लिप्सा मनोरथः' इत्यमरः । क्रियामहे त्वयेति शेषः । **कांचनमाला**—कर्णं दत्वेति । आकर्णनाभिनयं कृत्वेत्यर्थः । यथा यतः समीपे समीपदेशे भर्ता स्वामी वत्सराजः मंत्रयते गुप्तं भाषते तथा । ततो हेतोरित्यर्थः । तर्कयामि अनुमिनोमि । किमनुमानं तदाह—**त्वामेवेत्यादिना** । त्वामेव वासवदत्तामेव अनुनेतुं आर्जवयितुं आगच्छति आयाति । तत् त्वदनुनयहेतुना वत्सराजागमनाद्धेतोः उपसर्पतु समीपं गच्छतु । **वासवद०**—सहर्षमिति । हर्षकारणं तु आत्मानं राजाऽनुनेतुमायातीति । तत् राजाऽऽगमनाद्धेतोः । अलक्षितैव अदृष्टैव राज्ञेति शेषः । पृष्ठतः आद्यादित्वात्सप्तम्यंतात्तसिः । पृष्ठभागे इत्यर्थः । कंठे गृहीत्वेति आलिंग्येत्यर्थः । प्रसादयिष्ये प्रसन्नं करिष्ये संमुखागमनापेक्षया पृष्ठत आगत्य कंठालिंगनेन महती प्रीतिः स्यादित्यभिप्रायः । **वसं०**—विश्वस्ता जातविश्वासा 'विश्वस्तो जातविश्वासे' इति मेदिनी । विपूर्वकाच्छ्वसधातोः 'गत्यर्थाकर्मके'ति कर्तरि क्तप्रत्यये आगमशास्त्रस्यानित्यत्वात् इडभावः । प्रियश्चासौ वयस्यश्च तं आलापय आभाषयेत्यर्थः । **वासव०**—आकर्ण्येति भाषणध्वनिमित्यर्थः । सविषादमिति विषादकारणं अयं मयि

**सागरिका**—भट्टा, किं एदिणा अलीअदक्खिण्णेण । जीविदादोवि अधिअवल्लहाए देवीए पुणोवि अत्ताणअं अवराहिणं किं करेसि ।

**राजा**—अयि, मिथ्यावादिनी खल्वसि । कुतः ।

श्वासोत्कम्पिनि कम्पितं कुचयुगे मौने प्रियं भाषितं
वक्त्रेऽस्याः कुटिलीकृतभ्रुणि तथा यातं मया पादयोः ।

---

१. भर्तः, किमेतेनालीकदाक्षिण्येन । जीवितादप्यधिकवल्लभाया देव्याः पुनरप्यात्मानमपराधिनं किं करोषि ।

---

बहिरेव प्रेम दर्शयति अंततस्तु सागरिकायामिति । अत्र न केवलं राजैव वर्तते किंतु सागरिकापीत्यपेरर्थः । तत् सागरिकायाः अत्र सत्त्वाद्धेतोरित्यर्थः । शृण्वः अर्थादुभयोः संवादं, ज्ञात्वा संवादमिति शेषः । पश्चाज्ज्ञानोत्तरं उपसर्पिष्यामि समीपं गच्छामि । तथा करोतीति श्रवणार्थं तिष्ठतीत्यर्थः । **सागरिका**—एतेन इदानीं क्रियमाणेन । दक्षिणः परच्छंदानुवर्ती 'दक्षिणस्तु परच्छंदानुवर्तिनि' इत्यभिधानात् । तस्य भावो दाक्षिण्यं 'ब्राह्मणादित्वा' द्भावे ष्यञ् । अलीकं मिथ्या यद्दाक्षिण्यं 'अलीकं त्वप्रियेऽनृते' इत्यमरः । तेन । जीवितादपि जीवनादपि अधिकवल्लभायाः अधिकप्रियायाः देव्याः वासवदत्तायाः पुनरपि भूयोपि आत्मानं स्वं । अपराधः अस्यास्तीति तं 'अत इनिठनौ' इति मत्वर्थे इनिः । अनेन मिथ्याप्रेम्णा वासवदत्ताया अपराध्येव भवसि न तु मम प्रीतिपात्रं प्रेम्णो मिथ्यात्वादिति यावत् । **राजा**—मम प्रेम वास्तवमेव त्वयि वर्तते इत्याह—**अयीत्यादिना** । अयीति कोमलामंत्रणे । मिथ्यावादिनी अवश्यं मिथ्या वदतीति तथा 'आवश्यकाधमर्ण्ययोः' इति णिनिः । खलु निश्चयेन । वास्तवं प्रेम वासवदत्तायामेव मयि तु अलीकं इति यत्त्वयोक्तं तन्मिथ्येत्यर्थः । तत्र हेतुमुपपादयति—**कुत इत्यादिना** । कुतः कस्माद्धेतोरित्यर्थः । कुचयोः स्तनयोः युगं तस्मिन् श्वासेन अभीक्ष्णं उत्कंपते चलति इति श्वासोत्कंपि तस्मिन् सति कंपितं मयेति शेषः । देव्याः कोपेन श्वासाधिक्ये सति मया भीत्या कंपितमित्यर्थः । अस्याः इति प्रतिवाक्यं संबध्यते । मौने सति प्रियं तन्मनोनुकूलं भाषितं सर्वत्र मयेत्यस्य संबंधः । 'नपुंसके भावे क्तः' इति भावे क्तश्च तथा पूर्वोक्तक्रियावत् अस्याः वक्त्रे मुखे कुटिलीकृते भ्रुवौ यस्मिन् तत् कुटिलीकृतभ्रु । कुटिलीकृतमित्यत्र कुटिलशब्दात् 'कृभ्वस्ति' इति च्विः । गतित्वात्कुगतीति कृतशब्देन समासः । तादृशे सति मया पादयोः । अर्थात् अस्याः इति संबध्यते । यातं पतितं अनया क्रोधेन भ्रुव उन्नयने कृते सति तच्छांत्यर्थं पादयोर्नमनं कृतमित्यर्थः । इत्थं पूर्वोक्तप्रकारेण नः अस्माकं सहजं स्वाभाविकं यत् आभिजात्यं कुलीनत्वं बुधत्वं वा । आभिजात्यमित्यत्र ब्राह्मणादित्वाद्भावे ष्यञ् । 'अभिजातस्तु कुलजे बुधे' इत्य-

अभिजात्य = कुलीनता
आबन्ध = सम्बन्ध





इत्थं नः सहजाभिजात्यजनिता सेवैव देव्याः परं
प्रेमाबन्धविवर्धिताधिकरसा प्रीतिस्तु या सा त्वयि ॥ १८ ॥

**वासवदत्ता**—( उपसृत्य सरोषम् । ) अज्जउत्त, जुत्तं एदं सरिसं एदं ।

**राजा**—( दृष्ट्वा सवैलक्ष्यम् । ) देवि, न खल्वकारणे मामुपालब्धुमर्हसि । त्वामेव मत्वा वेषसादृश्याद्विप्रलब्धा वयमिहागताः । तत्क्षम्यताम् । ( इति पादयोः पतति । )

**वासवदत्ता**—( सरोषम् । ) अज्जउत्त, उट्ठेहि उट्ठेहि । किं अज्जवि सहजाभिजादाए सेवाए दुक्खं अणुभवीअदि ।

---

१. आर्यपुत्र, युक्तमेतत् । सदृशमेतत् ।

२. आर्यपुत्र, उत्तिष्ठोत्तिष्ठ । किमद्यापि सहजाभिजातया सेवया दुःखमनुभाव्यते ।

---

मरः । तेन जनिता उत्पादिता देव्याः वासवदत्तायाः परं केवलं क्रियाविशेषणमिदं । 'परं तु केवलं' इति हेमचंद्रः । सेवैव परिचर्यैव । प्रेम्णः हार्दस्य 'प्रेमा ना प्रियता हार्दं' इत्यमरः । यः आबंधः संबंधः तेन विवर्धितः वृद्धिं प्रापितः अत एव अधिकः अतिशयितः रसः स्वादो यस्यां सा 'रसो गंधरसे स्वादे तिक्तादौ विषरागयोः' इति विश्वः । या प्रीतिः सा त्वयि । तुना विशेषो द्योतितः । वासवदत्तायां सेवैव, प्रीतिस्तु त्वयीत्यर्थः । शार्दूलविक्रीडितं वृत्तं ॥ १८ ॥ **वासव०**—उपसृत्य समीपं प्राप्य सरोषं रोषकारणं स्पष्टमेव । एतत् त्वयोक्तं युक्तं योग्यं क्रोधावेगेन एकार्थस्यापि शब्दस्य पुनः उपादानं, काकुश्चात्र । तेन सर्वथा नेदं तव शोभते इत्यर्थः । **राजा**—सवैलक्ष्यं सविस्मयमित्यर्थः । कोऽयं हतकदैवस्य प्रभावः इति विस्मयः । अकारणे कारणाभावे अभावो नञर्थः । उपालब्धुं तिरस्कर्तुं नार्हसि 'शकधृषे'त्यादिना तुमुन् प्रत्ययः । वेषस्य अर्थात् त्वदीयस्य सादृश्यं तौल्यं तस्माद्धेतोः हेतौ पंचमी । सागरिकां त्वामेव मत्वेति यावत् । इह देशे आगता वयं विप्रलब्धाः वंचिताः । अत्रापि देहलीदीपन्यायेन वेषसादृश्यादित्यस्य संबंधः । तत् पूर्वोक्तापराधकरणं क्षम्यतां सह्यतां त्वयेति शेषः । पादयोः पततीति नमस्करोतीत्यर्थः । **वासव०**—सरोषमिति अत्रापि रोषकारणं स्पष्टमेव । उत्तिष्ठोत्तिष्ठ संभ्रमे अनेकधोच्चारणमिदं । अद्यापि अधुनापि सहजा स्वाभाविकी एतादृशी अभिजाता उत्पन्ना या सेवा अर्थात् त्वत्कृता तया दुःखं संकटं अनुभाव्यते अनुपूर्वकात् भू प्राप्तौ इत्यस्मात् स्वार्थे णिजंतात्कर्मणि लट् । दुःखं प्राप्यत इत्यर्थः । सहजाभिजात्य-

**राजा**—( स्वगतम् । ) किमेतदपि श्रुतं देव्या । तत्सर्वथा देवीप्रसादनोपायं प्रति निराशीभूताः स्मः । ( इत्यधोमुखस्तिष्ठति । )

**वसन्त०**—[1]भोदि, तुमं किल अत्ताणअं उब्बंधिअ वावादेसित्ति वेससारिस्समोहिदेण मए पिअवअस्सो एत्थ आणीदो । जइ मम वअणं ण पत्तिआअसि ता पेक्ख इमं लदापासं । ( इति लतापाशं दर्शयति । )

**वासवदत्ता**—( सकोपम् ) [2]हंजे कंचणमाले, एदेण एव्व लदापासेण बंधिअ गेण्ह एणं बम्हणं । एदं अ दुट्ठकण्णआं अग्गदो करेहि ।

---

१. भवति, त्वं किलात्मानमुद्बध्य विपद्यस इति वेषसादृश्यमोहितेन मया प्रियवयस्योऽत्रानीतः । यदि मम वचनं न प्रत्याययसि तत्प्रेक्षस्वेमं लतापाशम् ।

२. हञ्जे काञ्चनमाले, एतेनैव लतापाशेन बद्ध्वा गृहाणैनं ब्राह्मणम् । एतां च दुष्टकन्यकामग्रतः कुरु ।

---

सेवया इति पाठः क्वचिदुपलब्धश्चेत्स साधीयान् । **राजा**—एतदपि सहजाभिजात्येत्येतदपि देव्या वासवदत्तया श्रुतं किं । तत् तर्हीत्यर्थः । देव्याः प्रसादनस्य प्रसादस्य य उपायः साधनं तं प्रति निर्गता आशा येषां ते निराशाः ते च ते भूताश्च । निराशशब्दस्य च्व्यंतस्य भूतशब्देन समासः । अधोगतं मुखं यस्य अधोमुखस्थितेः कारणं लज्जैव । **वसं०**—किलेति वार्तायां 'वार्तासंभाव्ययोः किल' इत्यमरः । आत्मानं स्वं उद्बध्य उद्ग्रथ्य विपद्यसे म्रियसे इति हेतोः वेषस्य यत्सादृश्यं तुल्यत्वं तेन मोहितेन मया प्रियवयस्यः वत्सराजः । अत्र स्थले आनीतः प्रापितः । न प्रत्याययसि न विश्वसिषि । तत् तर्हीत्यर्थः । इमं पुरोवर्तिनं लतापाशं लतोद्बंधनं प्रेक्षस्व अवलोकय । **वासवद०**—सकोपमिति कोपकारणं स्पष्टमेव । एतेनैव सागरिकया आत्मोद्बंधनार्थं कृतेनैव बध्वेति बंधनस्य ग्रहणस्य च ब्राह्मणमिति कर्म । तथा च एनं ब्राह्मणं वसंतकं बध्वा गृहाणेत्यर्थः । दुष्टकन्यकामिति कुत्सिता कन्या कन्यका 'कुत्सिते'त्यनेन कुत्सायां कन् 'केऽण' इति ह्रस्वः । कन् प्रत्ययेन द्योतितं कुत्सितत्वं दुष्टशब्देनैव स्पष्टीक्रियते । अग्रत इति अग्रशब्दात्सप्तम्यंतात् आद्यादित्वात्तसिः । अत्र 'वासवदत्ता—( उपसृत्य सरोषं ) आर्यपुत्र, युक्तमेतत् सदृशमेतत्' तथा ( सरोषं ) आर्यपुत्र, उत्तिष्ठोत्तिष्ठ किमद्यापि सहजाभिजातया सेवया दुःखमनुभाव्यते । 'कांचनमाले एतेनैव लतापाशेन बध्वेऽत्याद्यत्र भाषणेन च वासवदत्तासंरब्धवचसा सागरिकासमागमांतरायभूतेनानियतप्राप्तिकारणं तोटकाख्यं गर्भसंधेरंगं । उक्तं च भरतेन 'संरंभव-

काञ्चनमाला—[1]जं भट्टिणी आणवेदी । (लतापाशेन वसन्तकं गले बध्वा ताडयति । ) हदास, अणुभव दाव अत्तणो अविणअस्स फलं । देवीए दुट्ठवअणेहिं कडुइदा कण्णा त्ति सुमरेहि तं वअणं । साअरिए, तुमंपि अग्गदो होहि ।

सागरिका—(स्वगतम् । ) [2]अकिदपुण्णाए मए मरिदुंवि अत्तणो इच्छाए ण अवापिदं ।

वसन्त०—(सविषादम् । ) [3]भो वअस्स, सुमरेहि मं अणाधं देवीए वन्धणादो विवज्जिदुं (इति राजानमालोकयति । ) ।

( वासवदत्ता राजानमालोकयन्तीं सागरिकां वसन्तकं च गृहीत्वा काञ्चनमालया सह निष्क्रान्ता । )

राजा—(सखेदम् । ) कष्टं भोः कष्टम् ।

---

१. यद्भट्टिन्याज्ञापयति । हताश, अनुभव तावदात्मनोऽविनयस्य फलम् । देव्या दुष्टवचनैः कटुकितौ कर्णाविति स्मर तद्वचनम् । सागरिके, त्वमप्यग्रतो भव ।

२. अकृतपुण्यया मया मर्तुमप्यात्मन इच्छया नावापितम् ।

३. भो वयस्य, स्मर मामनाथं देव्या वन्धनाद्विवर्जितुम् ।

---

चनप्रायं तोटकं त्विति संज्ञितं इति । कांचन०—यद्भट्टिनी आज्ञापयति तत्करोमीति शेषः । 'मारणतोषणनिशामनेषु ज्ञा' इत्यनेन मित्वं माधवमते अचाक्षुषज्ञाने नास्ति । निशानेष्विति पठतां हरदत्तादीनां तु न काप्यनुपपत्तिः । अत एव तज्ज्ञापयत्याचार्यः इति भाष्यकारप्रयोगः संगच्छते । हताशेति एतद्याख्या पूर्वं कृतैव । अविनयस्य औद्धत्यस्य । स च सागरिकासंमेलनोद्योगरूपः । देव्येत्यादि व्याख्यातं । तत् पूर्वोक्तं वचनं स्मरेत्यन्वयः । साग०—अकृतं पुण्यं सत्कर्म यया तादृश्या मया आत्मनः इच्छया मर्तुमपि नावापितं । धातूनामनेकार्थत्वात्र पारितमित्यर्थः । पार्यते इति पाठस्तु साधुतर एव । अत्रत्यसागरिकाभाषणेन वासवदत्तातः सागरिकाया भयं इति उद्वेगाख्यमंगं । तदुक्तं 'भयं नृपारिदस्यूत्थमुद्वेगः परिकीर्तित' इति । यो हि यस्यापकारी स तस्यारिः, प्रकृते वासवदत्ता । वसंत०—सविषादमिति । विषादकारणं स्पष्टमेव । नास्ति नाथो रक्षको यस्य एतादृशं त्वद्वियुक्तत्वादनाथमित्यर्थः । विवर्जितुं मोचितुमिति यावत् । राजानमालोकयंतीमिति सागरिकाया विशेषणं लिंगविपरिणामेन वसंतकस्य च विशेषणं राजानमालोकयतीति पूर्वमुक्तत्वात् तेन च उभयोरतिदीनत्वं व्यज्यते । गृहीत्वेति 'ग्रहोऽलिटि' इति दीर्घः । कांचनमालया सहेति 'सहयुक्तेऽप्रधाने' इति तृतीया । राजा—सखेदमिति स्वैकनिष्ठयोः प्रीतिपात्रयोः स्वसमक्षं दुरवस्थितौ खेदः स्पष्ट एव । तदेवाह—कष्टं भोः कष्टमिति लौकिकोक्त्या

किं देव्याः कृतदीर्घरोषमुषितस्निग्धस्मितं तन्मुखं
त्रस्तां सागरिकां सुसंभृतरुषा संतर्ज्यमानां तथा ।
बध्वा नीतमितो वसन्तकमहं किं चिन्तयामीत्यहो
सर्वाकारकृतव्यथः क्षणमपि प्राप्नोमि नो निर्वृतिम् ॥ १९ ॥

तत्किमिदानीमिहस्थितेन प्रयोजनम् । देवीमेव प्रसादयितुमभ्यन्तरं प्रविशामि ।

(इति निष्क्रान्ताः सर्वे ।)

इति संकेतकं नाम तृतीयोऽङ्कः ।

---

खेदेन कष्टशब्दस्य द्विरुच्चारणं नत्विदं वचनेन द्वित्वं मध्ये भोःशब्दस्य प्रवेशात् । एतादृशोच्चारणेन अतिकृच्छ्रं द्योत्यते । 'कष्टे तु कृच्छ्रगहने' इत्यमरः । तदेवाह—**किं देव्या इत्यादिना** । देव्याः वासवदत्तायाः एतस्य मुखमित्यनेन अन्वयः । तत् मनसा उल्लिखितमित्यर्थः । कृतः अर्थाद्वासवदत्तयेति गम्यते । यो दीर्घरोषः महान् क्रोधः तेन मुषितं चोरितं स्निग्धेन स्नेहेन । स्निग्धेत्यत्र 'नपुंसके भावे क्तः' । स्मितं हास्यं यस्मिन् । अथवा स्निहधातोरकर्मत्वात् 'गत्यर्थाकर्मकेति' कर्तरि क्तः । तथा च दीर्घरोषेण मुषितं स्निग्धं स्नेहकर्तृ स्मितं यस्मिन् । एतादृशं मुखं चिंतयामि किं, स्मरामि किं । तथा मुखस्मरणवत् त्रस्तां भीतां 'अधीरे कातरस्त्रस्त' इत्यमरः । सुसंभृता अतिशयिता रुट् क्रोधो यस्याः तया वासवदत्तया संतर्ज्यमानां भर्त्स्यमानां तर्ज, भर्त्स तर्जने इत्यस्मात्संपूर्वकात् शानच् । एतादृशीं सागरिकां चिंतयामि किं, बध्वा संनह्य अर्थाद्वसंतकं इतः एतस्मात् स्थलात् नीतं वसंतकं अहं चिंतयामि किं । अहमिति पदं प्रतिवाक्यं संबध्यते । अहो इति खेदे । इति पूर्वोक्तप्रकारेण पूर्वोक्तहेतुभ्यो वा सर्वश्चासौ आकारश्च पूर्वोक्तत्रिप्रकार इत्यर्थः । तेन कृता उत्पादिता व्यथा पीडा यस्य एतादृशोऽहं क्षणमपि 'कालाध्वनोरत्यंतसंयोगे' इति द्वितीया । निर्वृतिं सुखं 'अथ निर्वृतिः । मोक्षे मृत्यौ सुखे' इति हेमचंद्रः । नो प्राप्नोमि । शार्दूलविक्रीडितं ॥ १९ ॥ तत् कथमपि निर्वृत्यप्राप्तेर्हेतोः इदानीं एतस्मिन् काले इह देशे स्थितेन स्थित्वा 'नपुंसके भावे क्तः' । 'द्यतिस्यतिमास्थामि'तीत्वं । प्रयोजनं फलं किं साध्यमित्यध्याहृतक्रियायोगः प्रसादयितुं सुप्रसन्नां विधातुं अभ्यंतरं अंतःपुरं प्रविशामि गच्छामि । निष्क्रांताः सर्वे इति भृत्याद्यभिप्रायेण सर्वपदं । तृतीयोऽङ्क इति । इति समाप्त इत्यर्थः 'इति हेतुप्रकरणप्रकाशादिसमाप्तिषु' इत्यमरः ।

इति श्री ६ युतपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायपदव्यलंकृतपंडितप्रकांड-
श्रीकरहाटकरोपनामक श्रीमद्गोपालाचार्यांतेवासिना निगुडकरोपाभिधेन दत्तात्रेयापरनामकनारायणशर्मणा विरचितायां
प्रभाख्यरत्नावलीटीकायां तृतीयोऽङ्कः समाप्तः ॥

## चतुर्थोऽङ्कः ।

### प्रवेशकः ।

(ततः प्रविशति रत्नमालामादाय सास्रा सुसंगता ।)

**सुसंगता**—(सकरुणं निःश्वस्य ।) हा पिअसहि साअरिए, हा लज्जालुए, हा सहीगणवच्छले, हा उदारसीले, हा सोम्मदंसणे, कहिं गदादाणिंतुमंमए पेक्खिदव्वासि (इति रोदिति । ऊर्ध्वमवलोक्य निश्वस्य च ।) हंहो देव्वहदअ, अकरुण, असामण्णरूवसोहा तादिसी तुए जइ णिम्मिदा ता किंत्ति उण ईदिसं अवत्थन्तरं पाविदा । इयं च रअणमालावि जीविदणिरासाए ताए कस्सवि वम्हणस्स हत्थे पडिवादेसुत्ति भणिअ ममं हत्थे समप्पिदा । ता जाव कंपि वम्हणं अण्णेसामि । (नेपथ्याभिमुखमवलोक्य) अए । कहं एसो खु वम्हणो वसंतओ इदो एव्व आअच्छदि । ता एदं दत्व इमस्सिं एव्व पडिवादइस्सं ।

---

१. हा प्रियसखि सागरिके, हा लज्जालुके, हा सखीगणवत्सले, हा उदारशीले, हा सौम्यदर्शने, कुत्र गतेदानीं त्वं मया प्रेक्षितव्याऽसि हंहो दैवहतक, अकरुण, असामान्यरूपशोभा तादृशी त्वया यदि निर्मिता तत्किमितिपुनरीदृशमवस्थान्तरं प्रापिता । इयं च रत्नमालाऽपि जीवितनिराशया तया कस्यापि ब्राह्मणस्य हस्ते प्रतिपादयेति भणित्वा मम हस्ते समर्पिता । तद्यावत्कमपि ब्राह्मणमन्विष्यामि । अये । कथमेष खलु ब्राह्मणो वसन्तक इत एवागच्छति । तदेतां तावदेतस्मिन्नेव प्रतिपादयिष्यामि ।

---

अथ चतुर्थांकः प्रारभ्यते । तृतीयांके गर्भसंधिः प्रतिपादितः । अथेदानीं चतुर्थांके क्रमप्राप्ताऽवमर्शनिर्वहण संधिप्रतिपादनेन नाटिकोक्तेतिवृत्तसमापनं चिकीर्षुः कविः चतुर्थांकमारभते । तत्र तावत् वत्सराजप्रवेशं निरूपयितुं प्रवेशकमारभते—**ततः प्रविशतीत्यादिना** । ततः राज्ञो देवीप्रसादनार्थमंतःपुरप्रवेशानंतरं रत्नानां हीरकादीनां माला स्रक् तां आदाय गृहीत्वा अस्रैः नेत्रोदकैः सह वर्तते इति सास्रा 'वोपसर्जनस्य' इति सहस्य सादेशः रुदतीत्यर्थः । सुसंगता प्रविशतीत्यन्वयः । **सुसंगता**—सकरुणं सदयं एतस्याध्याहृतभाषणक्रियायामन्वयः । तथा च निःश्वस्य सकरुणं आहेत्यन्वयः । निःश्वासस्य कारणं दुःखं करुणाकारणं तु निजसख्याः दुर्दशाप्राप्तिरेव, अग्रिमवाक्येषु हेत्यव्ययं विषादद्योतकं 'हा विषादशुगर्तिषु' इत्यमरः । प्रिया इष्टा चासौ सखी तत्संबोधनं प्रियसखि 'सख्यशिश्वी'ति ङीषि 'पुंवत्कर्मधारये'ति पुंवद्भावे 'अंबार्थनद्योर्ह्रस्वः' इति ह्रस्वः । लज्जां त्रपां लाति गृण्हाति इति लज्जालुः । मितद्र्वादित्वाल्लाधातोर्डुप्रत्ययः । कृपालुरितिवत् । लज्जालुरेव लज्जालुको स्वार्थे कः ।

(ततः प्रविशति हृष्टो वसन्तकः ।)

**वसन्तकः**—[1]ही ही भो भोः! अज्ज खु पिअवअस्सेण पसादिदाए तत्तभोदीए वासवदत्ताए बंधणादो मोचिअ सहत्थदिण्णेहिं

---

१. ही ही भो भोः! अद्य खलु प्रियवयस्येन प्रसादितया तत्रभवत्या

---

तत्संबोधनं लज्जालुके, अथवा 'स्पृहिगृही' त्यत्रैव लुश्विधानमात्रेणैव स्पृहयालुरित्यादिरूपनिष्पत्तिसंभवे आलुचो विधानमनर्थकमित्याशंक्य महाभाष्ये लुशमविधायाऽऽलुच्करणं अन्यत्रापि यथा स्यादित्युक्तं तेनायं प्रयोगः साधुः। सखीनां गणः समुदायः 'समवायश्चयो गणः' इत्यमरः। तस्मिन् वत्सले स्निग्धे 'स्निग्धस्तु वत्सलः' इत्यमरः। उदारं महत् शीलं स्वभावो यस्याः सा तत्संबोधनं उदारशीले, 'उदारो दातृमहतोः' 'शीलं स्वभावे सद्वृत्ते' इत्युभयत्राप्यमरः। सौम्यं मनोज्ञं दर्शनं ईक्षणं यस्याः 'सौम्यो ज्ञे ना त्रिष्वलुग्रे मनोज्ञे सोमदैवते' इति मेदिनी। इदानीं संप्रति गता त्वं मया कुत्र प्रेक्षितव्याऽसि इत्यन्वयः। इति वदंती सती रोदितीत्यर्थः। ऊर्ध्वमवलोक्येति इदं लौकिकानुकरणं लोके हि प्रारब्धनिंदावसरे ऊर्ध्वमवलोक्यते। हं इति रोषभाषणेऽनुनये वा। 'हंहो हंतेति चाधमैः' इति भरतः। हो इति संबोधने 'हं रोषभाषणेऽनुनयेऽपि च' 'हो हौ च हूतौ संबोधनेऽपि च' इत्यभिधानात्। दैवहतक इदं प्राग्व्याख्यातं दुष्टप्रारब्धेत्यर्थः। अकरुण निर्दय इदं दैवहतकस्य विशेषणं। तदेव स्पष्टयति **असामान्येत्यादिना**। सामान्या साधारणी रूपशोभा यस्याः सा सामान्यरूपशोभा 'साधारणं तु सामान्यम्' इत्यमरः। तादृशी न भवतीति असामान्यरूपशोभा। लोकोत्तरसौंदर्यवतीत्यर्थः। तादृशी अनिर्वर्णनीयेति यावत्। निर्मिता उत्पादिता। तत् तर्हि किमितीति इतिर्हेतौ। कुतो हेतोरित्यर्थः। पुनरिति वाक्यालंकारे। ईदृशं उज्जयिनीप्रापणप्रवादेन अदृश्यतारूपं अवस्थांतरं अन्यावस्थामित्यर्थः। प्रापिता प्राप्नोतेर्णिजंतात् क्तप्रत्ययः। इयं सन्निकृष्टा। मद्धस्तवर्तिनीत्यर्थः। रत्नमालापि रत्नस्रगपि जीविते जीवनविषये निर्गता आशा इच्छा यस्याः सा। जीवननिरिच्छया इत्यर्थः। तया सागरिकया कस्यापि अनिश्चितस्य ब्राह्मणस्य द्विजस्य हस्ते करे प्रतिपादय देहि इति एवंप्रकारेण उक्त्वा उदित्वा मम सुसंगतायाः हस्ते समर्पिता दत्ता। तत् ब्राह्मणदानार्थं मद्धस्ते समर्पितत्वाद्धेतोः। यावदिति वाक्यालंकारे। अन्वेषयामि अनुपूर्वकात् इष गतावित्यस्मात् 'हंत्यर्थाश्च' इति स्वार्थे णिच् 'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते' इति ण्यंतस्य शोधनार्थत्वं। नेपथ्यस्य जवनिकायाः अभिमुखं संमुखं। 'पूरणगुणसुहिते'ति षष्ठीसमासनिषेधस्तु कृदव्ययेनेति सिद्धांतः। एषः समीपवर्ती। खलु निश्चये वाक्यालंकारे वा। इत एव अस्मदधिष्ठितदेश एव। दृशिग्रहणात् इदंशब्दात्सप्तम्यंतात्तसिल्। तत् वसंतकस्य प्राप्तेर्हेतोः। एतां रत्नमालां एतस्मिन्नेव वसंतके एव प्रतिपादयामि अर्पयामि। एतस्मिन्निति संप्रदानस्य अधिकरणत्वविवक्षया सप्तमी 'सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे' इतिवत्। ततः सुसंगताविचारानंतरं हृष्टः। हर्षकारणं अनुपदमेव स्पष्टीभविष्यति। **वसंत०**—खलु

मोदअलड्डुआहिं उदरं मे सुपूरिदं किदं । अण्णं च एदं पट्टंसुअजुअलं कण्णाभरणं अ दिण्णं । ता जाव दाणिं पिअवअस्सं पेक्खिस्सं । ( इति परिक्रामति । )

सुसंगता—( रुदती सहसोपसृत्य । ) [1]अज्ज वसंतअ, चिट्ठ दाव तुमं मुहुत्तअं ।

वसं०—(दृष्ट्वा । ) [2]कधं सुसंगदा । सुसंगदे, एत्थ किंणिमित्तं रोदीअदि । ण खु साअरिआए अच्चाहिदं किंपि संवुत्तम् ।

सुसं०—[3]एदं ज्जेव णिवेदइदुकामा । सा खु तवस्सिणी देवीए उज्जइणिं णीदेत्ति प्पवादं कदुअ उवत्थिदे अद्धरत्ते ण जाणीअदि कहिं णीदेत्ति ।

---

वासवदत्तया बन्धनान्मोचयित्वा स्वहस्तदत्तैर्मोदकलड्डुकैरुदरं मे सुपूरितं कृतम् । अन्यच्च । एतत्पट्टांशुकयुगलं कर्णाभरणं च दत्तम् । तद्यावदिदानीं प्रियवयस्यं प्रेक्षिष्ये ।

१. आर्य वसन्तक, तिष्ठ तावत्त्वं मुहूर्तम् ।

२. कथं सुसंगता । सुसंगते, अत्र किंनिमित्तं रुद्यते । न खलु सागरिकाया अत्याहितं किमपि संवृत्तम् ।

३. एतदेव निवेदयितुकामा । सा खलु तपस्विनी देव्योज्जयिनीं नीतेति प्रवादं कृत्वोपस्थितेऽर्धरात्रे न ज्ञायते कुत्र नीतेति ।

---

वाक्यालंकारे । प्रियवयस्येन वत्सराजेन प्रसादितया प्रसन्नतां प्रापितया प्रपूर्वकात्सीदतेर्णिजंतात् कर्मणि क्तः । तत्रभवत्या पूज्यया 'पूज्ये तत्रभवानत्रभवांश्च भगवानपि' इत्यभिधानात् । मोचयित्वा मुक्तं कृत्वा मुंचतेर्णिजंतात् क्त्वा । स्वहस्तेन दत्तैः अर्पितैः अनेन स्वविषये तस्या अत्यादरः सूचितः । मोदकैः भक्षविशेषैः उदरं कुक्षिः पूरितं 'पुरी आप्यायने' । 'गत्यर्थे'ति कर्मणि क्तः । अन्यच्च मोदकभोजनापेक्षयान्यदपि तया दत्तमित्यर्थः । तदेवाह—**एतदित्यादिना** । पट्टांशुकयोः पट्टवस्त्रयोः युगलं युग्मं 'युग्मं तु युगलं युगं' इत्यमरः । कर्णाभरणं कर्णालंकारः । तत् वासवदत्तायाः मयि क्रोधत्यागपूर्वकं मिष्टान्नालंकारादिदानाद्धेतोः प्रियवयस्यं वत्सराजं प्रेक्षिष्ये अवलोकयिष्ये । परिक्रामति इतस्ततो हिंडति । **सुसंगता०**—रुदती अश्रुविमोकं कुर्वती सहसा अकस्मात् मुहूर्तं स्वल्पकालपर्यंतं 'मुहूर्तमल्पकाले स्या'दिति कोशः । 'कालाध्वनोरत्यंतसंयोगे' इति द्वितीया । **वसं०**—दृष्ट्वा अवलोक्य कथमिति प्रश्ने । किंनिमित्तमिति । रोदनं हि दुःखेन संभवति दुःखं च एतस्या इदानीं सागरिकादुःखं विना न संभवतीत्याशंक्याह—**न खल्वित्यादिना** । सागरिकायाः किमपि अत्याहितं महाभीतिः न खलु, खलुर्जिज्ञासायां । संवृत्तं निष्पन्नं एतदेव

**वसं॰**—(सोद्वेगम्) हा भोदि साअरिए, हा असामाण्णरूवसोहे। हा मिदुभासिणि, अदिणिग्घिणं दाणिं देवीए किदं। तदो तदो।

---

१. हा भवति सागरिके, हा असामान्यरूपशोभे। हा मृदुभाषिणि, अतिनिर्घृणमिदानीं देव्या कृतम्। ततस्ततः।

---

सागरिकादुःखमेव। निवेदनक्रियायाः कर्मेदं 'कर्तृकर्मणोरिति' षष्ठी न शंक्या 'नलोके'ति निषेधात्। निवेदयितुं कामोऽभिलाषो यस्याः 'तुंकाममनसोरपि' इति वचनेन कामशब्दे परे तुमुनो मकारलोपः। अहमस्मीति शेषः। सा सागरिका खलु वाक्यालंकारे। तपस्विनी अनुकंपार्हा। दीनेति यावत्। देव्या वासवदत्तया उज्जयिनीं विशालां 'विशालोज्जयिनी समे' इति अमरशेषः। नीता प्रापिता इति प्रवादं जनवादं कृत्वा रात्रेः अर्धं अर्धरात्रं 'अर्धं नपुंसकमि'ति समासः। तस्मिन्नुपस्थिते प्राप्ते सति कुत्र नीतेति न ज्ञायते इत्यन्वयः। **विदू॰**—सोद्वेगं सदुःखमित्यर्थः। उद्वेगकारणं तु सागरिकायाः वासवदत्तया कृतमज्ञातस्थलनयनमेव। हा इति शोके, भवतीति पूज्यायाः संबोधनार्थे 'भवद्युष्मत्सतोस्त्रिषु' इति मेदिनी। असामान्यरूपशोभे। इदं प्राग्व्याख्यातं। मृदु कर्णसुखावहं भाषते तच्छीला तत्संबोधनं 'सुप्यजातावि'ति णिनिः। 'प्रातिपदिकांते'ति णत्वं। नन्वत्र हा शब्दयोगे 'अभितःपरितःसमयानि-कषाहाप्रतियोगेऽपि' इति द्वितीयया भाव्यं इति चेन्न धिङ्मूर्खेत्यादिवत् हाशब्दस्य संबोधनांतैः साकं संबंध एव नास्ति 'संबोधनपदं यच्च तत्क्रियाया विशेषणमि'त्युक्त-त्वात्। किंतु हे सागरिके ते दुरवस्थां हा इति दुरवस्थायां हा इत्यस्यान्वयः। सागरिके इत्यस्य तु जानीहीति अध्याहृतज्ञानक्रियायामन्वयः। अत एव हा तात हा राघव हा देवीत्यादयः प्रयोगाः संगच्छंते। **स्पष्टं चेदं कारकमनोरमायां।** इदानीं सांप्रतं देव्या वासवदत्तया निर्गता घृणा करुणा यस्मात् 'करुणा घृणा'इत्यमरः अतिशयितं निर्घृणं अतिनिर्घृणं। अतिनिर्दयमित्यर्थः। कृतं आचरितं कर्मणोऽविवक्षया 'नपुंसके भावे क्तः' इति क्तः। ततस्तत इति संभ्रमे द्विरुच्चारणमिदं। अत्रांकेऽवमर्शो निर्वहणश्चेति संधिद्वयं प्रसक्तं तत्र तावत् अपवादाख्यावमर्शसंध्यंगस्य 'सा खलु तपस्विनी'त्याद्युक्तस्य लक्षणलेखनसंगत्यांऽगिनोऽवमर्शसंधेर्लक्षणमुच्यते। **तदुक्तं दशरूपके**—'क्रोधेनावमृशेद्यत्र व्यसनाद्वा विलोभनात्। गर्भं निर्भिन्नबीजार्थः सोऽव-मर्शोऽगसंग्रहः'। सोऽवमर्श इत्यंतमेवाऽवमर्शसंधेर्लक्षणं। अंगसंग्रह इति तु अग्रिम-श्लोकान्वयि। अस्यायमर्थः—अवमर्शनमवमर्शः पर्यालोचनमित्यर्थः। तच्च क्रोधात् व्यसनात् विलोभनाद्वा भवितव्यं। अनेनार्थेनेत्यवधारितैकांतफलप्राप्त्यवसायात्मा गर्भसंध्युद्भिन्नबीजार्थसंबंधो विमर्शोऽवमर्शः। यथाऽत्रैव अग्निविद्रवपर्यंतो वास-वदत्ताप्रसक्त्या निरपायरत्नावलीप्राप्त्यवसायात्मा विमर्शो दर्शितः। एतस्य त्रयो-दशांगानि। तानिच—'तत्रापवादसंफेटौ विद्रवद्रवशक्तयः। द्युतिः प्रसंगश्छलनं व्यव-सायो विरोधनं। प्ररोचना विचलनमादानं च त्रयोदश' इति। एतेषां लक्षणानि

सुसं०—एसा रअणमाला ताए जीविदणिरासाए अज्जवसंतअस्स हत्थे पडिवादेसित्ति भणिअ मम हत्थे समप्पिदा। ता णं गेण्हदु अज्जो एदं।

वसं०—(सास्रं सकरुणं कर्णौ पिधाय।) भोदि ण मम ईदिसे पत्थावे एदं वोढुं हत्थो पसरदि।

(इत्युभौ रुदितः।)

सुसं०—(अञ्जलिं बध्वा।) ताए एव्व अणुग्गहं करंतो अंगीकरेदु एदं अज्जो।

---

१. एषा रत्नमाला तया जीवितनिराशयार्यवसन्तकस्य हस्ते प्रतिपादयेत्युक्त्वा मम हस्ते समर्पिता। तन्ननु गृह्णात्वार्य एताम्।

२. भवति। न म ईदृशे प्रस्ताव एतद्वोढुं हस्तः प्रसरति।

३. तस्या एवानुग्रहं कुर्वन्नङ्गीकरोत्वेतदार्य।

---

तत्र तत्र तत्तदंगप्रदर्शनविषये प्रदर्शयिष्यामः। तत्रैषामंगानां मध्येऽपवादशक्तिव्यवसायप्ररोचनादानानि प्रधानानि अर्थादितराण्यप्रधानानि। यादृशांगप्रसंगेन एतत्संधेरत्र लक्षणं प्रदर्शितं तदपवादाख्यं नामाऽत्रांगं। तदुक्तं 'दोषप्रख्याऽपवादः स्या'दिति। **सुसंगता**—एषा रत्नमाला मन्निकटवर्तिनीत्यर्थः। जीविते जीवने निर्गता आशा इच्छा यस्याः। तया सागरिकया। अस्य मम हस्ते समर्पितेत्यनेन अन्वयः। प्रतिपादय देहि। तत् तव दानार्थं सागरिकया मद्धस्ते मालार्पणाद्धेतोः। नन्वित्यामंत्रणे। आर्यः वसंतकः गृह्णातु स्वीकरोतु। **वसंत०**—सास्रं सबाष्पं सकरुणं सदयं अनयोरध्याहृतभाषणक्रियायामन्वयः। अस्रकरुणयोः कारणे स्पष्टे एव। कर्णौ पिधाय हस्ताभ्यामाच्छाद्य 'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः। हस्ताभ्यां कर्णपिधानं अत्यंतानुचिते कर्मणि स्वस्याप्रवृत्तिबोधकं लोके। तथा च सागरिकाया एतादृश्यवस्थायां तद्दत्तमालाग्रहणमत्यंतमनुचितमित्यर्थः। तदेवाह—**भवतीत्यादिना**। भवति सुसंगते ईदृशे मुखेन वर्णयितुमप्यनर्हे इत्यर्थः। प्रस्तावे प्रसंगे 'प्रस्तावः स्यादवसरः' इत्यमरः। एतत् मालारूपं भूषणं वोढुं गृहीतुं हस्तः करः न प्रसरति न प्रवृत्तो भवतीत्यर्थः। उभौ सुसंगतावसंतकौ 'पुमान् स्त्रिया' इति पुंसः शेषः। रुदित इति पाठः। रुदत इति तु लेखकप्रमादः। **सुसंग०**—अंजलिं करसंपुटं बध्वा कृत्वा तस्या एव सागरिकाया एव अनुग्रहं 'चरमदानस्वीकरणेन तन्मनःप्रमोदजननरूपानुग्रहं कुर्वन् आचरन् एतत् मालारूपं भूषणं आर्यः वसंतकः अंगीकरोतु स्वीकरोतु। एतदनंगीकारे हि तन्मनसः खेदः

वसं०—(विचिन्त्य ।) [1]अहवा, उवणेहि । जेण इमाए ज्जेव साअरिआविरहकुंठिदं पिअवअस्सं विणोदेमि ।

(सुसंगता वसन्तकस्य हस्ते रत्नमालां ददाति)

वसं०—(गृहीत्वा निरूप्य सविस्मयम् ।) [2]भोदि, कुदो उण ईदिसस्स अलंकारस्स आगमो ।

सुसं०—[3]अज्ज, मए वि सा कोदूहलेण पुच्छिदा आसि ।

वसं०—[4]तदा ताए किं भणिदं ।

सुसं०—[5]तदो सा उद्धं पेक्खिअ दीहं णिस्ससिअ, सुसंगदे, किं दाणिं तुह इमाए कधाएत्ति भणिअ रोदिदुं पउत्ता ।

---

१. अथवा, उपनय । येनैतयैव सागरिकाविरहकुण्ठितं प्रियवयस्यं विनोदयामि ।

२. भवति, कुतः पुनरीदृशस्यालंकारस्य आगमः ।

३. आर्य, मयापि सा कौतूहलेन पृष्टाऽऽसीत् ।

४. ततस्तया किं भणितम् ।

५. ततः सोर्ध्वं प्रेक्ष्य दीर्घं निःश्वस्य, सुसंगते, किमिदानीं तवानया कथयेति भणित्वा रोदितुं प्रवृत्ता ।

---

स्यात् । अत एतद्ग्रहणेन तन्मनःसुखरूपमनुग्रहं करोत्वित्यर्थः । **वसं०**—विचिंत्येति चिंताकारणं तु दुःखेन एतत्स्वीकारे मनः प्रवृत्तिर्नैव जायते अस्वीकारे तन्मनसः खेदः इत्युभयतः स्पाशा रज्जुः । तथाचोभयमपि विचिंत्य ग्रहणाग्रहणयोर्ग्रहणमेव प्रशस्तं इत्यभिप्रेत्याह—**अथवेत्यादिना** । अथवेति पक्षांतरे उपनय देहीत्यर्थः । कुतो देहीत्यत आह—**येनेति** । येन ग्रहणरूपहेतुना एतयैव रत्नमालयैव सागरिकायाः विरहेण वियोगेन कुंठितं प्रतिहतं सकलक्रियासु मंदमित्यर्थः । 'कुंठो मंदः क्रियासु यः' इत्यमरः । विनोदयामि सुखयामीत्यर्थः । **वसं०**—गृहीत्वा मालामित्यार्थिकं निरूप्य निरीक्ष्येत्यर्थः । सविस्मयमिति एतादृशममूल्यं रत्नमेतया कथं लब्धमिति विस्मयः । तदेवाह—**भवतीत्यादिना** । ईदृशस्य अनिर्वर्णनीयस्य । अमूल्यस्येति यावत् । अलंकारस्य कुतः कस्मात् पुरुषादित्यर्थः । आगमः प्राप्तिः 'आगमस्त्वागतौ शास्त्रेऽपि' इति हैमः । **सुसंग०**—कुतूहलेन कौतुकेन । सा सागरिका । मयाऽपि इति यथा तव विस्मयः तथा मयापि विस्मयेन पृष्टेत्यर्थः । **वसं०**—ततः त्वत्प्रश्नानंतरं तया सागरिकया किं भणितं किमुक्तमित्यर्थः । **सुसंगता०**—सा सागरिका ऊर्ध्वं ऊर्ध्वभागं प्रेक्ष्य अवलोक्य दीर्घमायतं निःश्वस्य श्वासं त्यक्त्वा सुसंगते इदानीं तव अनया कथया किं इत्यन्वयः ।

वस०—[1]णं कधिदं एव्व ताए सामण्णजणदुल्लहेण इमिणा परिच्छदेण । सव्वधा महाभिजणसमुप्पण्णाए ताए होदव्वं । सुसंगदे, पिअवअस्सो दाणिं कहिं ।

सुसं०—[2]अज्ज, एसो खु भट्टा देवीभवणादो णिक्कमिअ फडिअसालां उवगदो । ता गच्छदु अज्जो । अहं वि देवीए वासवदत्ताए परिचारिणी भविस्सं ।

( इति निष्क्रांतौ । )

इति प्रवेशकः ।

---

( ततः प्रविशत्यासनस्थो राजा । )

राजा—( विचिन्त्य । )

सव्याजैः शपथैः प्रियेण वचसा चित्तानुवृत्त्याधिकं
वैलक्ष्येण परेण पादपतनैर्वाक्यैः सखीनां मुहुः ॥

---

१. ननु कथितमेव तया सामान्यजनदुर्लभेनानेन परिच्छदेन । सर्वथा महाभिजनसमुत्पन्नया तया भवितव्यम् । सुसंगते, प्रियवयस्य इदानीं कुत्र ।

२. आर्य, एष खलु भर्ता देवीभवनान्निष्क्रम्य स्फटिकशालामुपगतः । तद्गच्छत्वार्यः । अहमपि देव्या वासवदत्तायाः परिचारिणी भविष्यामि ।

---

विदूष०—नन्विति आमंत्रणे । कथितमेव वर्णितमेव सामान्यः साधारणः यो जनः लोकः तेन दुर्लभेन दुष्प्रापेण परिच्छदेन अलंकारेण तद्वारा तया कथितमित्यन्वयः । किं कथितं तदाह—**सर्वथेत्यादिना** । सर्वथा सर्वप्रकारेण महान् श्रेष्ठो योऽभिजनः कुलध्वजभूतः 'अभिजनः कुले कुलध्वजे जन्मभूम्यां' इति हेमचंद्रः । तस्मात् समुत्पन्नया तया सागरिकया भवितव्यमिति । प्रियवयस्यः वत्सराजः इदानीं सांप्रतं कुत्र वर्तते इति शेषः । **सुसंगता**—एष खल्विति । खल्वित्यवधारणे । एष एवेत्यर्थः । इदानीमेवेति यावत् । देव्याः वासवदत्तायाः भवनात् गृहात् स्फटिकमणीनां या शाला गृहं तामुपगतः प्राप्तः । तत् भवतः तद्दर्शनापेक्षित्वाद्धेतोः गच्छतु । अर्थात्तन्निकटमित्यर्थः । अभीक्ष्णं परितः चरति सेवार्थं सा परिचारिणी 'बहुलमाभीक्ष्ण्ये' इति णिनिः । इति निष्क्रान्तौ । अत्रापि 'पुमान् स्त्रिया' इति पुंसः शेषः । **इति प्रवेशक इति** । इति समाप्त इत्यर्थः । प्रवेशकलक्षणं प्रागुक्तं । तत इति सुसंगताविदूषकनिर्गमनानंतरमित्यर्थः । आसने पीठे तिष्ठतीति आसनस्थः 'सुपी'ति योगविभागात् स्थाधातोः कप्रत्ययः । 'पीठमासनं' इत्यमरः । विचिंत्य विचार्येत्यर्थः । अध्याहृताहेति क्रियापेक्षया विचिंतनक्रियायाः पूर्वकालिकत्वात् क्त्वाप्रत्ययः साधुः । विचिंतनक्रियायाः कर्म तु यत्पूर्वं स्वयं वासवदत्तानिकटे कृतं तदेव । तदाह—**सव्याजैरि-**

प्रत्यासत्तिमुपागता न हि तथा देवी रुदत्या यथा
प्रक्षाल्यैव तयैव बाष्पसलिलैः कोपोऽपनीतः स्वयम् ॥ १ ॥

(सोत्कण्ठं निःश्वस्य।) तावदिदानीं देव्यां प्रसादितायां सागरिकाचिन्तैव केवलं मां बाधते। कुतः

अम्भोजगर्भसुकुमारतनुस्तदासौ
कण्ठग्रहे प्रथमरागघने विलीय ॥

---

त्यादिना। व्याजेन अपदेशेन सहिताः सव्याजाः तैः शपथैः। देवीविश्वासार्थं शपथाः कृताः किंतु यथा स्वस्य मिथ्याशपथदोषो मा भूत् देवी च विश्वसितु। एतादृशभाषणशैल्या निष्पादिता इत्यर्थः। प्रियेण अभीष्टेन वचसा भाषितेन। तथा अधिकं यथा तथा इदं चित्तानुवर्तनक्रियाया विशेषणं। शोभनं पचतीतिवत् द्वितीया। चित्तस्य अंतःकरणस्य। अर्थाद्देव्या इत्यर्थः। अनुवृत्त्या अनुवर्तनेन अनुकूलाचरणेनेति यावत्। परेण श्रेष्ठेन अतिशयेनेति यावत्। 'परः श्रेष्ठारिदूरान्योत्तरे क्लीबं तु केवले' इति मेदिनी। वैलक्ष्येण दीनत्वेन। इदं व्याख्यानं गोविंदव्याख्यानुरोधेन वस्तुतः विलक्षशब्दो दीनतायां नोपलब्धः किंतु विस्मितार्थे 'विलक्षो विस्मयान्विते' इति कोशाल्लभ्यते। तथाच परेण वैलक्ष्येण इदं तु प्रत्यासत्तेः साक्षान्न हेतुः किं तु पादपतनैरित्यस्य विशेषणद्वारा प्रत्यासत्तेर्हेतुः। तथाच शपथैः प्रियभाषणेन अधिकचित्तानुवृत्त्या च एतस्याः प्रत्यासत्तिर्नास्ति इति महता विस्मयेन यानि पादपतनानि पादयोः चरणयोः पतनानि नमस्काराः तैः इति तात्पर्यं। तथा सखीनां आलीनां मुहुः वारंवारं वाक्यैः भर्त्र्या महाराजस्यापराधः सकृत् सोढव्यः। महाराजः पश्चात्तापेन देव्याः पादौ पतति अतो देव्या क्रोधस्त्याज्यः इत्येवंरूपैः वाक्यैः देवी तथा तेन प्रकारेण प्रत्यासत्तिं प्रसन्नतां न ह्युपगता न प्राप्ता। यथा येन प्रकारेण रुदत्या रोदनं कुर्वत्या तयैव वासवदत्तयैव बाष्पाण्येव सलिलानि उदकानि तैः प्रक्षाल्यैव। अत्र प्रक्षाल्येवेति पाठः क्वचिदुपलब्धश्चेत्स सुष्ठुतमः। क्षालयित्वैव स्वयं आत्मना कोपः क्रोधः अपनीतः दूरीकृतः। मया बहुप्रयत्नानामाचरणे कृतेऽपि तैः प्रयत्नैः तादृशी देवी सुप्रसन्ना न जाता यथा बहु प्ररुद्य तया स्वयं कोपोऽपनीतः। तत्र कोपापनयनं वाष्पसलिलप्रक्षालनत्वेन उत्प्रेक्ष्यते। उत्प्रेक्षारूपकावलंकारौ। अत्र सागरिकालाभविरोधिवासवदत्ताकोपप्रशमनाच्छक्त्याख्यं विमर्शसंधेरंगं। तदुक्तं भरतेन– 'विरोधप्रशमो यस्तु सा शक्तिः परिकीर्तिता' इति। शार्दूलविक्रीडितं वृत्तं ॥ १ ॥ सोत्कंठं उत्कलिकया सहितं। उत्कंठा च सागरिकाविषयिणीति अनुपदमेव स्पष्टीभविष्यति। निःश्वस्येति सागरिकावियोगजन्यदुःखान्निःश्वासः। इदानीं सांप्रतं। यावदिति वाक्यालंकारे। देव्यां वासवदत्तायां प्रसादितायां कृतप्रसादायां सत्यामित्यर्थः। 'यस्य च भावेन भावलक्षणं' इति सप्तमी। सागरिकायाः चिंतैव आध्यानमेव 'स्याच्चिंता स्मृतिराध्यानं' इत्यमरः। केवलं असहायमित्यर्थः। बाधनक्रियाया विशेषणमिदं। बाधते पीडयति कुतः कस्मात् कारणात् 'हेतौ' इति पंचमी। अनेन बाधनकारणप्रश्नः कृतः। तदेवाह—**अंभोजगर्भेति**। अंभोजं कमलं 'सप्तम्यां

सद्यः पतन्मदनमार्गणरन्ध्रमार्गै-
र्मन्ये मम प्रियतमा हृदयं प्रविष्टा ॥ २ ॥

(विचिन्त्य।) योऽपि मे विश्रामस्थानं वसन्तकः सोऽपि देव्या संयतः। तत्कस्याग्रतो बाष्पमोक्षं करिष्ये। (इति निःश्वसिति।)

(ततः प्रविशति वसन्तकः।)

---

जनेर्डः' इति डप्रत्ययः। तस्य गर्भः मध्यः 'गर्भः कुक्षौ शिशौ संधौ भ्रूणे पनसकंटके। मध्येऽग्नावपवरके' इति हैमः। तद्वत्सुकुमारा कोमला 'सुकुमारं तु कोमलं मृदुलं मृदु' इत्यमरः। तनुः देहो यस्याः सा। असौ विप्रकृष्टा सागरिका 'अदसस्तु विप्रकृष्टे' इत्युक्तेः। प्रथमः आदिमः मुख्यो वा 'प्रथमः स्यात्प्रधानाद्योः' इत्यनेकार्थः। स चासौ रागः अनुरागः 'रागोऽनुरागे मात्सर्ये' इत्यभिधानात्। निरतिशयानुराग इति यावत्। तेन घने निबिडे कंठस्य ग्रहः ग्रहणं 'ग्रहवृदृनिश्चिगमश्चेति' भावेऽप्। कंठाश्लेष इत्यर्थः तस्मिन्। विलीय द्रवीभूय। सद्यः तत्क्षणे। आलिंगनावसरे इत्यर्थः। 'सद्यः सपदि तत्क्षणे' इत्यमरः। 'सद्यः परुत्परारि' इत्यादिना निपातितः। पतंतः अंतः प्रविशंतः ये मदनस्य कामस्य मार्गणाः शराः 'कलंबमार्गणशराः' इत्यमरः। तेषां रंध्राणि छिद्राणि तान्येव मार्गाः अंतःप्रवेशपथाः तैः मम हृदयमंतःकरणं प्रविष्टा कृतप्रवेशा इति मन्ये जानामि। ज्ञाने विशिष्टं कर्म। यथा किंचिद्द्रवीभूतं वस्तु छिद्रेण अंतः प्रविशति तद्वदियं प्रिया सागरिका प्रथमरागालिंगने अतीव रागवैशिष्ट्यात् तादृशानंदरसतां प्राप्य तत्काले मदंगे मदनबाणजनितक्षतैः अंतः प्रविष्टेति तात्पर्यार्थः। अत्र मन्ये इति उत्प्रेक्षाव्यंजकं। तदुक्तं—'मन्ये शंके ध्रुवं प्रायो नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः' इति। उपमोत्प्रेक्षालंकारौ। तयोश्चांगांगिभावः संकरः। वसंततिलकावृत्तं ॥ २ ॥ विचिंत्य विचार्येत्यर्थः। कथमिदानीं करणीयमित्याकारको विचारः। तमेव विचारं स्पष्टयति—**योऽपीति**। विश्रामस्य विश्रांतेः स्थानं। स्थलमित्यर्थः। ननु विपूर्वात् श्रमधातोर्घञि वृद्धिः प्राप्ता तथापि 'नोदात्तोपदेशस्य मांतस्यानाचमेः' इति निषेधात् **कथं विश्राम इति प्रयोगः** अत एव विश्राम इति तु अपाणिनीयमित्युक्तमिति चेन्न। निवृत्तप्रेषणश्रमधातोः प्राकृतेऽर्थे णिचि तदंतात् 'एरच्' इति भावे अच् प्रत्ययः। नच 'मितां ह्रस्वः' शंक्यः 'वा चित्तविरागे' इत्यतो वेत्यनुवर्त्य व्यवस्थितविभाषाश्रवणात्। अत एव 'रोगी चिरप्रवासी परान्नजीवी परावसथशायी। यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः' इति मान्योक्तिः संगच्छते। अत एव कौमुद्यां अपाणिनीयमित्युक्तं **नत्वशुद्धमिति**। संयतः बद्धः। 'बद्धे कीलितसंयतौ' इत्यमरः। तत् वसंतकस्य बद्धत्वात्। बाष्पस्य नेत्रोदकस्य मोक्षणं त्याजनं। निःश्वसितीति श्वस प्राणने लट्। तिपि 'रुदादिभ्यः सार्वधातुके' इति इडागमः। निःश्वासकरणं दुःखमिति स्पष्टमेव। ततः पूर्वोक्तरीत्या राजचिंतानंतरं।

वस०—(परिक्रम्यावलोक्य च सविस्सयम्।) एसो खु पिअवअस्सो णिरंतरोक्कंठापरिक्खामंपि सलाहणिज्जां तणुं समुव्वहंतो उदिदो दुदिआचंद्दो विअ अहिअदरं सोहदि। ता जाव णं उवसप्पामि। (उपसृत्य।) सोत्थि भवदे। भोः, दिट्ठिआ वड्ढसे। देवीहत्थगदेणावि मए पुणोवि एदेहिं अच्छीहिं जं दिट्ठोसि।

राजा—(दृष्ट्वा सहर्षम्) अये, वसन्तकः प्राप्तः। सखे, परिष्वजस्व माम्। (विदूषकः परिष्वजति।)

---

१. एष खलु प्रियवयस्यः निर्भरोत्कण्ठापरिक्षाममपि श्लाघनीयां तनुं समुद्वहन्नुदितो द्वितीयाचन्द्र इवाधिकतरं शोभते। तद्यावदेनमुपसर्पामि। स्वस्ति भवते। भोः, दिष्ट्या वर्धसे। देवीहस्तगतेनापि मया पुनरप्येतैरक्षिभिर्यद्दृष्टोऽसि।

---

वसंतकः—परिक्रम्य इतस्ततो हिंडित्वा। अवलोक्य अर्थाद्राजानं। सविस्मय आश्चर्यं तेन सहितं अध्याहृतभाषणक्रियाया विशेषणं चैतत्। विस्मयकारणं तु तद्भाषणेन स्पष्टीभविष्यति। एषः समीपतरवर्ती। खल्विति वाक्यालंकारे। प्रियः इष्टः स चासौ वयस्यः। निर्गतं अंतरं अवकाशो यस्याः सा निरंतरा। घनेत्यर्थः एतादृशी या उत्कंठा तया परिक्षामं कृशं यथा तथा। समुद्वहनक्रियाविशेषणाभिप्रायेणेदं। वस्तुतस्तु परिक्षामामिति पाठश्चेत्साधीयान्। अत एव परिक्षामामपीति अपिशब्दस्वारस्यं संगच्छते कृशामपि श्लाघनीयामिति हि तदर्थः। श्लाघनीयां स्तुत्यां। मनोहरामिति यावत्। तनुं समुद्वहन् धारयन्। उदितः उत्कर्षं प्राप्तः। पक्षे उदयाचलं प्राप्तः। उदितः इत्यत्र उत्पूर्वकादिणो 'गत्यर्थाकर्मके' ति कर्तरि क्तः। द्वितीयायाश्चंद्रः द्वितीयाचंद्रः। संबंधश्च राहोः शिर इतिवत् अभेदः। 'प्रतिपन्नाम विज्ञेया चंद्रस्य प्रथमा कला' इत्यभियुक्तोक्तेः। अधिकतरं 'द्विवचनविभज्येति' तरप्। शोभनक्रियाया विशेषणमिदं। यावदिति वाक्यालंकारे। एनमिति शोभनक्रियायां कर्तृत्वेन उपात्तस्यैव द्वितीयवाक्ये उपसर्पणक्रियायां कर्मत्वेनोपादानेन अन्वादेशत्वादेनादेशः। उपसर्पामि समीपं गच्छामि। स्वस्ति भवते भवते स्वस्ति। अस्तु इति शेषः। अस्तीति वा। 'नमःस्वस्ती'ति चतुर्थी। भोः संबोधने। वर्धसे वृद्धिं प्राप्नोषि। एतद्दिष्ट्या आनंदकारकमित्यर्थः। आनंदमेव प्रकटयति—देवीत्यादिना। देव्याः वासवदत्तायाः हस्तं करं गतेनापि प्राप्तेनापि पुनरपि भूयोपि एताभ्यामक्षिभ्यां नेत्राभ्यां। यत् यस्माद्धेतोः। दृष्टोऽसि अवलोकितोसि। क्रुद्धायाः वासवदत्तायाः हस्तं गतस्य मम तव दर्शनं दुर्लभं तदपि जातं। अतो मम तव चानंद इति तात्पर्यं। अत एव हस्तगतेनापीति अपिशब्दस्वारस्यं। राजा—दृष्ट्वा अर्थाद्विदूषकं। सहर्षमिति हर्षकारणं स्पष्टमेव तदेव दर्शयति—अये इत्यादिना। यमहमचिंतिषं सोऽयं वसंतकः प्राप्त इति हर्षः। परिष्वजस्वेति प्राप्तकाले लोट्।

राजा—(परिष्वज्य) वेषेणैव निवेदितस्त्वया देव्याः प्रसादः । तत्कथ्यतामिदानीं सागरिकायाः का वार्तेति ।

वस०—(सवैलक्ष्यमधोमुखस्तिष्ठति ।)

राजा—वयस्य, किं न कथयसि ।

वस०—अप्पिअंत्ति णिवेदिदुं दे ण पारेमि ।

राजा—(सोद्वेगं ससंभ्रमम् ।) वयस्य, कथमप्रियम् । किं व्यक्तमेवोत्सृष्टं जीवितं तया । हा प्रिये सागरिके ! (इति मोहं नाटयति ।)

वस०—(ससंभ्रमम् ।) समस्ससदु समस्ससदु पिअवअस्सो ।

राजा—(समाश्वस्य सास्रम् ।)

प्राणाः परित्यजत काममदक्षिणं मां
रे दक्षिणा भवत मद्वचनं शृणुध्वम् ।

---

१. अप्रियमिति निवेदयितुं ते न पारयामि ।

२. समाश्वसितु समाश्वसितु प्रियवयस्यः ।

---

आलिंगनस्य कालः प्राप्त इत्यर्थः । 'उपसर्गात्सुनोति' इति षत्वं । **राजा**—परिष्वज्य आलिंग्य । वेषेणैव प्रसाददत्तभूषणादिवेषेणैवेत्यर्थः । देवी तावत् प्रसन्नैव परंतु सागरिकायाः का स्थितिः इत्यभिप्रेत्याह—**तदित्यादिना** । तत् देव्याः प्रसन्नत्वाद्धेतोः । इदानीं सांप्रतं सागरिकायाः । का वार्ता वृत्तांतः । सवैलक्ष्यमिति सविस्मयमित्यर्थः । अधो मुखं यस्य स अधोमुखः । अनेन विस्मयदीनते गम्येते । कथं वार्तापि एतस्या न ज्ञायते इति विस्मयः । तद्वार्ताभावात् दुःखेन दीनता । किं कुत इत्यर्थः । प्रश्नार्थे चायं किंशब्दः । न कथयसीत्यस्य कर्म तु उपक्रांता वार्तैव । **वसन्त०**—अप्रियमिति हेतोः । ते तुभ्यं निवेदितुं कथयितुमित्यर्थः । न पारयामि एतत् व्याख्यातं । **राजा**—सोद्वेगं सदुःखमित्यर्थः । दुःखकारणमप्रियमिति विदूषकोक्तिरेव । ससंभ्रममिति संभ्रमस्त्वरा । वयस्य, अप्रियं कथं केन प्रकारेण । अप्रियत्वं स्वयमेवाशंकते—**किमित्यादिना** । तया सागरिकया जीवितं उत्सृष्टं इति व्यक्तमेव स्पष्टमेव किमिति प्रश्नः । मोहं नाटयतीति । मोहनाटनं तु भूतलादौ निश्चेष्टपतनं । **वसन्त०**—ससंभ्रमं सत्वरं प्रियवयस्यः समाश्वसितु समाश्वसितु इत्यन्वयः । **राजा**—अस्रैः नेत्रोदकैः सहितं यथा तथा सास्रं । एतच्च अध्याहृतभाषणक्रियाया विशेषणं । तदेव भाषणं दर्शयति—**प्राणा इत्यादिना** । हे प्राणाः असवः अदक्षिणं दक्षिणः परच्छंदानुवर्ती तादृशो न भवतीति अदक्षिणः तं । सागरिकामननुवर्तमानमित्यर्थः । 'दक्षिणो दक्षिणोद्भूतपरच्छंदानुवर्तिनि' इति मेदिनी । मां परित्यजत परिजहितेत्यर्थः । रे इति संबोधने । दक्षिणाः सागरिकानुकूला इत्यर्थः । भवत स्तेत्यर्थः । यदि दक्षिणा न स्म चेत् का नो हानिः तत्राह—**मद्वचनमिति** । मम वचनं

शीघ्रं न यात यदि तन्मुषिताः स्थ मूढा
याता सुदूरमधुना गजगामिनी सा ॥ ३ ॥

वस०—¹भोः, मा अण्णधा संभावेहि । सा खु तवस्सिणी देवीए उज्जइणिं पेसिदत्ति सुणीअदि । तदो मए अप्पिअंत्ति करीअ ण भणिदं ।

राजा—कथमुज्जयिनीं प्रेषिता । अहो निरनुरोधा मयि देवी । वयस्य, केन तवैतदाख्यातम् ।

वस०—²भोः, सुसंगदाए । अण्णं च । मम हत्थे ताए केणावि कज्जेण इअं रअणमाला पेसिदा ।

---

१. भोः, मान्यथा संभावय । सा खलु तपस्विनी देव्योज्जयिनीं प्रेषितेति श्रूयते । अतो मयाऽप्रियमिति कृत्वा न भणितम् ।

२. भोः, सुसंगतया । अन्यच्च । मम हस्ते तया केनापि कार्येणेयं रत्नमाला प्रेषिता ।

---

भाषणं मद्वचनं 'प्रत्ययोत्तरपदयोश्च' इति मपर्यंतभागस्य मादेशः । शृणुध्वं आकर्णयत । हानिमेव स्पष्टयति—**शीघ्रमित्यादिना** । हे मूढाः, यदि शीघ्रं न यात न गच्छत तत् तर्हि मुषिताः चोरिताः । अथवा तन्मुषिता इति एकमेव पदं तया सागरिकया मुषिताः वंचिताः 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवद्भावः । मद्वद्यूयं वंचिता मा भूतेत्यर्थः । गज इव अभीक्ष्णं गच्छतीति गजगामिनी 'बहुलमाभीक्ष्ण्ये' इति णिनिः । सा सागरिका अधुना इदानीं 'अधुना' इति निपातनात्साधुः । सुतरां दूरं विप्रकृष्टं याता गता । भवतां शीघ्रगमनाभावे तस्या अलाभात् मद्वद्वंचिता भविष्यथेति तात्पर्यं । पर्यायोक्तमलंकारः । वसंततिलकावृत्तम् ॥ ३ ॥ **वसन्त०**—भोः वयस्य, अन्यथा अन्यप्रकारेण मदभिप्रायादन्यप्रकारेण । मृतेत्येवं प्रकारेणेत्यर्थः । 'प्रकारवचने थाल्' । मा संभावय मा संभावनां कार्षीः । वास्तवस्त्वदभिप्रायः कः इत्यत आह—**सा खल्वित्यादिना** । सा सागरिका । खलु वाक्यालंकारे । देव्या वासवदत्तया उज्जयिनीं विशालां 'विशालोज्जयिनी समे' इत्यमरशेषः । प्रेषिता प्रापिता इति श्रूयते आकर्ण्यते । अतः अतो हेतोरित्यर्थः । अप्रियमिति अनिष्टमिति । **राजा**—अहो इति आश्चर्ये खेदे वा । देवी वासवदत्ता मयि विषये निर्गतः अनुरोधः अनुवर्तनं यस्याः । 'अनुरोधोऽनुवर्तनं' इत्यमरः । मत्प्रतीपाचरणकर्त्रीत्यर्थः । कथमपि मां न गणयतीति यावत् । एतत् वासवदत्तया सागरिका उज्जयिनीं नीतेति चरित्रमित्यर्थः । आख्यातं कथितं । अत्र 'अहो निरनुरोधा मयि देवी' इत्यनेन वासवदत्तयेष्टासंपादनाद्वत्सराजस्यापमानात् छलनं नामांगं । तदुक्तं 'अपमानादिजनितं संमोहं छलनं भवेत्' इति । **वसन्त०**—**अन्यच्चेति** । न केव-

राजा—किमपरं, मामाश्वासयितुम् । तद्वयस्य, उपनय ।

(विदूषक उपनयति ।)

राजा—(गृहीत्वा रत्नमालां निर्वर्ण्य हृदये निधाय ।) अहह !

कण्ठाश्लेषं समासाद्य तस्याः प्रभ्रष्टयानया ।
तुल्यावस्था सखीवेयं तनुराश्वास्यते मम ॥ ४ ॥

वयस्य, त्वं परिधत्स्वैनाम् येन वयमेनामपि तावद्दृष्ट्वा धृतिं करिष्यामः ।

वसन्त०—[1]भो, जं भवं आणवेदि । (इति कण्ठे परिदधाति ।)

राजा—(सास्रं निश्वस्य ।) वयस्य, दुर्लभं पुनर्दर्शनं प्रियायाः ।

वसन्त०—(सभयं दिशोऽवलोक्य ।) [2]भो, मा एव्वं एत्थ उच्चं मंतेहि । कदावि केवि एत्थ संचारेदि ।

---

१. भोः, यद्भवानाज्ञापयति ।

२. भोः, मैवमत्रोच्चैर्मन्त्रय । कदापि केचिदत्र संचरन्ति ।

---

त्वमिदमाख्यातमेव किंतु अन्यदपि जातं इति अन्यकार्यसमुच्चयार्थश्चकारः । तदेव कार्यमाह–**मम हस्ते इत्यादिना** । तया सागरिकया केनापि अनिश्चितेनेत्यर्थः । कार्येण हेतुना इयं रत्नमाला मम हस्ते प्रेषिता प्रापितेत्यन्वयः **राजा**—अपरं ममाश्वासनादितरत् इत्यर्थः । एतस्य पूर्वोक्तक्रमप्राप्तं कार्यं विशेष्यं । एवं च अपरं किं कार्यं मामाश्वासयितुं प्रेषितेत्यर्थः । तत् मदाश्वासनार्थं प्रेषणाद्धेतोः । उपनय समीपं प्रापय । आनयेति यावत् । उपनयति ददाति । **राजा**—रत्नमालां गृहीत्वा निर्वर्ण्य सूक्ष्मदृष्ट्याऽवलोक्य । अहहेति खेदे 'अहहेत्यद्भुते खेदे' इत्यमरः । तस्याः सागरिकायाः कंठस्याऽऽश्लेषः आलिंगनं तं समासाद्य प्राप्य प्रभ्रष्टया च्युतया अनया रत्नमालया तुल्यावस्था तुल्या समा अवस्था तत्कंठाश्लेषं समासाद्य प्रभ्रष्टतारूपा दशा यस्याः सा 'वाच्यलिंगाः समस्तुल्य' इत्यमरः । 'दशावस्था' इत्यमरः ॥ सखीव आलीव । यथा तुल्यावस्था इतरा सखी भवति तद्वदियमपीत्यर्थः । मम तनुः देहः आश्वास्यते संभाव्यते । श्वस प्राणने णिजंतात्कर्मणि लट् । उत्प्रेक्षालंकारः । अनष्टुब्वृत्तं ॥ ४ ॥ एनां मालां परिधत्स्व धारय येन धारणेन वयं राजत्वाद्बहुमानवत्त्वेन बहुवचनं । अथवा भृत्यसाहित्याभिप्रायेण बहुवचनं । एनामपीति सागरिकाभावे एनामपीत्यपिशब्दस्वारस्यं । तावत् अवधौ । सागरिकाप्राप्तिपर्यंतमित्यर्थः । दृष्ट्वा अवलोक्य धृतिं संतोषं धैर्यं वा 'धृतिर्नेष्टौ स्त्रियां तुष्टौ योगभिद्धैर्यधारणे' इति मेदिनी । एतद्दर्शनेनापि मनो विनोदयामेत्यर्थः । **वसन्त०**—यद्भवानाज्ञापयतीति । तत्करोमीति शेषः । परिदधाति धारयति । **राजा**—सास्रं भाषणक्रियाया विशेषणं । सास्रत्वं निःश्वसनं च दुःखकार्यं । तदेवाह–**वयस्येति** । प्रियायाः सागरिकायाः पुनः भूयः दर्शनं विलोकनं दुर्लभं दुष्प्रापं 'ईषद्दुःसुषु' इत्यादिना कर्मणि खल् । **वसन्त०**—सभयं ससाध्वसं । भयकारणं विदूषकभाषणेनैव स्पष्टीभवि-

( ततः प्रविशति वेत्रहस्ता वसुंधरा )

**वसुंधरा**—( उपसृत्य । ) जेअदु जअदु भट्टा । भट्टा, एसो खु रुमण्णदो भाइणेओ विजअवम्मा पिअमिव किंपि णिवेदिदुकामो दुआरे चिट्ठदि ।

**राजा**—वसुंधरे, अविलम्बितं प्रवेशय ।

**वसु०**—जं देवो आण्णवेदि । ( निष्क्रम्य विजयवर्मणा सह पुनः प्रविश्य च । ) विजअवम्म, एसो खु भट्टा । उपसप्पदु अज्जो ।

**विजयवर्मा**—( उपसृत्य । ) जयतु जयतु देवः । देव, दिष्ट्या वर्धसे रुमण्वतो विजयेन ।

**राजा**—साधु रुमण्वन्, साधु । अचिरान्महत्प्रयोजनमनुष्ठितम् । विजयवर्मन्, इत आस्यताम् । ( विजयवर्मा उपविशति । )

---

१. जयतु जयतु भर्ता । भर्तः, एष खलु रुमण्वतो भागिनेयो विजयवर्मा प्रियमिव किमपि निवेदितुकामो द्वारि तिष्ठति ।

२. यद्देव आज्ञापयति । विजयवर्मन्, एष खलु भर्ता । उपसर्पतु आर्यः ।

---

ष्यति । एवं दुर्लभं पुनर्दर्शनमित्यादिरूपं उच्चैः महता स्वनेन मा मंत्रय मावोच इत्यर्थः । कुत इति चेत्तत्राह—**कदापीति** । केचित् वासवदत्तापक्षीयाः पुरुषाः कदापि कस्मिंश्चित्काले अत्र अस्मदधिष्ठितस्थले संचरंति आगच्छंति । ततः विदूषक-भाषणानंतरं वेत्रं हस्ते यस्याः सा वेत्रधारिणीत्यर्थः । वसुंधरा एतन्नाम्नी वासवदत्ताया दासी 'संज्ञायां भृतॄ' इत्यादिना खच् प्रत्ययः । **वसुंधरा**—उपसृत्य समीपं गत्वा । जयतु जयतु इति संभ्रमे द्विरुच्चारणमिदं, आदरे वा । एषः द्वास्थः । खल्विति वाक्यालंकारे । रुमण्वतः वत्सराजसेनाधिपतेः भागिनेयः भगिन्या अपत्यं 'स्त्रीभ्यो ढक्' इति ढक् प्रत्ययः । विजयवर्मा एतन्नामकः । प्रियमिवेति लौकिकोक्त्या इवशब्दप्रयोगः । किमपीति अनिर्ज्ञातत्वात् सामान्ये नपुंसकं । यथा लोके किंचिदेतदिति । निवेदितुं कथयितुं कामः इच्छा यस्य 'तुंकाममनसोरपि' इति मलोपः । द्वारे प्रतीहारे तिष्ठति विद्यते । **राजा**—न विलंबितं अविलंबितं शीघ्रमित्यर्थः । प्रवेशय आनयेत्यर्थः । प्रपूर्वकाद्विशतेर्णिजंताल्लोट् । **वसुंधरा**—यद्देवेत्यादेः तत्करोमीति शेषः निष्क्रम्य गत्वा विजयवर्मणा सहेति 'सहयुक्तेऽप्रधाने' इति तृतीया । पूर्वं प्रविष्टत्वात्पुनरित्युक्तं । प्रविश्येत्यस्य आहेति शेषः । तेन प्रवि-श्येति क्त्वाप्रत्ययस्योपपत्तिः । एष खलु समीपतरवर्ती भर्ता वत्सराजः । उपसर्पतु समीपं प्राप्नोतु । **विजयवर्मा**—जयतु जयतु इति आभीक्ष्ण्ये द्विरुक्तिः । रुमण्वतः एतन्नाम्नो मम मातुलस्य विजयेन जयेन वर्धसे वृद्धिवान् भवसि । एतद्दिष्ट्या आनं-दकारकं । **राजा**—द्विवारं साधुशब्दप्रयोगः अत्यादरबोधनार्थः । सामान्ये नपुंसकं ।

राजा—( सपरितोषम् । ) विजयवर्मन्, अपि जितः कोसलेश्वरः ।

विजय०—देवस्य प्रभावेण ।

राजा—विजयवर्मन्, तत्कथय कथामतिविस्तरतः श्रोतुमिच्छामि ।

विजय०—देव, श्रूयताम् । इतो देवादेशात्कतिपयैरेवाहोभिरनेककरितुरगपत्तिदुर्निवारेण महता बलसमूहेन गत्वा विन्ध्यदुर्गावस्थितस्य कोसलनृपतेर्द्वारमवष्टभ्य सेनाः समावासयितुं समारब्धवान् ।

राजा—ततस्ततः ।

विजय०—ततः कोसलेश्वरोऽप्यतिदर्पात्परिभवमसहमानो हास्तिकप्रायमशेषमात्मसैन्यं सज्जीकृतवान् ।

---

अचिरात् शीघ्रं । चिरादिति अव्ययं न पंचम्यंतं । महत् विशालं अत्युत्तममित्यर्थः । प्रयोजनं कार्यं । अनुष्ठितं कृतमित्यर्थः । **राजा**—सपरितोषं सानंदमित्यर्थः । अपिः प्रश्ने । कोसला देशविशेषः तेषामीश्वरः प्रभुः । जितः किमित्यर्थः । **विजय०**—देवस्य वत्सराजस्य प्रभावेण प्रतापेन 'स प्रतापः प्रभावश्च यत्तेजः कोशदंडजं' इत्यमरः । **राजा**—तत् अचिरेण कार्यकरणाद्धेतोः कथां गोष्ठीं । तत्संबन्धि सकलं वृत्तमित्यर्थः । अतिविस्तरतः अतिशयितव्यासेन आद्यादित्वात्तृतीयांतात्तसिः । 'प्रथने वावशब्दे' इत्यनेन शब्दविषये घञो निषेधात् 'ऋदोरप्' इति अप्प्रत्ययः । अत एव 'विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः' इत्यमरोक्तिः संगच्छते । श्रोतुमिच्छामीति 'समानकर्तृकेषु तुमुन्' इति तुमुन् । **विजयवर्मा**—श्रूयतां आकर्ण्यतां । इतः अस्मात्स्थलादित्यर्थः । देवादेशात् देवादेशं स्वीकृत्य 'ल्यब्लोपे पंचमी' । देवस्य वत्सराजस्य भवतः आदेशः आज्ञा तं स्वीकृत्येत्यर्थः । कतिपयैरेव कियद्भिरेव । स्वल्पैरेवेति यावत् । अहोभिः दिवसैः । अनेके च ते करिणः हस्तिनः तुरगाः अश्वाः पत्तयः पदातयः तैः दुर्निवारेण दुःखेन निवारितुं शक्येन महता उरुणा बलस्य सैन्यस्य 'अनीकिनी बलं सैन्यं' इत्यमरः । समूहेन साहित्ये तृतीया । सहशब्दाभावे तदर्थसत्त्वेऽपीयं प्रवर्तते 'वृद्धो यूने'ति निर्देशात् । समूहेन सह गत्वेत्यर्थः । विंध्यस्य एतन्नामकपर्वतस्य यद्दुर्गं दुर्गमनस्थलं । दुर्गमित्यत्र 'सुदुरोरधिकरण' इत्यनेन दुरपूर्वकात् गमेरधिकरणे डः । तत्रावस्थितस्य सेनानिवेशं कृत्वाऽवस्थितस्येत्यर्थः । कोसलानां एतन्नामकदेशानां नृपतेः राज्ञः द्वारमवष्टभ्य निरुध्य सेनाः चमूः समावासयितुं सम्यक्स्थापयितुं निवेशयितुमित्यर्थः । समारब्धवान् प्रारब्धवान् । अस्य रुमण्वान् कर्ता । **राजा**—ततस्ततः संभ्रमे द्विरुक्तिः । **विजयवर्मा**—सेनासमावाससमारंभानंतरं कोसलेश्वरोपि । अपिः समुच्चये । अतिदर्पात् अतिशयितः दर्पः गर्वः प्रादिसमासः । 'हेतौ' इति पंचमी । परिभवं तिरस्कारं 'ऋदोरप्' इत्यप् । असहमानः अमर्षणः । हास्तिकप्रायं हस्तिनां समूहो हास्तिकं 'अचित्तहस्तिधेनोष्ठक्' इति समूहे

**वसन्तकः**—[1]भो, लहुं आचक्ख । वेवदि मे हिअअं ।

**राजा**—ततस्ततः ।

**विजय०**—देव, कृतनिश्चयश्चासौ

योद्धुं निर्गत्य विन्ध्यादभवदभिमुखस्तत्क्षणं दिग्विभागा-
न्विन्ध्येनेवापरेण द्विरदपतिघटापीडबन्धेन रुन्धन् ।
वेगाद्बाणान्विमुञ्चन्समदगजघटोत्पिष्टपत्तिर्निपत्य
प्रत्यैच्छद्वाञ्छितात्प्राप्तिद्विगुणितरभसस्तं रुमण्वान्क्षणेन ॥ ५ ॥

1. भोः, लघ्वाचक्ष्व । वेपते मे हृदयम् ।

ठक् । तत् प्रायं बहुलं यस्मिन् । हस्तिप्रचुरमित्यर्थः । अशेषं निखिलं सज्जीकृतवान् सन्नद्धीकृतवान् सज्जीति च्व्यंतस्य गतिसंज्ञायां कृतवान् इत्यनेन 'कुगतीति' समासः । **विदूष०**—लघु शीघ्रं आचक्ष्व कथय । कुत इत्यत आह—**वेपते इति** । वेपते कंपते मे मम हृदयं अंतःकरणं । सावकाशतया कथने हि अतिकालः स्यात् तथा च अतीव बिभेमि । क्षिप्रकथने तु कालस्याल्पत्वात् तादृशी भीतिर्न भवतीत्यर्थः । **विजयवर्मा**—कृतः निश्चयः निर्णयः जयविषयो येन एतादृशः असौ कोसलेश्वरः योद्धुं युद्धं कर्तुं विंध्यात् स्वाधिष्ठितपर्वतात् निर्गत्य निष्क्रम्य स चासौ क्षणश्च तत्क्षणः तं निर्गमनकालमित्यर्थः । अत्यंतसंयोगे द्वितीया । अपरेण द्वितीयेन विंध्येनेव विंध्याचलेनेव । द्वौ रदौ दंतौ येषां ते द्विरदाः हस्तिनः तेषां पतयः स्वामिनः । महाहस्तिन इत्यर्थः । तेषां घटाः समूहाः । यद्यपि घटापदेनैव 'करिणां घटना घटा' इत्युक्तत्वात् करिसमूहो लभ्यते । एवं च द्विरदपतीति पदं व्यर्थं, तथापि 'विशिष्टवाचकानां पदानां सति विशेषणसमभिव्याहारे विशेष्यमात्रपरता' इति न्यायेन घटापदस्य केवलं समूहपरत्वमंगीकृत्य द्विरदपतीति विशेषणस्य सार्थक्यं ज्ञेयं । अत एव—'स कीचकैर्मारुतपूर्णरंध्रैः' इति महाकविकालिदासप्रयोगः संगच्छते । घटा एव आपीडबंधः शिरोमाल्यबंधो यस्य 'शिखास्वापीडशेखरौ' इत्यमरः । तेन दिशां काष्ठानां विभागान् रुंधन् आवृण्वन् अभिमुखः संमुखः अभवत् । तं कोसलराजं रुमण्वान् अस्मदीयसेनाधिपतिः क्षणेन क्षणमात्रकालेन प्रत्यैच्छत् प्रतिस्पर्धितुं इच्छां कृतवान् । कथंभूतो रुमण्वान् वाञ्छितात्प्राप्तिद्विगुणितरभसः वाञ्छितस्य अभीष्टस्य कोसलराजसांमुख्यस्येत्यर्थाल्लभ्यते । या आप्तिः प्राप्तिः तया द्विगुणितः द्विगुणीकृतः रभसो वेगो हर्षो वा यस्य । पुनः कथंभूतः । वेगात् बाणान् विमुंचन् उत्सृजन् मदेन दानेन सहिताः 'गंडः कटो मदो दानं' इत्यमरः । या गजघटाः गजसमूहाः अत्रापि स कीचकैरितिवत् गजपदसार्थक्यं ज्ञेयं । ताभिः उत्पिष्टाः पत्तयो येन यस्य वा एतादृशः सन् निपत्य शत्रुसंमुखं गत्वा प्रत्यैच्छदित्यन्वयः । उत्प्रेक्षालंकारः । स्रग्धरावृत्तं । अस्मिन्पद्ये सात्वतीवृत्तिः । वीररसः । गौडीरीतिः । ओजोगुणः ॥ ५ ॥

अपि च ।

अस्त्रव्यस्तशिरस्त्रशस्त्रकषणैः कृत्तोत्तमाङ्गे क्षणं
व्यूढासृक्सरिति स्वनत्प्रहरणे वर्मोद्गमद्वह्निनि ।
आहूयाजिमुखे स कोसलपतिर्भग्ने प्रधाने बले

राजा—कथमस्मदीयान्यपि बलानि भग्नानि ।

विजय०—
एकेनैव रुमण्वता शरशतैर्मत्तद्विपस्थो हतः ॥ ६ ॥

वस०—[1]जेदु जेदु भवं । जिदं अम्हेहिं । (इति नृत्यति ।)

राजा—साधु कोसलपते, साधु । मृत्युरपि ते श्लाघ्यः । यस्य हि रिपवोऽपि पुरुषकारमेवं वर्णयन्ति । ततस्ततः ।

---

१. जयतु जयतु भवान् । जितमस्माभिः ।

---

**अपि च** । अपिः समुच्चये । अन्यदपीत्यर्थः । स पूर्वोक्तः कोसलानां एतत्संज्ञकदेशानां स्वामी प्रधाने मुख्ये बले सामर्थ्ये सैन्ये वा भग्ने नष्टे सति 'यस्य च भावेन' इति सप्तमी । आजेः युद्धस्य मुखं आरंभः तस्मिन् एकेनैव केवलेनैव । असहायेनैवेति यावत् । एतादृशेन रुमण्वता एतन्नाम्ना भवदीयसेनापतिना आहूय आकार्य शराणां बाणानां शतानि शतशब्दोऽत्राऽसंख्यवाची 'शतमनंतं भवति' इति यास्कः । हतः मारितः । कथंभूतः कोसलपतिः मत्तद्विपस्थः मत्तः क्षीबः यो द्विपः हस्ती तस्मिन् तिष्ठतीति सुपीति योगविभागात्कप्रत्ययः । अत्र आहूय इति आह्वानक्रियायाः कोसलपतिरिति कर्म । द्वितीया तु न भवति; हत इति प्रधानक्रियाबोधकोत्तरवर्तिना क्तप्रत्ययेनोक्तत्वात् । कथंभूते आजिमुखे अस्त्रैः शस्त्रैः व्यस्तानि विक्षिप्तानि यानि शिरांसि त्रायंते इति शिरस्त्राणि 'आतोऽनुपसर्गे कः' इति कः । उष्णीषाणीति यावत्, तैः शस्त्राणां कषणैः घर्षणैः च कृत्तानि च्छिन्नानि उत्तमानि च तानि अंगानि च मस्तकानि यस्मिन् 'सर्वेषु गात्रेषु शिरः प्रधानं' इत्यभियुक्तोक्तेः । 'उत्तमांगं शिरः शीर्षं' मित्यमरश्च । पुनश्च कथंभूते क्षणं क्षणमात्रकालं 'अत्यंतसंयोगे' द्वितीया । व्यूढा विस्तृता असृजः रक्तस्य सरित् नदी यस्मिन् । तदानीं हतवीराणां असृजा महती नदी प्रावहदित्यर्थः । पुनः कथंभूते स्वनंति शब्दं कुर्वंति प्रहरणानि यस्मिन् 'आयुधं तु प्रहरणं' इत्यमरः । वर्मभ्यः कवचेभ्यः उद्गमन् बहिर्गच्छन् वह्निः अग्निः यस्मिन् शस्त्राणां कवचादिषु संघट्टने वह्निरुत्पद्यते इति प्रसिद्धमेव । एतादृशे आजिमुखे इति पूर्वेणान्वयः । शार्दूलविक्रीडितं ॥ ६ ॥ **वसन्त०**—भवान् वत्सराजः जयतु सर्वोत्कर्षेण वर्ततां । अस्माभिः जितं जयः प्राप्तः 'नपुंसके भावे क्तः' । **राजा**—साधु कोसलपते, साधु इति लौकिकोक्त्या साध्वित्यस्य द्विरुच्चारणं । मृत्युरपि मरणमपीत्यर्थः । श्लाघ्यः स्तुत्यः । यद्यपि मृत्युः अमंगलं अनिष्टश्च तथापि तव श्लाघ्य एव युद्धे शत्रुसंमुखे प्राप्तत्वात् । उक्तं हि—'द्वाविमौ पुरुषौ लोके सूर्यमंडल-

**विजय०**—देव, ततो रुमण्वानपि कोसलेषु मद्भ्रातरं ज्यायांसं जयवर्माणं स्थापयित्वा प्रहारव्रणितहास्तिकप्रायमशेषसैन्यमनुवर्तमानः शनैः-शनैरागच्छत्येव ।

**राजा**—वसुंधरे, उच्यतां यौगन्धरायणः । प्रदर्श्यतां मत्प्रसादस्य विभव इति ।

**वसुं०**—[1]जं देवो आणवेदित्ति । (इति विजयवर्मणा सह निष्क्रान्ता ।)

(ततः प्रविशति काञ्चनमाला ।)

**काञ्चन०**—[2]आणत्तम्हि देवीए । जह गच्छ हंजे कंचणमाले, एदं इंदजालिअं अज्जउत्तस्स दंसेहि । (इति परिक्रम्यावलोक्य च ।) एसो खु भट्टा । ता जाव णं उवसप्पामि । (उपसृत्य ।) जेदु जेदु भट्टा ।

---

१. यद्देव आज्ञापयतीति ।

२. आज्ञप्तास्मि देव्या । यथा गच्छ हञ्जे काञ्चनमाले, इममैन्द्रजालिकमार्यपुत्रस्य दर्शय । एष खलु भर्ता । तद्यावदेनमुपसर्पामि । जयतु जयतु भर्ता ।

---

मेदिनी । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः' इति । अन्येनापि हेतुना तत्र मृत्युः श्लाघ्य इत्याह—**यस्य हीत्यादिना** । हि हेतौ । यस्मात्कारणादित्यर्थः । रिपवोऽपि शत्रवोऽपि यस्य पुरुषकारं पराक्रमं वर्णयंति शंसंति । **विजयवर्मा**—ततः कोसलपतिमरणानंतरं रुमण्वानपि एतन्नामकसेनाधिपतिरपि मम विजयवर्मणः भ्रातरं सहजं ज्यायांसं ज्येष्ठं प्रशस्यशब्दादीयसुनि 'ज्य च' इति ज्यादेशे 'ज्यादादीयसः' इति आत्वं । जयवर्माणं एतन्नामकं स्थापयित्वा प्रतिष्ठाप्य । व्रणाः संजाता येषां तानि व्रणितानि तारकादित्वादितच् । प्रहारेण ताडनेन व्रणितानि यानि हास्तिकानि हस्तिसमूहाः तानि प्रायाणि बहूनि यस्मिन् एतादृशं यत् अशेषं निःशेषं सैन्यं तत् अनुवर्तमानः अनुसरन् । तद्युक्त इति यावत् । शनैः शनैः मंदं मंदं 'आनुपूर्व्ये द्वे वाच्ये' अनेन द्वित्वं । आगच्छत्येव आगमिष्यत्येवेत्यर्थः । 'वर्तमानसामीप्ये भविष्यति लट्' । **राजा**—यौगंधरायणः अस्मदीयामात्यः । उच्यतां भाष्यतां । किं भाष्यतां तदाह—**मत्प्रसादस्येति** । मम यः प्रसादः जयवार्ताकर्णनेन प्रसन्नता तस्य विभवः ऐश्वर्यं 'विभवो रैमोक्षैश्वर्ये' इति मेदिनी । मत्प्रसादस्य फलं पारितोषिकं अस्मै दीयतामिति तात्पर्यार्थः । ततः वसुंधरानिर्गमनानंतरं । **कांचन०**—देव्या वासवदत्तया आज्ञप्ता 'वा दांते'ति सूत्रेण ज्ञप धातोर्णिजंतात् क्तस्येडभावः । किमाज्ञप्ताऽस्मीत्यत आह—**यथेति** । येन प्रकारेण इंद्रजालमस्यास्तीति इंद्रजालिकः तं 'अत इनिठनौ' इति मत्वर्थे ठन् प्रत्ययः । आर्यपुत्रस्य वत्सराजस्य 'षष्ठी शेषे' इति संबंधसामान्ये षष्ठी । एषः समीपवर्ती । खल्विति वाक्यालंकारे । तत् राज्ञः

भट्टा, देवी विण्णवेदि । एसो खु उज्जयिणीदो संवरणसिद्धि णाम इंदजालिओ आअदो । ता पेक्खदु भट्टा ।

**राजा**—अस्ति नः कौतुकमिन्द्रजालिके । ततः शीघ्रं प्रवेशय ।

**काञ्च०**—[1]जं भट्टा आणवेदि । (इति निष्क्रम्य पिच्छिकाहस्तेनेन्द्रजालिकेन सह प्रविशति ।) भट्टा एसो इंदजालिओ ।

**इन्द्र०**—(उपसृत्य) [2]जेअदु जअदु महाराओ । (पिच्छिकां भ्रामयित्वा वहुधा हास्यं कृत्वा ।)

पणमह चलणे इंदस्स इन्दजालिअपिणद्धणामस्स ।
तह जेव्व वि संबरस्स सुपरिट्ठिदजसस्स ॥ ७ ॥

---

भर्तः देवी विज्ञापयति । एष खलूज्जयिनीतः संवरणसिद्धिनामेन्द्रजालिक आगतः । तत्प्रेक्षतु भर्ता ।

१. यद्भर्ताऽऽज्ञापयति । भर्तः एष इन्द्रजालिकः ।

२. जयतु जयतु महाराजः ।

प्रणमत चरणे इन्द्रस्येन्द्रजालिकपिनद्धनाम्नः ।
तथैवापि शम्बरस्य सुपरिस्थितयशसः ॥

---

समीपवर्तित्वात् उपसर्पामि समीपं गच्छामि । जयतु इति संभ्रमे आदरे वा लौकिकोक्त्या द्विरुच्चारणं । देवी वासवदत्ता विज्ञापयति प्रार्थयत इत्यर्थः । किमिति तदाह—**एषेति** । उज्जयिनीतः पंचम्यंतादाद्यादित्वात्तसिः । संवरणसिद्धिरिति नाम यस्य । तत् इंद्रजालिकस्य अत्र प्राप्तत्वाद्धेतोः । प्रेक्षतु यद्यपि ईक्षेरनुदात्तत्वादात्मनेपदेन भवितव्यं तथापि 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यं' इति साधुः । प्रेक्षतु इत्यस्य कर्म ऐंद्रजालिकक्रतिरेवेत्यर्थाज्ज्ञेयं । प्रेक्षतामिति पाठश्चेत् साधुः । **राजा**—कौतुकं कुतुकं इंद्रजालिके सौभिके 'सौभिकस्त्विंद्रजालिकः' इति हारावली । ततः इंद्रजालिककौतुकाद्धेतोः शीघ्रं प्रवेशय । **कांचन०**—यद्भर्ताऽऽज्ञापयति । तत् करोमीति शेषः । निष्क्रम्य गत्वा पिच्छिका संमार्जनिकेव ऐंद्रजालिकमेकमुपकरणं सा हस्ते यस्य 'सप्तमी विशेषणेति' ज्ञापकात् व्यधिकरणो वहुव्रीहिः । **चेटी**—एषः समीपतरवर्ती । तत् भर्तुः समीपवर्तित्वाद्धेतोः । आर्यः इंद्रजालिकः । **इंद्र०**—**पिच्छिकां भ्रामयित्वेति** । दिशां वंधनार्थं हि तैः पिच्छिका भ्राम्यते इति प्रसिद्धिः । इंद्रजालिक इति पिनद्धं वद्धं नाम यस्य एतादृशस्य इंद्रस्य चरणे पादौ प्रणमत नमस्कुरुत । 'चरणोऽस्त्रियां' इत्युक्तत्वाच्चरणशब्दस्य नपुंसकत्वं । तथैव यथा इंद्रचरणे नमस्कारः क्रियते तथैवेत्यर्थः । सुष्ठु परितः स्थितं यशः कीर्तिः यस्य एतादृशस्य शंवरस्य एतन्नामासुरस्य चरणे प्रणमतेत्यनुषंगः । शांवरी माया ऐंद्रजालिकी च इति लोके प्रसिद्धे ।

[1]महाराअ कोसंबीपते, किं बहुणा

किं धरणिए मिअंको आआसे महिअरो जले जलणो ।
मज्झण्हम्हि पओसो दाविज्जइ देहि आण्णत्तिं ॥ ८ ॥

वस०—[2]भो वअस्स, अवहिदो होहि । ईदिसो से अवट्ठंभो जेण सव्वंपि सम्भाविअदि ।

इन्द्र०—देव,

[3]किं जप्पिदेण बहुणा जं जं हिअए समीहिदं दिट्ठुं ।
तं तं *दावेमि अहं गुरुणो मंतप्पहावेण ॥ ९ ॥

---

१. महाराज कौशांबीपते, किं बहुना ।
किं धरण्यां मृगाङ्क आकाशे महीधरो जले ज्वलनः ।
मध्याह्ने प्रदोषो दर्शयामि देह्याज्ञप्तिम् ॥

२. भो वयस्य, अवहितो भव । ईदृशोऽस्यावष्टम्भो येन सर्वमपि सम्भाव्यते ।

३. किं जल्पितेन बहुना यद्यद्धृदये समीहितं द्रष्टुम् ।
तत्तद्दर्शयाम्यहं गुरोर्मन्त्रप्रभावेण ॥

---

अतस्तयोः प्रवर्तकयोरनयोर्नमनं युक्तमेव ॥ ७ ॥ धरण्यां पृथिव्यां मृगः हरिणः अंकः चिह्नं यस्य स चंद्रः आकाशे नभसि धरतीति धरः मह्याः धरः महीधरः पर्वतः गंगाधरभूधरवत् पचाद्यचि कर्मणः शेषत्वविवक्षायां षष्ठीसमासः । जले उदके । ज्वलनः अग्निः । मध्याह्ने अह्नो मध्यः मध्याह्नः तस्मिन् । एकदेशिसमासे 'अह्नोह्न एतेभ्य' इत्यह्नादेशः । 'रात्राह्नाहाः पुंसि' इति पुंस्त्वं । प्रदोषः रजनीमुखं दर्शयामि किं । एतस्य धरण्यां मृगांक इत्यादि विशिष्टं कर्म । अतो न तत्र कर्मणि द्वितीया पश्य मृगो धावतीतिवत् । आज्ञप्तिं आज्ञां देहि कुर्वित्यर्थः ॥ ८ ॥ **वसन्त०**—अवहितो भव अप्रमत्तो भवेत्यर्थः । अस्य इंद्रजालिकस्य ईदृशः पूर्वोक्तप्रकारकः अवष्टंभः चित्तोद्रेकः येन हेतुना सर्वमपि पूर्वोक्तप्रकारकं सर्वमेव संभाव्यते संभावनाविषयीक्रियते । अयं यथा वदति तथा करिष्यति इति एतस्य वचनप्रणाल्या शारीरव्यापारेणं च संभाव्यते इत्यर्थः । तस्मात्तदवलोकनार्थं अवहितो भवेति तात्पर्यम् । **इंद्रजालिकः**—बहुना जल्पितेन भाषितेन किं क उपयोग इत्यर्थः । गम्यमानक्रियानिरूपितकर्मत्वं । हृदये अंतःकरणे 'चित्तं तु चेतो हृदयं स्वांतं हृन्मानसं मनः' इत्यमरः । यद्यदिति सामान्ये नपुंसकं यं यं पदार्थमित्यर्थः । अथवा वस्तु इति विशेष्यं । यद्यद्वस्त्वित्यर्थः । 'नित्यवीप्सयोः' इति वीप्सायां द्वित्वं । तद्द्रष्टुं प्रेक्षितुं समीहितं वाञ्छितं, भवतेति शेषः । गुरोः देशिकस्य मंत्रप्रभावेण मंत्रस्य प्रभावः एव प्रभाव इत्यर्थो वा । तेन तत्तत् । अत्रापि यद्यदितिवत् व्यवस्था ज्ञेया । अहं इंद्रजालिकः दर्शयामीत्यन्वयः ॥ ९ ॥ अत्र पद्यद्वयेन इंद्रजालिको मिथ्याग्निसंभ्रमोत्थापनेन वत्सराजस्य हृदयस्थसागरिकादर्शनानुकूलां स्वशक्ति-

---

* दंसेमि इति पाठांतरम् ।

राजा—भद्र, तिष्ठ तावत् । काञ्चनमाले, उच्यतां देवी । युष्मदीय एवायमिन्द्रजालिकः । विजनीकृतश्चायमुद्देशः । तदागच्छ । सहितावेव पश्यावः ।

काञ्च०—[1]जं भट्टा आण्णवेदि । (इति निष्क्रम्य वासवदत्तया सह प्रविशति । )

वासव०—[2]कंचणमाले, उज्जइणीदो आअदोत्ति अत्थि मे तस्सिं इंदजालिए वक्खवादो ।

काञ्च०—[3]णाभिउलवहुमाणो खु एसो देवीए । ता एदु एदु भट्टिणी ।

( इति परिक्रामतः । )

काञ्च०—[4]भट्टिणि, एसो भट्टा, ता उवसप्पदु देवी ।

वासव०—( उपसृत्य । ) [5]जेदु अज्जउत्तो ।

---

१. यद्भर्ताऽऽज्ञापयति ।
२. काञ्चनमाले, उज्जयिनीत आगत इत्यस्ति मे तस्मिन्नैन्द्रजालिके पक्षपातः ।
३. नाभिकुलवहुमानः खलु एष देव्याः । तदेतु एतु भट्टिनी ।
४. भट्टिनि, एष भर्ता, तदुपसर्पतु देवी ।
५. जयत्वार्यपुत्रः ।

---

माविष्कृतवान् । अतः व्यवसायाख्यमंगं । तदुक्तं—'व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसंभवः' इति । **राजा—भद्रेति** । इंद्रजालिकस्य संबोधनं । तदुक्तं भरतेन 'सौम्य भद्रमुखेत्येवं हेपूर्वं वाधमं वदेत्' इति । तावत् अवधौ । वासवदत्ताऽऽगमनपर्यंतमिति भावः । इदं चाग्रिमग्रंथस्वारस्याल्लभ्यते । तदेवाह—**कांचनमालेत्यादिना** । देवी वासवदत्ता उच्यतां वक्तव्या । किमिति तदाह—**युष्मदीय इत्यादिना** । युष्मांकमयं युष्मदीयः । 'त्यदादीनि च' इति वृद्धसंज्ञायां 'वृद्धाच्छः' इति तस्येदमित्यर्थे छप्रत्ययः युष्मद्ग्रामीय इत्यर्थः । अयं समीपवर्ती । अनेन अवश्यदर्शनार्हत्वं द्योतितं । न च भर्त्रा सह समुदाये उपवेशनं युक्तं इति चेत्तत्राऽऽह—**विजनीकृत इति** । अयं उद्देशः देशः स्थलमिति यावत् । विगता जना यस्मात् स विजनः च्विप्रत्ययांतस्य तस्य कृतशब्देन 'कुगती'ति समासः । तत् इति अत्रैकांतत्वात् इंद्रजालिकस्य त्वदीयग्रामस्थत्वाच्च आगच्छ एहि । सहितौ मिलितावेत्यर्थः । पश्यावः दृशधातोः 'पाघ्राध्मा' इति पश्यादेशः । वर्तमानसामीप्ये भविष्यति लट् । द्रक्ष्याव इत्यर्थः । **वासवद०**—उज्जयिन्या इति उज्जयिनीतः आद्यादित्वात्पंचम्यंतात्तसिः अपादाने चेयं पंचमी । इति हेतौ । मे तस्मिन् इंद्रजालिके पक्षे पार्श्वे पातः पतनं । अभिमान इति यावत् । 'पक्षो मासार्धपार्श्वयोः' इति त्रिकांडशेषः । **कांचनमा०**—तेन इंद्रजालिकपक्षपातेन नाभिकुलवहुमानः नाभिकुलं क्षत्रियकुलं तस्य बहुमानः आदरः । यद्यप्यत्र 'मुख्यराट् क्षत्रिये नाभिः' इति कोशप्रामाण्यात्

राजा—देवि, बहुतरमनेन गर्जितम्। तदिहस्थावेव पश्यावस्तावत्।

( वासवदत्तोपविशति। )

राजा—भद्र, प्रस्तूयतां बहुविधमिन्द्रजालम्।

इन्द्र०—[1]जं देवो आण्णवेदि। ( बहुविधं नाट्यं कृत्वा पिच्छिकां भ्रामयन्। )

हरिहरबम्हप्पमुहं देवं *दावेमि देवराअं अ।
गअणे वि सिद्धविज्जाहरवहुसत्थं च णच्चंतं॥ १०॥

( सर्वे सविस्मयं पश्यन्ति। )

राजा—( ऊर्ध्वं दृष्ट्वासनादवतरन्। ) आश्चर्यमाश्चर्यम्।

वस०—[2]अच्चरिअं अच्चरिअं।

---

१. यद्देव आज्ञापयति।

हरिहरब्रह्मप्रमुखान्देवान्दर्शयामि देवराजं च।
गगनेऽपि सिद्धविद्याधरवधूसार्थं च नृत्यन्तम्॥

२. आश्चर्यं आश्चर्यम्।

---

क्षत्रियसामान्यकुलादर इति प्रतीयते तथापि प्रकरणात् अत्र मातृक्षत्रियकुलाभिमान एव स्वारस्यं पुष्णाति। तत् मातृकुलाभिमानाद्धेतोः। एष पुरोवर्ती। तत् भर्तुः निकटप्राप्तत्वाद्धेतोः। **राजा**—अतिशयेन वहु वहुतरं 'द्विवचने'ति तरप्। गर्जितं शब्दितं। कत्थितं इत्यर्थः। तत् अनेनाऽतीव कत्थनाद्धेतोः। इह तिष्ठतौ इहस्थौ सुपीति कः। पश्यावः वर्तमानसामीप्ये भविष्यति लट्। तावदिति वाक्यालंकारे। **राजा**—प्रस्तूयतां उपक्रम्यतां बह्वयः विधाः प्रकारा यस्य तत्। इंद्रजालं मायाविशेषं। **इंद्रजा०**—बहुविधं अनेकप्रकारकं नाट्यं गात्रविक्षेपं पिच्छिकां पूर्वोक्तां भ्रामयन् चालयन्। हरिः विष्णुः हरः रुद्रः ब्रह्मा च एते प्रमुखाः मुख्या येषां तान् देवान् अमरांश्च। देवानां राजा देवराजः तं। इन्द्रमित्यर्थः। 'राजाहःसखिभ्यष्टच्' इति टच् प्रत्ययः। गगनेऽपि आकाशेपि नृत्यंतं नाट्यं कुर्वंतं सिद्धाः विद्याधराः इमे देवयोनिविशेषाः। यदुक्तममरसिंहेन—'विद्याधराप्सरोयक्षरक्षोगंधर्वकिन्नराः। पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः' इति। तेषां वध्वः स्त्रियः 'वधूर्जाया स्नुषा स्त्री च' इत्यमरः। तासां सार्थं समूहं दर्शयामि॥ १०॥ सर्वे राजा विदूषकादयश्च सविस्मयं। विस्मयकारणं तु बहुतरपुण्यपाकेनापि येषां दर्शनं दुर्लभं तेऽत्र अनेन एकसमयावच्छेदेनाऽऽनीयंत इति। **राजा**—ऊर्ध्वं दृष्ट्वा ऊर्ध्वं विलोक्य आसनात् पीठात् अवतरन्। अधः आगत इत्यर्थः। आश्चर्यमाश्चर्यं संभ्रमे द्विरुक्तिः। **वसन्त०**—आश्चर्यमाश्चर्यमिति अत्रापि पूर्ववदेव द्वित्वं।

---

* दंसेमि इति पाठांतरम्।

**राजा**—देवि, पश्य ।

एष ब्रह्मा सरोजे रजनिकरकलाशेखरः शंकरोऽयं
दोर्भिर्दैत्यान्तकोऽसौ सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः ।
एषोऽप्यैरावतस्थस्त्रिदशपतिरमी देवि देवास्तथान्ये
नृत्यन्ति व्योम्नि चैताश्चलचरणरणन्नूपुरा दिव्यनार्यः ॥ ११ ॥

**वास०**—अच्चरिअं[1] अच्चरिअं ।

**वस०**—हा[2] दासीए उत्त इंदजालिअ, किं एदेहिं देवेहिं अच्छराहिं च दंसिदाहिं । जइ दे इमिणा परितुट्ठेण कज्जं ता दंसेहि साअरिअं ।

---

१. आश्चर्यं आश्चर्यम् ।

२ आः दास्याःपुत्र इन्द्रजालिक, किमेतैर्देवैरप्सरोभिश्च दर्शितैः । यदि ते अनेन परितुष्टेन कार्यं तद्दर्शय सागरिकाम् ।

---

**राजा**—किं पश्य । तदाह—**एषेत्यादिना** । एषः सरसि अजनीति सरोजं कमलं तस्मिन् ब्रह्मा ब्रह्मदेवः । दृश्यते इति शेषः । अयं सन्निकृष्टः । रजनिं रात्रिं करोतीति रजनिकरः 'कृञो हेतुताच्छील्यानुलोम्येषु' इत्यनेन हेतौ द्योत्ये टप्रत्ययः । तस्य या कला षोडशभागः सा शेखरः शिरोभूषणं यस्य 'शिखास्वापीडशेखरौ' इत्यमरः । तादृशः शंकरः शिवः दृश्यत इत्यर्थः । एवमग्रेऽपि यथायथं दृशिक्रियाया अन्वयो योज्यः । असौ पूर्वोक्ताभ्यां किंचिद्विप्रकृष्टः । सधनुरसिगदाचक्रचिह्नैः धनुः शार्ङ्गं असिः नंदकनामा गदा कौमोदकीनाम्नी चक्रं सुदर्शननामकं तान्येव चिह्नानि लक्ष्माणि विष्णुत्वबोधकानि तैः सहिताः तथोक्ताः तैः चतुर्भिः चतुःसंख्याकैः दोर्भिः भुजैः उपलक्षितः दैत्यानामसुराणां अंतकः नाशकः । विष्णुरित्यर्थः । ऐरावते अभ्रमातंगे 'ऐरावतोऽभ्रमातंगैरावणाभ्रमुवल्लभाः' इत्यमरः । तस्मिन् तिष्ठतीति ऐरावतस्थः सुपीति कः । एषोऽपि समीपतरवर्त्यपीत्यर्थः । अपिः समुच्चये । त्रिदशपतिः तृतीया यौवनावस्थाख्या दशा सदा येषां ते त्रिदशाः । त्रिशब्दस्य तृतीयार्थता त्रिभागवत् । त्रिर्दश वा 'संख्ययाव्यया' इत्यादिना बहुव्रीहिः । 'बहुव्रीहौ संख्येये' इति डच् । जन्मसत्ताविनाशाख्यास्तिस्रो दशा येषामिति वा । तेषां पतिः स्वामी इंद्र इत्यर्थः । हे देवि हे वासवदत्ते, तथा पूर्वोक्तप्रकारेण अमी किंचिद्विप्रकृष्टदेशे दृश्यमानाः अन्ये पूर्वोक्तदेवेभ्य इतरे । दृश्यंत इत्यर्थः । चः समुच्चये । व्योम्नि आकाशे एताः समीपतरवर्तिन्यः चलाः नर्तनप्रवृत्तत्वाच्चंचलाः ये चरणाः पादाः तेषु रणंतः शब्दं कुर्वंतः नूपुराः मंजीराः यासां 'मंजीरो नूपुरोऽस्त्रियां' इत्यमरः । दिवि भवाः दिव्याः दिगादित्वाद्यत् । ताश्च ता नार्यः स्त्रियः । अप्सरस इत्यर्थः । दृश्यंते इति शेषः । स्रग्धरा वृत्तं । अत्र पांचाली रीतिः । प्रसादगुणः ॥ ११ ॥ **वसन्त०**—आः इति कोपे । दास्याःपुत्र, 'षष्ठ्या आक्रोशे' इति अलुक् । वाक्यं वा । एतैः

( ततः प्रविशति वसुंधरा । )

**वसुं०**—( राजानमुपसृत्य । )[१]जेदु जेदु भट्टा । अमच्चजोअंधराअणो देवस्स चलणजुअले इदं विण्णवेदि । एसो खु विक्कमबाहुणा पहाणमंचो वसुभूदी कंचुइणा सह अणुप्पेसिदो । ता णं अरिहसि देव इमस्सिं एव्व सुमुहुत्तए पेक्खिदुं । अहंपि कज्जसेसं समप्पिअ आअदो ज्जेव्व ।

**वासव०**—अज्जउत्त, चिट्ठदु दाव इंदजालं । माउलकुलादो अज्जो अमच्चपधाणो वसुभूदी आअदो । ता एदं दाव पेक्खदु अज्जउत्तो ।

---

१. जयतु जयतु भर्ता । अमात्ययौगन्धरायणो देवस्य चरणयुगल इदं विज्ञापयति । एष खलु विक्रमबाहुना प्रधानामात्यो वसुभूतिकंचुकिना सहानुप्रेषितः । तदेनमर्हसि देव अस्मिन्नेव सुमुहूर्ते प्रेक्षितुम् । अहमपि कार्यशेषं समाप्याऽऽगत एव ।

२. आर्यपुत्र, तिष्ठतु तावदिन्द्रजालम् । मातुलकुलादार्योऽमात्यप्रधानो वसुभूतिरागतः । तदेनं तावत्प्रेक्षतामार्यपुत्रः ।

---

पुरोवर्तिभिः देवैः अमरैः दर्शितैः किं । क उपयोग इत्यर्थः । तथा दर्शिताभिः अप्सरोभिः स्वर्वेश्याभिः वा किं क उपयोगः न कोऽप्युपयोग इत्यर्थः । यदि पक्षांतरे । ते तव अनेन वत्सराजेन परितुष्टेन संतुष्टेन कार्यं फलं द्रव्यप्राप्तिरूपं तर्हि सागरिकां रत्नावलीं दर्शय । ततः विदूषकभाषणानंतरं । वसुंधरा एतन्नाम्नी वेत्रवती प्रविशतीत्यर्थः । **वसुंधरा**—भर्ता जयतु इत्यन्वयः । अमात्ययौगंधरायणः अमात्यः सचिवः स चासौ यौगंधरायणश्च एतन्नामा विज्ञापयति । किमिति तदाह—**एष इत्यादिना ।** एषः समीपवर्ती । खल्विति वाक्यालंकारे । विक्रमबाहुना सिंहलेश्वरेण कंचुकिना अस्मदीयेन बाभ्रव्येण सह अनुप्रेषितः प्रेरितः वसुभूतिः एतन्नामा सिंहलेश्वरस्य सचिवः । तत् सिंहलेश्वरेण प्रेषितत्वाद्धेतोः । एनं वसुभूतिं । हे देव वत्सराज, अस्मिन्नेव इदानीमेवेत्यर्थः । सुमुहूर्ते शोभनः मुहूर्तः तस्मिन् प्रेक्षितुं अवलोकितुं अर्हसि योग्योऽसि 'शकधृष' इत्यादिना तुमुन् प्रत्ययः । अहमपि यौगंधरायणोऽपि कार्यस्य कृत्यस्य शेषः अवशेषभागः तं समाप्य पूरयित्वा आगतः 'गत्यर्थाकर्मके'त्यनेन कर्तरि क्तः । एवशब्दः शीघ्रागमनद्योतकः । **वासव०**—इंद्रजालं मायाप्रेक्षणम् । तिष्ठतु अस्तु इदानीमलमित्यर्थः । तावदिति वाक्यालंकारे । मातुलकुलात् मातुलगृहात् । आर्यः श्रेष्ठः प्रधानः कर्मसहायः अमात्यः धीसहायः एतादृशो यो वसुभूतिः एतन्नामा । यद्यपि 'महामात्राः प्रधानानि' इति कोशे प्रधानशब्दस्य नपुंसकत्वमुक्तं तथापि 'महामात्रः प्रधानः स्यात्' इति पुंस्कांडे बोपालितात् पुंस्त्वमपि । कर्मसचिवः धीसचिवोऽप्ययमेक इवेत्यर्थः । आगतः अत्रेति शेषः । तत् एतस्मात्रा-

राजा—यथाह देवी । (इन्द्रजालिकं प्रति ।) भद्र, विश्राम्यतामिदानीम् ।

इन्द्र०—(पुनः पिच्छिकां भ्रामयति ।) [1]जं देवो आणवेदि । (निष्क्रामन् ।) एक्को उण मह खेलओ अवस्सं देवेण पेक्खिदव्वो ।

राजा—भद्र, एवं द्रक्ष्यामः ।

वासव०—कंचणमाले, गच्छ तुमं । देहि से पारितोसिअं[2] ।

काञ्च०—[3]जं देवी आणवेदि । (इन्द्रजालिकेन सह निष्क्रान्ता ।)

राजा—वसन्तक । प्रत्युद्गम्य प्रवेश्यतां वसुभूतिः ।

वस०—[4]जं भट्टा आणवेदि । (इति निष्क्रान्तः ।)

(ततः प्रविशति वसन्तकेन प्रत्युद्गम्यमानो वसुभूतिर्बाभ्रव्यश्च ।)

वसुभूतिः—(समन्तादवलोक्य ।) अहो वत्सेश्वरस्यानुभावः । तथाहि ।

आक्षिप्तो जयकुञ्जरेण तुरगान्निर्वर्णयन्वल्लभा-
न्संगीतध्वनिना हृतः क्षितिभृतां गोष्ठीषु तिष्ठन्क्षणम् ॥

---

१. यद्देव आज्ञापयति । एकः पुनर्मम खेलोऽवश्यं देवेन प्रेक्षितव्यः ।
२. काञ्चनमाले, गच्छ त्वम् देह्यस्य पारितोषिकम् ।
३. यद्देव्याज्ञापयति ।
४. यद्भर्ताऽऽज्ञापयति ।

---

गमनाद्धेतोरित्यर्थः । **राजा—यथाह देवीति** । तथा क्रियते इति शेषः । अत एवाह—**भद्रेत्यादि** । इदानीं सांप्रतं विश्राम्यतां समाप्यतां विपूर्वकाच्छ्रमधातोर्णिजंतात्कर्मणि लोट् । अत्र यथा मित्त्वाद्ध्रस्वो न तथाऽऽवेदितं प्राक् । **इंद्रजा०**—पुनः पिच्छिकां भ्रामयति । पूर्वं कृतस्य दिशां बंधस्य इदानीं विमोकार्थं पिच्छिकाभ्रामणम् । निष्क्रामन् गच्छन् । निस् पूर्वकात्क्रमेः लटि शतरि 'क्रमः परस्मैपदेषु' इति दीर्घः । खेलः खेलनं प्रेक्षितव्यः विलोकयितव्यः । **राजा**—एवं यथा त्वदुक्तं तथेत्यर्थः । तदेव शब्देन स्पष्टयति—**द्रक्ष्याम इति** । **वासवद०**—देह्यस्येति अस्येति संप्रदानस्य शेषत्वविवक्षायां षष्ठी । पारितोषिकं व्याख्यातमिदं । **कांच०**—यद्देवी आज्ञापयति तत्करोमीति शेषः । **राजा**—प्रत्युद्गम्य अभिमुखं गत्वा वसुभूतिः एतन्नामा सिंहलेश्वरप्रधानः । प्रवेश्यतां आनीयतामित्यर्थः । ततः विदूषकगमनानंतरं । वसंतकेन प्रत्युद्गम्यमानः संमुखगम्यमानः वसुभूतिः प्रधानः बाभ्रव्यः कंचुकी च । **वसुभूतिः**—समंतात् आसमंतात् । अहो इति आश्चर्ये । वत्सेश्वरस्य । अनुभावः प्रभावः । अहो आश्चर्यकारक इत्यर्थः । तथाहि प्रभावमेव वर्णयति वल्लभान् दयितान् । 'दयितं वल्लभं प्रियं' इत्यमरः । मनोज्ञानिति यावत् ।

सद्योविस्मृतसिंहलेशविभवः कक्ष्याप्रदेशोऽप्यहो
द्वाःस्थेनैव कुतूहलेन महता ग्राम्यो यथाऽहं कृतः ॥ १२ ॥

बाभ्रव्यः—वसुभूते, अद्य खलु चिरात्स्वामिनं द्रक्ष्यामीति यत्सत्यमानन्दातिशयेन किमप्यवस्थान्तरमनुभवामि । कुतः ।

विवृद्धिं कम्पस्य प्रथयति तरां साध्वसवशा-
द्दविस्पष्टां दृष्टिं तिरयति पुनर्बाष्पसलिलैः ॥

तुरगान् अश्वान् निर्वर्णयन् निध्यायन् पश्यन्निति यावत् । 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणं' इत्यमरः । सर्वत्र वक्ष्यमाणं अहमिति विशेष्यं संबध्यते । जयस्य विजयस्य कुंजः हस्तिहनुः तद्दंतो वा सोऽस्यास्तीति कुंजरः हस्ती 'कुंजोऽस्त्रियां निकुंजेऽपि हनौ दंतेऽपि हस्तिनां' इति मेदिनी । 'खमुखकुंजेभ्य' इति मत्वर्थीयो रप्रत्ययः । तेन आक्षिप्तः आकृष्टः । यावदश्वसौंदर्यमवलोकयामि तावत् तदतिशायिजयकुंजरेण मनोऽपहृतमित्यर्थः । क्षितिं पृथ्वीं बिभ्रति धारयंति पोषयंति वा क्षितिभृतः राजानः तेषां गोष्ठीषु सभासु । मंडलेष्विति यावत् । क्षणं क्षणमात्रं तिष्ठन् तच्छोभावलोकनार्थमित्यर्थः । संगीतस्य गेयस्य रवः शब्दः तेन हृतः । आकृष्ट इत्यर्थः । अत्र मुख्यमाकर्षणं श्रवणेंद्रियद्वारा मनस एव । वसुभूतौ तु तादात्म्यापन्नत्वेन आरोपितं । एवं सर्वत्र ज्ञेयं । अहो इति आश्चर्ये । यत्र पादप्रक्षेपं कृत्वा गृहमध्ये प्रवेश्यते तादृशः गृहस्य प्रकोष्ठभागः कक्ष्या 'कक्ष्या प्रकोष्ठे हर्म्यादेः' इत्यमरः । तस्याः प्रदेशे स्थले । गृहैकदेशेऽपि एवं स्थितिः मुख्यगृहे किमु वक्तव्यं इति बोधनार्थमपि शब्दः । सद्यः सपदि । अवलोकनक्षणे इत्यर्थः । विस्मृतः स्मरणाभावं प्राप्तः सिंहलेशस्य सिंहलाधिपस्य विभवः ऐश्वर्यं येन तादृशः । यथा महाप्रकाशदर्शने अल्पप्रकाशस्तुच्छो भवति तद्वन्महैश्वर्यदर्शनेन सिंहलेश्वरस्यैश्वर्यं विस्मृतमित्यर्थः । द्वारि तिष्ठतीति द्वाःस्थं तेन महता अतिशयितेन श्रेष्ठेन वा कुतूहलेन कौतुककारिवस्तुजातेनेत्यर्थः । यथा ग्रामे भवः ग्राम्यः । दिगादित्वाद्यत् । स यथा नगरे चकितो भवति तथाऽहं वसुभूतिः कृतः । अत्रोदात्तालंकारः । शार्दूलविक्रीडितं ॥ १२ ॥ बाभ्रव्यः—अद्य अस्मिन्नहनि । चिरात् चिरकालेन स्वामिनं पतिं । वत्सराजमिति यावत् । द्रक्ष्यामि अवलोकयिष्यामि । यत् इति हेतौ । यस्माद्द्रक्ष्यामि इति तस्माद्धेतोः । आनंदातिशयेन आनंदस्य आह्लादस्य अतिशयः आधिक्यं तेन किमपि अनिर्वचनीयं अन्याऽवस्था अवस्थांतरं अन्यार्थकेनांऽतरशब्देन मयूरव्यंसकादित्वात्समासः । अनुभवामीति सत्यं न मृषेत्यर्थः । कुतः कस्माद्धेतोः किंशब्दात्तसिः । 'कु तिहोः' इति कुरादेशः । अद्य निजराजदर्शनं भविष्यति अतः इदानीं किमप्यवस्थांतरं संपन्नं तत् कथं निर्णीयते इत्यर्थः । तदेव अवस्थांतरं दर्शयति—विवृद्धिमित्यादिना । हि यस्मात्कारणात् । हेतौ हिशब्दः 'हि हेताववधारणे' इत्यमरः । मम बाभ्रव्यस्य । परितोषः राजदर्शनजन्यसंतोष इत्यर्थः । अद्य अस्मिन्नहनि । जरायाः विस्रसायाः 'विस्रसा जरा' इत्यमरः । सहायस्य सहकारिणः

स्खलद्वर्णां वाणीं जडयतितरां गद्गदतया
जरायाः साहाय्यं मम हि परितोषोऽद्य कुरुते ॥ १३ ॥

**वसन्त०**—(अग्रे भूत्वा ।) एदु एदु अमच्चो ।[1]

**वसु०**—(विदूषकस्य कण्ठे रत्नमालां दृष्ट्वाऽपवार्य ।) बाभ्रव्य जाने सैवेयं रत्नमाला या देवेन राजपुत्र्यै प्रस्थानसमये दत्तेति ।

---

१. एतु एतु अमात्यः ।

---

भावः साहाय्यं 'सहायाद्वा' इति पक्षे ष्यञ् । साहायकमित्यर्थः । **कुरुते** रचयतीत्यर्थः । परितोषकृतं जरायाः साहायकमेव त्रिभिश्चरणैर्द्रढयति । साध्वसस्य भयस्य वशात् अधीनत्वात् कंपस्य वेपथोः 'अथ वेपथुः कंप' इत्यमरः । विशेषेण वृद्धिः विवृद्धिः तां 'कुगतिप्रादयः' इति समासः । प्रथयतितरां अतिशयेन विस्तारयतीत्यर्थः । प्रथ प्रख्याने इत्यस्मात् णिजंतात् लट् । तिङश्चेति तरप् । किमेत्तिङव्ययेति तरबंतादाम् । जरया अंगे कंप उत्पद्यते तस्य भीतिनिमित्तककंपेन विवर्धनाज्जरासाहाय्यं । तथा न विस्पष्टा स्वच्छा इति अविस्पष्टा तां । मंदामित्यर्थः । दृष्टिं अवलोकनं दृशं वा 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इत्यमरः । पुनः भूयः । बाष्पसलिलैः बाष्पाण्येव सलिलानि उदकानि तैः । यद्यपि वाष्पशब्दो नेत्रोदकवाची इति उदकपदं व्यर्थं तथापि 'विशिष्टवाचकानां पदानां' इत्यादि प्रागुक्तन्यायेन अत्र वाष्पशब्दस्य नेत्रोत्पन्नत्वमेवार्थः । तथाच वाष्पसलिलैस्तिरयति अंतर्दधातीत्यर्थः । तिरस्शब्दात् तत्करोतीति णिच् । इष्ठवद्भावाट्टिलोपः । अत्र जरया दृष्टेर्मांद्यं प्राप्तं बाष्पसलिलैर्दृष्टेराच्छादनात्तु मंदत्वाधिक्यसंपादनेन जरासाहाय्यं । स्खलंतः संचलंतः अस्पष्टं बहिः पतंत इत्यर्थः । वर्णाः अकारादयो यस्यां भग्नदंतस्य वर्णाः स्खलंत उत्पद्यंते इति प्रसिद्धं । एतादृशीं वाणीं वाचं 'गीर्वाग्वाणी सरस्वती' इत्यमरः । **गद्गदतया** आनंदातिरेकादिना वाक्स्खलनस्यानुकरणं । अथवा गद्गदमिति वाक्स्खलनवाचकं प्रातिपदिकमेव अतएव 'गद्गद वाक्स्खलने' इति कंड्वादिषु उक्तं । कंड्वादयो हि द्विधा—धातवः प्रातिपदिकानि च । स्पष्टं चैतत् कंड्वादिप्रक्रियायां सिद्धांतकौमुद्यां । तथाच गद्गदतया इत्यस्य स्खलनेनेत्यर्थः । जडयतितरां अतिशयेन जडां करोतीत्यर्थः । अत्रापि पूर्ववत् जडशब्दाण्णिजंतात् तिङंतात्तरबंतादाम् । अत्र भग्नदंतत्वेन वाण्याः स्खलद्वर्णत्वेऽपि आनंदातिरेकेण जाड्यकरणाज्जरासाहाय्यं । शिखरिणीवृत्तं । अत्र वृद्धावस्थया पूर्वमेव सिद्धस्य कंपादेः परितोषोत्पन्नसाध्वसादिना गुणोत्कर्षवर्णनात् अनुगुणालंकारः । तदुक्तं 'प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसंनिधेः ॥ १३ ॥

**वस०**—अग्रे अग्रभागे भूत्वा । तमानेतुमभिगमनं कृत्वेत्यर्थः । एतु एतु इति आदरद्योतनार्थं लौकिकोक्त्या द्विर्वचनं । **वसुभूतिः**—विदूषकस्य वसंतकस्य कंठे गले रत्नमालां सागरिकादत्तां । देवेन विक्रमबाहुना राजपुत्र्यै रत्नावलीनामिकायै प्रस्थानसमये सिंहलद्वीपात्प्रस्थानकाले या दत्ता अर्पिता सैवेयं इति जाने

**बाभ्र०**—अमात्य, अस्ति सादृश्यम् । तत्किं वसन्तकादवगच्छामि प्रभवमस्याः ।

**वसु०**—बाभ्रव्य, मा मैवम् । महति राजकुले रत्नबाहुल्यान्न दुर्लभो भूषणानां संवादः ।

**वस०**—( राजानमुद्दिश्य ) [1]एसो महाराओ । ता उवसप्पदु अमच्चो ।

**वसु०**—( उपसृत्य । ) जयतु देवः ।

**राजा**—( उत्थाय । ) अभिवादये ।

**वसु०**—अतिश्रेयांस्त्वं भूयाः ।

**राजा**—आसनमासनमार्याय ।

**वसन्त०**—( आसनमादाय । ) [2]भोः एदमासणं । उवविसदु अमच्चो ।

---

१. एष महाराजः । तदुपसर्पत्वमात्यः ।

२. भोः, इदमासनम् । उपविशत्वमात्यः ।

---

प्रत्यभिज्ञां गतोऽस्मीत्यर्थः । **बाभ्र०**—अमात्य वसुभूते, सादृश्यं तौल्यं विक्रमबाहुदत्ताया एतस्याश्च सादृश्याद्धेतोः अस्याः वनमालायाः प्रभवं प्राप्तिकारणं जन्महेतुं 'प्रभवो जन्महेतौ स्याज्जलमूले पराक्रमे । ज्ञानस्य चादिमस्थाने' इति मेदिनी । वसंतकादवगच्छामि किं जानामि किं । **वसुभूतिः**—एवं रत्नमालिकाप्राप्तिप्रश्नकरणं । मा निषेधे । संभ्रमे द्विरुक्तिः । निषेधः कुत इति चेत्तत्राह—**महतीत्यादिना** । महति सुसमृद्धिनि इत्यर्थः । राजकुले रत्नानां बाहुल्यात् प्रभूतत्वादित्यर्थः । रत्नबाहुल्यादित्यत्र 'पूरणे'ति निषेधस्तु न 'तदशिष्यं संज्ञाप्रमाणत्वादि'त्यादिनिर्देशेनेदृशे विषये तस्याऽनित्यत्वबोधनात् । भूषणानां अलंकाराणां संवादः सादृश्यं दुर्लभः दुष्प्रापः न, रत्नबाहुल्यात् तत्तुल्यमन्यदपि संभवेदित्यर्थः । **वस०—राजानमुद्दिश्येति** । वक्तीति शेषः । तेन उद्दिश्येति क्त्वाप्रत्ययोपपत्तिः । एषः समीपतरवर्तीत्यर्थः । महाराजः वत्सराज इत्यर्थः । तत् वत्सराजसमीपवर्तित्वाद्धेतोः । अमात्यः वसुभूतिः उपसर्पतु समीपं गच्छतु । **वसुभू०**—देवो वत्सराजः जयतु उत्कर्षं प्राप्नोतु 'आशिषि लिङ्लोटौ' इति आशिषि लोट् । आदराद्विरुक्तिः । अत्र वसुभूतेर्वयसाऽऽधिक्यादाशीर्वादः । अत एव राज्ञा कृतमभिवादनमपि संगच्छते । **राजा—उत्थायेति** । 'ऊर्ध्वं प्राणा ह्युत्क्रामंति यूनः स्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते' इति वचनात् राज्ञः उत्थानमभिवादनं च । अभिवादये नमस्करोमीत्यर्थः । **वसुभू०**—अतिशयितं श्रेयः कल्याणं यस्य स अतिश्रेयान् एतादृशस्त्वं भूयाः भवेत्यर्थः । अतिश्रेयानित्यत्र 'ईयसश्च' इति निषेधान्न कप् । **राजा**—आर्याय वसुभूतये आर्येति 'ब्राह्मणैः सचिवो वाच्यो ह्यमात्यः सचिवेति वा । शेषैरन्यैर्जनैर्वाच्यो हीनैरार्येति नित्यशः' इति भरतात् आसनं पीठं संभ्रमे द्विरुक्तिः । तादर्थ्ये चतुर्थी दीयतां इति गम्यमानक्रियापेक्षया संप्रदानत्वं वा । **वस०—आसनमादायेति** । अत्रापि ब्रवीति इति अध्याहृतक्रियामादाय ल्यप् उप-

(वसुभूतिरुपविशति ।)

**बाभ्र०**—देव, बाभ्रव्यः प्रणमति ।

**राजा**—(पृष्ठे हस्तं दत्त्वा ।) बाभ्रव्य, इत आस्यताम् ।

**वसं०**—अमच्च, एसा देवी वासवदत्ता पणमदि[1] ।

**वासव०**—अज्ज, पणमामि[2] ।

**वसु०**—आयुष्मति, वत्सराजसदृशं पुत्रमाप्नुहि ।

(सर्वे उपविशन्ति ।)

**राजा**—आर्य वसुभूते, अपि कुशलं तत्रभवतः सिंहलेश्वरस्य ।

**वसु०**—(ऊर्ध्वमवलोक्य निःश्वस्य च ।) देव । न जाने किं विज्ञापयामि मन्दभाग्यः । (अधोमुखस्तिष्ठति ।)

**वासव०**—(सविषादमात्मगतम् ।) हद्धी हद्धी[3] । किं दाणिं वसुभूदी कथइस्सदि ।

---

१. अमात्य, एषा देवी वासवदत्ता प्रणमति ।

२. आर्य, प्रणमामि ।

३. हा धिक् हा धिक् । किमिदानीं वसुभूतिः कथयिष्यति ।

---

पत्तिः । भोः इति संबोधने अव्ययं । इदं संनिकृष्टं आसनं पीठं अमात्यः वसुभूतिः उपविशतु इत्यर्थः । **राजा—पृष्ठे हस्तं दत्त्वेति** । इदं च प्रोत्साहनार्थं । इतः एतस्मिन् स्थाने इत्यर्थः । आस्यतां उपविश्यतां । इत उत्तरं 'कंचुकीत्यादि, बाभ्रव्यः प्रणमति' इत्यंतः पाठः अयुक्तः, उपविशन् प्रणमति इत्यस्यासंगतेः । किंच बाभ्रव्येण नमस्कारे कृते ततो देव्या किमप्यनुक्तेश्च प्रत्युत देवीकृतवसुभूतिनमस्कारस्यैतद्विरोधित्वाच्च । नहि नमस्कुर्वंतमनादृत्य अन्यस्य नमस्कार उचितः इति दिक् । **वसन्त०**—अमात्य वसुभूते एषा निकटवर्तिनी । **वासव०**—आर्य वसुभूते, । आर्येति अत्र प्रमाणं 'शेषैरन्यैर्जनैर्वाच्यो हीनैरार्येति नित्यशः' इति प्रागुक्तं । **वसुभूतिः**—आयुष्मति अतिशयितमायुर्यस्याः सेति भूम्नि मतुप् । 'तसौ मत्वर्थे' इति भसंज्ञायां अपदांतत्वात्षत्वं । वत्सराजसदृशं वत्सराजतुल्यं । **राजा**—तत्रभवतः पूज्यस्य सिंहलेश्वरस्य विक्रमबाहोः । अपिः प्रश्ने । कुशलमस्ति किमित्यर्थः । **वसु०—ऊर्ध्वमवलोक्येति** । वक्तव्यविषयविचारो ध्वन्यते । निःश्वस्येति अनेन दुःखितत्वं बोध्यते । प्रियनिवेदनार्हस्याप्रियनिवेदनमनुचितमित्याह—देवेत्यादिना । हे देव वत्सराज, मंदं अल्पं भाग्यं दैवं यस्य । हतभाग्य इत्यर्थः । 'मूढाल्पापटुनिर्भाग्या मंदाः' इत्यमरः । अहमित्यध्याहारलभ्यं । अत एव विज्ञापयामीति उत्तमपुरुषः । किं विज्ञापयामि किं कथयामि । इति न जाने इत्यर्थः । अनेन दुःखातिशयात् किमपि वक्तुं न शक्यते इत्युक्तं भवति । दुःखातिशयमेव अभिनयति—**अधोमुखस्तिष्ठतीति** । **वासव०**—सविषादं सखेदं । खेदमेव दर्शयति—

**राजा**—वसुभूते, कथय । किमेवं मां पर्याकुलयसि ।

**बाभ्र०**—( अपवार्य । चिरमपि स्थित्वा । ) यत्कथनीयं तदिदानीमेव कथ्यताम् ।

**वसु०**—( सास्रम् । ) देव न शक्यं निवेदयितुं । तथाप्येष कथयामि मन्दभाग्यः । यासौ तत्रभवतः सिंहलेश्वरस्य दुहिता रत्नावली नामाऽऽयुष्मती सिद्धादेशेनादिष्टा योऽस्याः पाणिग्रहणं करिष्यति स सार्वभौमो राजा भविष्यतीति ।

**राजा**—ततस्ततः ।

**वसु०**—तत्प्रत्ययादार्यार्थं यौगंधरायणेन बहुशः प्रार्थ्यमानापि सा सिंहलेश्वरेण वासवदत्तायाश्चित्तखेदं परिहरता न दत्ता ।

---

**हा धिगित्यादिना** । हेति विषादे । धिगिति निंदायां । इदानीं सांप्रतं । वसुभूतिः किं कथयिष्यतीत्यन्वयः । किं दुःखकारकं वर्तमानं यस्य कथनसमयेऽपि एतस्य एतादृशं दुःखं जायते । **राजा**—कथयेति प्रार्थनायां लोट् । एवं पूर्वोक्तप्रकारेण । मां किं पर्याकुलयसि खेदयसि । **बाभ्रव्यः**—चिरमपि कियत्कालपर्यंतमित्यर्थः । यत् वृत्तमित्यर्थः । कथनीयं वर्णनीयं कथ्यतां प्राप्तकाले लोट् । **वसु०—सास्रमिति** । सवाष्पमित्यर्थः । देव वत्सराज । निवेदयितुं 'शकधृषे'त्यादिना तुमुन् । तथापि कथनाशक्यत्वेऽपि । मंदभाग्योऽहं कथयामीत्यर्थः । किं तावत् कथनीयं तदाह—**यासावित्यादिना** । नामेत्यव्ययं प्रसिद्ध्यर्थे । प्रसिद्धेत्यर्थः । 'नामप्राकाश्यसंभाव्ये' इत्यमरः । सिद्धस्य आदेशेन आज्ञया आदिष्टा कथिता । किमादिष्टा । तदाह—**योऽस्या इत्यादिना** । पाणिग्रहणं विवाहमित्यर्थः । सर्वभूमेरीश्वरः सर्वभूमौ विदितो वा सार्वभौमः 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यण् । अनुशतिकादित्वादुभयपदवृद्धिः । अत्रेदं रत्नावल्या लाभानुकूलाभिजनप्रकाशिना प्रसंगाद्गुरुकीर्तनेन प्रसंगाख्यमवमर्शसंधेरंगं 'गुरुकीर्तनं प्रसंगः' इत्युक्तेः । **राजा**—ततस्तत इति संभ्रमे द्विरुक्तिः । **वसुभूतिः**—तस्य सिद्धादेशसंबंधिनः प्रत्ययाद्विश्वासात् 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । हेतौ पंचमी । सिद्धादेशविश्वासाद्धेतोरित्यर्थः । आर्याय वत्सराजाय इति आर्यार्थं 'अर्थेन नित्यसमासो विशेष्यलिंगता च' इति साधुः । सामान्ये नपुंसकं । यौगंधरायणेन एतन्नामकेन भवदीयामात्येन बहुशः बहुवारं 'बह्वल्पार्थाच्छस्कारकादि'ति शस् प्रत्ययः । प्रार्थ्यमानाऽपि याच्यमानाऽपि सा रत्नावली सिंहलेश्वरेण विक्रमबाहुना न दत्ता नार्पिता । कुतो न दत्तेत्याशंकायां वासवदत्ताया इत्यादिना । हेतुगर्भविशेषणेन सिंहलेश्वरं विशिनष्टि—वासवदत्तायाः चित्तखेदं अंतःकरणदुःखं । सपत्नीनां परस्परं चित्तखेदः लोके प्रसिद्ध एव परिहरता दूरीकुर्वता । एतादृशेन सिंहलेश्वरेणेत्यर्थः । राज्ञा वत्सराजेन रत्नावल्याः पाणिग्रहणे कृते वासवदत्तायाः सपत्न्युत्पादनेन अंतःकरणदुःखं

राजा—(अपवार्य ।) देवि, किमिदमिदानीमलीकं त्वदीयमातुलामात्यः कथयति ।

वास०—(विमृश्य ।)[1]अज्जउत्त, अहं वि ण जाणामि को एत्थ अलिअं मंतेदि ।

वस०—[2]ताए किं संवुत्तं ।

वसु०—ततो लावाणकेन वह्निना देवी दग्धेति वार्तामुत्पाद्य देवेन तदन्तिकं बाभ्रव्यः प्रहितः । पुनरपि सा प्रार्थिता च । ततस्तत्रभवता सिंहलेश्वरेण चिन्तितं—देवेन सहास्माकं संबन्धलोपो मा भूदिति दत्ता सा रत्नावली देवाय प्रतिपादयितुमस्माभिरानीयमाना समुद्रे यानभङ्गान्निमग्ना । (इति रुदन्नधोमुखस्तिष्ठति ।)

वासव०—(सास्रम्) [3]हा हदम्हि मंदभाइणी । हा बहिणिए

1. आर्यपुत्र, अहमपि न जानामि कोऽत्रालीकं मन्त्रयते ।
2. तस्याः किं संवृत्तम् ।
3. हा हतास्मि मन्दभागिनी । हा भगिनिके रत्नावलि ! क्वेदानीमसि ।

मा भूत् अतो न दत्तेत्यर्थः । **राजा**—अलीकं अनृतं 'अलीकं त्वप्रियेऽनृते'इत्यमरः । तवायं त्वदीयः 'वृद्धाच्छः' इति छप्रत्यये कृते 'प्रत्ययोत्तरपदयोश्च' इति त्वादेशः । स चासौ मातुलः विक्रमबाहुः तस्य अमात्यः वसुभूतिः । **वास०**—विमृश्य विचार्य, गम्यमानक्रियापेक्षत्वात्क्त्वाप्रत्ययः । एतयोरिति अत्र निर्धारणे सप्तमीयं । युवयोर्मध्ये इत्यर्थः । अलीकं अनृतं मंत्रयते वदति, तत् अहमपि न जानामीत्यन्वयः । **वसन्त०**—तस्याः रत्नावल्याः किं संवृत्तं किं जातमित्यर्थः । **वसुभूतिः**—ततः यदा सिंहलेश्वरेण न दत्ता तदनंतरमित्यर्थः । लवाणके एतन्नामकदेशे भवः लावाणकः 'तत्र भवः' इत्यण् । तेन देवी वासवदत्ता दग्धा भस्मीभूता इति वार्तां प्रवृत्तिमुत्पाद्य प्रकटीकृत्येत्यर्थः । देवेन वत्सराजेन भवता तदंतिकं सिंहलेश्वरांतिकं । बाभ्रव्यः इदानीं समीपवर्ती यो बाभ्रव्यः स इत्यर्थः । प्रहितः प्रेषितः । सा रत्नावली पुनरपि भूयोऽपि प्रार्थिता याचिता यद्भीत्या त्वं पूर्वमिमां मादाः सा वासवदत्ता दग्धाऽतो देहीति याचितेत्यर्थः । ततः प्रार्थनोत्तरं । तत्रभवता पूज्येन सिंहलेश्वरेण चिंतितं विचारितं । किं तदिति तदाह—**देवेनेति** । देवेन वत्सराजेन सह । देवेनेति सहार्थे तृतीया । अस्माकं संबंधलोपो मा भूत् इति दत्ता अर्पिता सा रत्नावली देवाय वत्सराजाय प्रतिपादयितुं समर्पयितुं अस्माभिरानीयमाना प्राप्यमाणा समुद्रे अर्णवे यानस्य नौकायाः भंगात् नाशात् निमग्ना । पतितेति यावत् । अधोमुखस्तिष्ठति । दुःखादित्यर्थः । **वासव०**—सास्रं सबाष्प-

रअणावलि ! कहिं दाणिं सि। देहि मे पडिवअणं। (इति मूर्च्छिता पतति।)

राजा—समाश्वसिहि समाश्वसिहि। दुरवगाहा गतिर्दैवस्य। वाहनभङ्गपतितोत्थितौ नन्वेतावेव ते निदर्शनम्। (इति वसुभूतिबाभ्रव्यौ दर्शयति)।

वास॰—अज्जउत्त, जुज्जदि एव्वं। परं कुदो मम एत्तिअं भाअधेयं।

राजा—(अपवार्य।) बाभ्रव्य, किमेवमिति सर्वथा नावगच्छामि।

बाभ्र॰—देव, श्रूयताम्।

(नेपथ्ये महान्कलकलः।)

हर्म्याणां हेमश्रृङ्गश्रियमिव निचयैरर्चिषामादधानः
सान्द्रोद्यानद्रुमाग्रग्लपनपिशुनितात्यन्ततीव्राभितापः ॥

देहि मे प्रतिवचनम्।

१. आर्यपुत्र, युज्यत एवम्। परं कुतो ममैतावद्भागधेयम्।

मित्यर्थः। हेति खेदे। मंदभागिनीत्येतस्य व्याख्यानं पूर्वं विस्तरेण कृतं ततो द्रष्टव्यं। 'हा भगिनिके' इति पुनः पुनः हाशब्दोच्चारणं खेदातिशयबोधनार्थं। अल्पा भगिनी भगिनिका 'अल्पे' इत्यनेन अल्पार्थे कः 'केऽण' इति ह्रस्वः। मे मह्यं प्रतिवचनं प्रत्युत्तरं देहि। शोकेऽविद्यमानमपि पुरुषं संबोध्य भाषणं सार्वजनीनं। मूर्च्छिता मोहिता। **राजा—समाश्वसिहि इत्यादि**। आभीक्ष्ण्ये 'नित्यवीप्सयोः' इति द्वित्वं। मूर्च्छां त्यजेत्यर्थः। दैवस्य दिष्टस्य गतिः गमनं दुरवगाहा दुःखेन अवगाह्यते आलोड्यते इति दुरवगाहा 'ईषद्दुःसुषु' इत्यादिना खल्। दैवगतिः दुर्वितर्क्येत्यर्थः। यद्यपि सा जले निमग्ना तथाऽपि दैवगतेर्विचित्रत्वात् फलकाधारेण क्वचित्तीरे प्राप्ता भवेत्। अतः शोको न कार्य इत्यर्थः। ननु समुद्रपतिता कथं तीरं प्राप्नुयात् इति मा शंकिष्ठाः। दैवगतेर्विचित्रत्वात्॥ अतस्तन्निदर्शनमाह—**वाहनेत्यादि**। वाहनस्य नौकायाः भङ्गः भिदा तेन पतितौ अपि उत्थितौ 'पूर्वकालैकेति' समासः। पूर्वं पतितौ पश्चादुत्थितौ इत्यर्थः। नन्विति आमंत्रणे। एतावेव वसुभूतिबाभ्रव्यावेव। ते तव निदर्शनं दृष्टांतः। इमौ यथा समुद्रनिमग्नावपि बहिरागतौ तद्वत्साऽपि कदाचिद्दैवगतेर्विचित्रत्वात्तीरं प्राप्स्यति। **वासव॰—** एवं त्वदुक्तप्रकारेण युज्यते। युज समाधौ दैवादिकः। परं परंतु एतावत् रत्नावलीजीवनपर्याप्तमित्यर्थः। मम भागधेयं भाग्यं कुतः कुत्र वर्तते। 'इतराभ्योपि दृश्यन्ते' इति तसिल्। **इत उत्तरं राजा—अपवार्येत्याद्यारभ्य देव श्रूयतामित्यंतः पाठः असंगतत्वादयुक्त इति भाति**। महान् कलकलः कोलाहलः। कोलाहलकारणं श्लोकेन स्पष्टयति—**हर्म्याणामित्यादिना**। इह अंतःपुरे

कुर्वन्क्रीडामहीध्रं सजलजलधरश्यामलं धूमपातै-
रेष प्लोषार्तयोषिज्जन इह सहसैवोत्थितोऽन्तःपुरेऽग्निः ॥१४॥

(सर्वे संभ्रान्ताः पश्यन्ति।)

राजा—कथमन्तःपुरेऽग्निः। (ससंभ्रममुत्थाय।) कष्टं, देवी वासवदत्ता दग्धा।

देवीदाहप्रवादोऽयं योऽभूल्लावाणके पुरा ॥
करिष्यन्निव तत्सत्यमत्राग्निरयमुत्थितः ॥ १५ ॥

वासव॰—अज्जउत्त, परित्ताहि परित्ताहि।

---

१. आर्यपुत्र, परित्रायस्व परित्रायस्व।

---

शुद्धांते 'अंतःपुरं स्यादवरोधनं । शुद्धांतश्चे'त्यमरः । अग्निः पावकः सहसैव अतर्कितमेवेत्यर्थः । उत्थित उत्पन्नः । कथंभूतोऽग्निः । अर्चिषां ज्वालानां निचयैः समूहैः हर्म्याणां धनिकगृहाणां हेम्नः सुवर्णस्य शृंगाणि शिखराणि तेषां श्रियमिव शोभामिव आधत्ते धारयति इति आदधानः । पुनः कथंभूतः । सांद्राणि निबिडानि यानि उद्यानानि आक्रीडाः तेषां ये द्रुमाः वृक्षाः तेषामग्राणि प्रांताः तेषां ग्लपनानि दहनानीत्यर्थः । तैः पिशुनितः सूचितः अत्यंतः अतिशयितः तीव्रः कठोरः अभितापः संतापो यस्य । पुनः कथंभूतः धूमस्य पाताः पतनानि भावे घञ् । आकाशोद्गमनानीत्यर्थः । तैः महीं धरतीति महीध्रः मूलविभुजादित्वात्कः प्रत्ययः । क्रीडायाः खेलायाः यो महीध्रः पर्वतः तं जलेन सहितं सजलं 'तेन तुल्ये'ति बहुव्रीहिः । एतादृशो यो जलधरः मेघः । अत्र सजलजलधरेत्यनयोरेकार्थत्वं न जलधरेत्यस्य योगरूढत्वात् । सजलेत्यस्य तु केवलयौगिकत्वात् । तद्वत् श्यामलः मेचकः तं कुर्वन् 'कृष्णे नीलासितश्यामकालश्यामलमेचकाः' इत्यमरः । एषः समीपतरवर्ती प्लोषेण दाहेन आर्तः पीडितः योषितां स्त्रीणां 'स्त्री योषिदबला योषा' इत्यमरः । जनः समूहो यस्मिन् । उत्प्रेक्षालंकारः । सजलजलधरेत्यत्र पुनरुक्ताभासालंकारश्च । तदुक्तं 'आपाततो यदर्थस्य पौनरुक्त्येन भासनं । पुनरुक्तवदाभासः सभिन्नाकारशब्दगः' इति । स्रग्धरावृत्तम् । अत्र सात्त्वतीवृत्तिः । भयानकरसः । गौडीरीतिः । ओजगुणः ॥ १४ ॥ संभ्रांताः अस्वस्थांतःकरणाः । भीता इति यावत् । पश्यंति अवलोकयंति । राजा—कथमिति प्रश्ने । अंतःपुरे अग्निः किमित्यर्थः । ससंभ्रमं सत्वरं वासवदत्तादाहभयात्त्वरा । तदेवाह—कष्टमित्यादि । कष्टं दुःखं । कुत इति चेत्तत्राह—देवी वासवदत्ता दग्धा । देवीदाहमेवोत्प्रेक्षते । पुरा पूर्वकाले लावाणके लवाणकनगरभवे वह्नावित्यर्थः । योऽयं देव्याः वासवदत्तायाः दाहस्य प्रवादः मिथ्यारोपः अभूत् । तत् सामान्ये नपुंसकं

**राजा**—अये, कथमतिसंभ्रमात्पार्श्वस्थापि देवी नोपलक्षिता। (देव्याः पाणिं गृहीत्वालिङ्ग्य।) देवि, समाश्वसिहि समाश्वसिहि।

**वासव०**—[1]अज्जउत्त, मए अत्तणो किदे ण भणिदं। किं उण एसा खु मए णिग्घिणाए इध णिअडे संजमिदा साअरिआ विवज्जेदि। ता परित्ताअदु अज्जउत्तो।

**राजा**—कथं देवि, सागरिका विपद्यते। एष गच्छामि।

**वसु०**—देव, किमिदमकारणमेव पतङ्गवृत्तिः क्रियते।

**बाभ्र०**—देव, युक्तमाह वसुभूतिः।

**वस०**—(राजानमुत्तरीये गृहीत्वा।) [2]भो, मा खु साहसं करेहि।

---

१. आर्यपुत्र, मयात्मनः कृते न भणितम्। किं पुनरेषा खलु मया निर्घृणयेह निगडे संयमिता सागरिका विपद्यते। तत्परित्रायत्वार्यपुत्रः।

२. भोः, मा खलु साहसं कुरु।

---

तं प्रवादमित्यर्थः। सत्यं यथार्थं करिष्यन्निव। हेतौ 'लटः सद्वा' इति शतृप्रत्ययः। अयं वह्निः समुत्थितः इति मन्ये। उत्प्रेक्षालंकारः। अनुष्टुप्। अत्र पांचालीरीतिः। प्रसादगुणः॥ १५॥ परित्रायस्व रक्षेत्यर्थः। **राजा**—अतिसंभ्रमात् अतित्वराया हेतोः। 'हेतौ' इति पंचमी। पार्श्वे तिष्ठतीति पार्श्वस्था 'सुपीति' कः। देवी वासवदत्ता नोपलक्षिता न ज्ञाता आलिंग्य आश्लिष्य समाश्वसिहीति संभ्रमे द्विरुक्तिः। **वासवद०**—कृते इति चतुर्थ्यंतं एतदुपपत्तिः पूर्वमुपपादिता। आत्मनः कृते आत्मार्थमित्यर्थः। न भणितं नोक्तं। परित्रायस्वेति यदुक्तं तन्मदर्थं नेत्यर्थः। किं पुनः किंत्वित्यर्थः। एषेति सागरिकाया विशेषणं। खल्विति वाक्यालंकारे। निर्गता घृणा दया यस्याः सा तया। निर्दययेत्यर्थः। मया वासवदत्तया निगडैः अंदुकैः 'अंदुको निगडोऽस्त्रीस्यात्' इत्यमरः। संयमिता बद्धा एषा सागरिका विपद्यते म्रियते। तत् यतः सागरिका विपद्यते तस्मात्। परित्रायतु परित्रायतां। परित्रायतु इति तु बालभाषासंबंधित्वेनेति भाति। अत्र 'हर्म्याणामिति पद्येन' वासवद०—आर्यपुत्र मयाऽऽत्मनः कृते न भणितं इत्यादिना च सागरिकावधबंधाभिभिर्विद्रवाख्यमवमर्शसंधेरंगं 'शंकाभयत्रासकृतो विद्रवः समुदाहृतः' इति लक्षणात्। **राजा**—कथमिति प्रश्ने। एष गच्छामीति वर्तमानसामीप्ये भविष्यति लट्। **वसुभूतिः**—किमिदमिति सामान्ये नपुंसकं। एवं अकारणमित्यपि ज्ञेयं। नास्ति कारणं यस्य तदकारणं निर्हेतुकार्यं। इदं च पतंगवृत्तिक्रियाया विशेषणं। पतंगः शलभः तद्वद्वर्तनं। आचरणमित्यर्थः। स च निष्कारणमेव वह्नौ पतति तद्वत्त्वमपीत्यर्थः। **बाभ्रव्यः**—युक्तं योग्यं, निष्कारणं पतंगवृत्तिवत्करणमिदमिति वसुभूतिः योग्यमाहेत्यर्थः। **वसं०**—उत्तरीये संव्याने गृहीत्वा धृत्वा। उत्तरीयावच्छेदे-

**राजा**—(उत्तरीयमाकर्षन् ।) अरे धिङ्मूर्ख, सागरिका विपद्यते । किमद्यापि प्राणाः परिरक्ष्यन्ते । (ज्वलनप्रवेशं नाटयित्वा धूमाभिभवं नाटयति ।)

विरम विरम वह्ने मुञ्च धूमानुबन्धं
प्रकटयसि किमुच्चैरर्चिषां चक्रवालम् ।
विरहहुतभुजाहं यो न दग्धः प्रियायाः
प्रलयदहनभासा तस्य किं त्वं करोषि ॥ १६ ॥

**वासव०**—[1]कधं मम दुक्खआइणीए वअणादो एव्वं ववसिदं अज्जउत्तेण । ता अहंपि अज्जउत्तं जेव्व अणुगमिस्सं ।

**वस०**—(परिक्रामन्नग्रतो भूत्वा ।) [2]भोदि, अहंवि दे पंथोवदेसको होमि ।

---

१. कथं मम दुःखकारिण्या वचनादेवं व्यवसितमार्यपुत्रेण । तदहमपि आर्यपुत्रमेवानुगमिष्ये ।

२. भवति, अहमपि ते पन्थोपदेशको भवामि ।

---

नेत्यर्थः । अग्रे वृक्षः कपिसंयोगीतिवत् प्रयोगः । माङ्योगेऽपि लोड्डुत्पत्तिः पूर्वमुपपादिता । **राजा**—आकर्षन् आच्छिदन्नित्यर्थः । अरे इति संबोधने । धिक् शब्दयोगेऽपि यथा न द्वितीया तथोपपादितं । अद्यापि सागरिकामरणसमयेऽपि । प्राणाः परिरक्ष्यंते परिपाल्यंते । सागरिकामरणे प्राणरक्षणं व्यर्थमित्यर्थः । ज्वलनप्रवेशं नाटयित्वेति । तन्नाटनं च ज्वलने शनैः शनैः पादविक्षेप एव । धूमेन अभिभवः । तन्नाटयति तन्नाटनं च हस्ताभ्यां नयनाच्छादनं । **विरमेति** । हे वह्ने, धूमस्य अनुवंधः संबंधः तं मुंच त्यज । विरम विरम शांतो भव । त्वरायां द्विरुक्तिः । अर्चिषां ज्वालानां उच्चैः महत् चक्रवालं मंडलं किं प्रकटयसि । कुतः प्रकटयसीत्यर्थः । ननु त्वां दग्धुमेव अर्चिश्चक्रवालं प्रकटयामि इति चेद्व्यर्थोऽयं प्रयास इत्यत आह—योऽहं प्रलयस्य संवर्तस्य दहनः अग्निः तद्वद्भाः कांतिर्यस्य एतादृशेन प्रियायाः सागरिकायाः विरहः वियोगः एव हुतभुक् अग्निः हुतं भुनक्तीति हुतभुक् क्विप् चेति क्विप्प्रत्ययः । तेन न दग्धः न ज्वलितः । तस्य ममेत्यर्थः । त्वं सामान्योऽग्निः किं करिष्यसि । रूपकालंकारः । मालिनीवृत्तं ॥ १६ ॥ **वासव०**—कथमिति प्रश्ने दुःखकारिण्याः । दुःखं करोतीति विग्रहे 'सुप्यजाता'विति णिनिः । तस्याः मम वचनात् सागरिकां परित्रायस्वेति वचनात् । आर्यपुत्रेण वत्सराजेन एवं सागरिकात्राणार्थं वह्निप्रवेशनं व्यवसितं निश्चितं । तत् आर्यपुत्रनिश्चयाद्धेतोः । तमेव आर्यपुत्रमेवाऽनुगमिष्ये अनुगच्छामि । अत्रात्मनेपदं चिंत्यं । **वस०**—परिक्रामन् इतस्ततो भ्रमन् । अग्रतो भूत्वा अग्रे भूत्वेत्यर्थः । भवति, वासवदत्ते, अहमपि यथा

वसु०—कथं प्रविष्ट एव ज्वलनं वत्सराजः। तन्ममापि दृष्टराज-पुत्रीविपत्तेर्युक्तमिहैवात्मानमाहुतीकर्तुम्।

बाभ्र०—(सास्रम्।) हा महाराज, किमिदमकारणमेव भरतकुलं संशयतुलामारोपितम्। अथवा किं प्रलपेन। अहमपि भक्तिसदृशमाचरामि।

(इति सर्वेऽग्निप्रवेशं नाटयन्ति।)

राजा—(दक्षिणबाहुस्पन्दं निरूप्य।) एतदवस्थस्य मम कुतं एतत्फ-लम्। (अग्रतोऽवलोक्य सहर्षोद्वेगम्।) कथमासन्नहुतवहा वर्तते सागरिका। तत्त्वरितमेनां संभावयामि।

---

राजा तथाऽहमपीत्यर्थः। ते तव पंथोपदेशकः इति बालभाषानुरोधेन। पथ्युपदेशक इति उचितं। अहमपि त्वत्पुरतः अग्निं प्रविशामीति तात्पर्यं। **वसुभू०**—कथमिति प्रश्ने। ज्वलनं अग्निं वत्सराजः प्रविष्ट एव किं। तत् वत्सराजप्रवेशाद्धेतोः दृष्टा अवलोकिता समुद्रे इत्यर्थः राजपुत्र्याः रत्नावल्याः विपत्तिः मरणं येन एतादृशस्य ममापि वसुभूतेरपि इहैव अस्मिन्नग्नावेव आत्मानं देहं आहुतीकर्तुं युक्तं। उचित-मित्यर्थः। 'शकधृषेत्यादिना तुमुन्'। **बाभ्र०**—सास्रं सबाष्पमित्यर्थः। अस्र-कारणं तु स्पष्टमेव। हा इति खेदे। हा महाराजेत्यत्र धिङ्मूर्खेतिवत् न द्वितीया। सन्महदिति समासः। आन्महदित्यात्वं। किं कुत इत्यर्थः। अकारणं नास्ति कारणं हेतुर्यस्येति तथोक्तं। आरोपणक्रियाया विशेषणमिदं। भरतकुलं भरतवंशः 'कुलान्यभिजनान्वयौ। वंशोऽन्ववायः' इत्यमरः। संशयस्य अर्थाज्जीवितविषयस्य तुलां तुलनां जीवितसंशयतुल्यतामित्यर्थः। आरोपितं प्रापितं आङ्पूर्वकाण्णिजं-ताद्रुहधातोः क्तः। 'रुहः पोऽन्यतरस्यां' इति पादेशः। अथवेति पक्षांतरे। प्रलापेन अनर्थकवचनेन 'प्रलापोऽनर्थकं वचः' इत्यमरः। किं क उपयोग इत्यर्थः। गम्यमानक्रियात्वात्करणे तृतीया। राज्ञि हुतवहं प्रविष्टे सति अकारणं भरतकुलं संशयतुलामारोपितं इत्यादिवचनं राज्ञः परावर्तनाऽभावाद्व्यर्थमित्यर्थः। तर्हि इदानीं किमुचितं तत्राह—**अहमपीति**। अहं कंचुकी अपि। भक्तेः, स्वामिन इति शेषः। सदृशं उचितं। स्वामिमरणे भृत्यानामनवस्थानरूपं आचरामि करोमि। अहमपि अग्निं प्रविशामीति यावत्। सर्वे अग्निप्रवेशं नाटयंतीति तन्नाटनं च धैर्यमवलंब्य पुरःपुरोगमनं। **राजा**—दक्षिणबाहोः स्पंदं स्फुरणं निरूप्य अव-लोक्य। एषा निकटमरणा अवस्था दशा यस्य एतादृशस्य मम एतत्फलं एतस्य दक्षिणबाहुस्पंदस्य फलं शुभरूपं कुतो भवेदित्यर्थः। सति जीवने हि शुभफलस्योप-योगः. मरणे तु शुभफलस्य भोक्तुरभावात् तद्व्यर्थमित्यर्थः। अग्रतः पुरोदेशे इत्यर्थः। आद्यादित्वात्सप्तम्यंतात्तसिः। सहर्षोद्वेगमिति इदं च गम्यमानभाषणक्रियाया विशेषणं। हर्षकारणं सागरिकादर्शनं उद्वेगकारणं तु सागरिकाया आसन्नहुतवह

( ततः प्रविशति निगडसंयता सागरिका । )

**साग०**—( समन्तादवलोक्य । ) हद्धी[1] । आसमंतदो प्पज्जलिदो हुदवहो । अज्ज हुदवहो दिट्ठिआ करिस्सदि मे दुक्खावसाणं ।

**राजा**—( त्वरितमुपसृत्य । ) अयि प्रिये किमद्यापि मध्यस्थतया वर्तसे ।

**साग०**—( राजानं दृष्ट्वात्मगतम् । ) कधं[2] अज्जउत्तो । ता एदं पेक्खिअ पुणोवि मे जीविदासा संवुत्ता । ( प्रकाशम् । ) भट्टा, परित्ताहि ।

**राजा**—भीरु, अलं भयेन ।

मुहूर्तमपि सह्यतां बहुल एष धूमोद्गमो
( अग्रतोऽवलोक्य । )
हहा धिगिदमंशुकं ज्वलति ते स्तनात्प्रच्युतम् ॥

---

१. हा धिक् । आसमन्ततः प्रज्वलितो हुतवहः । अद्य हुतवहो दिष्ट्या करिष्यति मे दुःखावसानम् ।

२. कथमार्यपुत्रः । तदेनं प्रेक्ष्य पुनरपि मे जीविताशा संवृत्ता । भर्तः, परित्रायस्व ।

---

त्वम् । तदाह—**कथमित्यादिना** । कथं प्रश्ने । आसन्नः समीपवर्ती हुतवहः अग्निः यस्याः सा एतादृशी सागरिका वर्तते । तत् तस्मात् । एनां सागरिकां त्वरितं शीघ्रं संभावयामि । संभावनमत्र आश्वासनपूर्वकमग्नेर्निष्कासनं । ततः राजभाषणानंतरं निगडसंयता अंदुकबद्धा । **सागरिका**—समंतात् परितः । हेति खेदे धिङ् निर्भर्त्सने । आसमंततः विष्वगित्यर्थः । 'समंततस्तु परितः सर्वतो विष्वगित्यपि' इत्यमरः । प्रज्वलितः प्रदीप्तः । 'गत्यर्थाकर्मक' इति क्तप्रत्ययः । अद्य अस्मिन्नहनि दुःखस्य अवसानं समाप्तिं करिष्यति । एतद्दिष्ट्या आनंदकारकमित्यर्थः । मरणापेक्षया प्रियवियोगदुःखं अतिशयितमित्यभिप्रायेणेयमुक्तिः । अनेन अन्यपरेणापि दुःखावसानकार्यस्य संग्रहात् आदानं नाम अवमर्शांगं । 'आदानं कार्यसंग्रहः' इति लक्षणात् । **राजा**—उपसृत्य समीपं गत्वा । अद्यापि अग्नेः समीपप्राप्तावपि मध्यस्थतया तन्मध्यवर्तित्वेन वर्तसे तिष्ठसि । अथवा अद्यापि रक्षणार्थं मयि निकटं प्राप्तेऽपि मध्यस्थतया औदासीन्येन वर्तसे तिष्ठसि । उदासीनतां जहिहीत्यर्थः । **सागरि०**—कथमिति वितर्के । आर्यपुत्रः किमित्यर्थः । तत् आर्यपुत्रस्यात्र सत्वाद्धेतोः एनं वत्सराजं प्रेक्ष्य अवलोक्य जीविते जीवनविषये आशा इच्छा संवृत्ता निष्पन्ना । भर्तः वत्सराज । **राजा**—भीरु कातरे, अत्र 'ह्रस्वस्य गुणः' इति गुणः 'संज्ञापूर्वको विधिरनित्यः' इति न भवति । कलत्रं वा विशेष्यमादाय तद्विशेषणं नपुंसकं ।

(विलोक्य ।)

मुहुः स्खलसि किं कथं निगडसंयतासि द्रुतं

(परिकरं बद्ध्वा ।)

नयामि भवतीमितः प्रियतमेऽवलम्बस्व माम् ॥ १७ ॥

(कण्ठे गृहीत्वा निमीलिताक्षः स्पर्शसुखं नाटयन् ।) अहो क्षणादपगतोऽयं मे संतापः । प्रिये, समाश्वसिहि ।

व्यक्तं लग्नोऽपि भवतीं न धक्ष्यति हुताशनः ।
यतः संतापमेवायं स्पर्शस्ते हरति प्रिये ॥ १८ ॥

(अक्षिणी समुन्मील्य निरीक्ष्य च ।) अहो महदाश्चर्यम् । क्वासौ प्रज्वलनो हुताशनः । तदवस्थमेतदन्तःपुरं । कथमचिंत्यरूपमेवम् ।

**वासव०**—(राज्ञः शरीरं परामृशन्ती सहर्षम् ।) [1]दिट्ठिआ अक्खदसरीरो अज्जउत्तो ।

**राजा**—बाभ्रव्य एषः ।

---

१. दिष्ट्या अक्षतशरीर आर्यपुत्रः ।

---

भयेन भीत्या । अलंशब्दो निषेधार्थः । **मुहूर्तमित्यादि** । स्पष्टम् ॥ १७ ॥ कंठे गृहीत्वेति आलिंग्येत्यर्थः । निमीलिते अक्षिणी येन 'बहुव्रीहौ सक्थ्यक्ष्णोः' इत्यादिना षच् समासांतः । स्पर्शसुखं स्पर्शजन्यं सुखमित्यर्थः । नाटयन् रोमांचमूर्धांदोलनादिना नाटनं । अहो इत्याश्चर्ये । अयं अनुभूयमानो मे संतापः क्षणात् इति ल्यब्लोपे पंचमी । क्षणं अवस्थाय अपगत इत्यर्थः । समाश्वसिहि धीरा भवेत्यर्थः । कुतो धैर्यं धार्यमित्यत आह—**व्यक्तमिति** । यतः यस्मात् । 'यत्तद्यतस्ततो हेतौ' इत्यमरः । हे प्रिये, अयं इदानीमनुभूयमानः ते स्पर्श एव मे मम संतापं हरति दूरीकरोति । अतः व्यक्तं लग्नोऽपि स्पृष्टोऽपि हुताशनः । अग्निः भवतीं न धक्ष्यति । अग्निर्हि जलविशिष्टं न दहति तव स्पर्शस्तु शीतलः अतः शीतलत्वेन जलानुमानात् त्वामग्निः दग्धुं न प्रभवेत् । अनुष्टुप् । अस्मिन् श्लोके मध्यकैशिकीवृत्तिः शृङ्गाररसः ॥ १८ ॥ समुन्मील्य उद्घाट्य अहो आश्चर्यद्योतकं । तदेव शब्देन स्पष्टयति—**महदाश्चर्यमिति** । प्रकृष्टं ज्वलनं यस्य एतादृशः असौ पूर्वमनुभूयमानः अग्निः क्व, अंतःपुरं अवरोधः तदवस्थं सा पूर्वा अग्निरहितेत्यर्थः अवस्था यस्य एतादृशं । कथमिति वितर्के । एवं अभ्युत्पत्तिविनाशनं अचिंत्यं अतर्क्यं रूपं यस्य । कथमकस्मादग्निः प्रज्वलितः कथं वाऽकस्माच्छांतः इति अतर्क्यमित्यर्थः । **वासव०**—परामृशंती स्पृशंती । सहर्षं हर्षकारणं स्पष्टमेव । अक्षतं अव्युच्छिन्नं शरीरं देहो यस्य एतादृशः

बाभ्रव्यः—विजयतां महाराजः । देव, दिष्ट्या वर्धसे । पुनरुच्छ्वसिताः स्मः ।

राजा—वसुभूतिरयम् ।

वसु०—देव, दिष्ट्या वर्धसे ।

राजा—वसन्तकोऽयम् ।

वस०—[1]जेदु जेदु भवम् ।

राजा—(विचिन्त्य सवितर्कम् ।)

स्वप्नोऽयमिति भाति । किं न्विदमिन्द्रजालम् ।

वस०—[2]भो, मा संदेहं करेहि । इंदजालं खु एदं । भणिदं तेण दासीए पुत्तएण इंदिआलिएण जधा अवस्सं ज्जेव मम एक्को खेलणओ देवेण पेक्खिदव्वोत्ति । ता तं ज्जेव एदं ।

राजा—देवि, इयं त्वद्वचनादस्माभिरिहाऽऽनीता सागरिका ।

वासव०—(विहस्य) [3]अज्जउत्त, जाणिदं दे सव्वं ।

---

१. जयतु जयतु भवान् ।

२. भोः, मा संदेहं कुरु । इन्द्रजालमेवेदम् । भणितं तेन दास्याः पुत्रेण इन्द्रजालिकेन यथा अवश्यमेव ममैकः खेलनको देवेन प्रेक्षितव्य इति । तत्तदेवैतत् ।

३. आर्यपुत्र, ज्ञातं ते सर्वम् ।

---

आर्यपुत्रो वर्तते एतद्दिष्ट्येत्यर्थः । **बाभ्रव्यः**—विजयतां उत्कर्षं प्राप्नोत्वित्यर्थः । 'विपराभ्यां जेः' इत्यात्मनेपदं । देव, दिष्ट्या आनंदकारकमित्यर्थः । पुनः भूयः उच्छ्वसिताः प्राणिताः स्मः । **राजा**—अयं पुरोवर्ती । **वस०**—जयतु जयतु आदरार्थे लौकिकोक्त्या द्विरुक्तिः । **राजा**—विचिंत्य विचार्य । सवितर्कमिति वितर्कमेव दर्शयति—**स्वप्न इति** । अयं स्वप्न इति भाति । नु वितर्के । इदं इंद्रजालं किमित्यर्थः । **वसं०**—भोः संबोधने । इंद्रजालं वेत्यादिसंशयं मा कुरु एतत् इंद्रजालं । खलु निश्चये । इंद्रजालमेवेत्यर्थः । कथमिदं निश्चितमिति चेत्तत्राह—**भणितमित्यादिना** । तेन बुद्धिस्थेन दास्याः पुत्रेण इंद्रजालिकेन भणितं उक्तं । अत्र सर्वेषां भीत्युत्पादकत्वात् दास्याः पुत्रेण इति गालिप्रदानं । किमुक्तं तदाह—**यथेति** । मम एकः खेलः देवेन अवश्यमेव प्रेक्षितव्य इत्यन्वयः । **राजा**—तव वासवदत्ताया वचनात् । मया निर्घृणया इत्यादि त्वद्वचनादित्यर्थः । इयं सागरिका अस्माभिरिहाऽऽनीता । **वासवद०**—**विहस्येति** । विहासकारणं तु मदाज्ञया स्वेष्टं साधयितुमिच्छतीति । ते तव सर्वं अभीष्टमित्यर्थः । ज्ञातं अवगतं ।

**वसु०**—(सागरिकां दृष्ट्वाऽपवार्य ।) बाभ्रव्य, सदृशीयं राजपुत्र्या ।

**बाभ्र०**—अमात्य, ममाप्येतदेव मनसि वर्तते ।

**वसु०**—(प्रकाशं राजानमुद्दिश्य ।) देव, कुत इयं कन्यका ।

**राजा**—देवी जानाति ।

**वसु०**—देवि, कुतः पुनरियं कन्यका ।

**वासव०**—[१]अमच्च, एसा खु साअरदो पाविदेत्ति भणिअ अमच्चजोअंधराअणेण मम हत्थे णिक्खित्ता । अदो एव्व साअरिआत्ति सद्दाईअदि ।

**राजा**—(स्वगतम् ।) कथं यौगंधरायणेन न्यस्ता । कथमसौ माऽनिवेद्य किंचित्करिष्यति ।

---

१. अमात्य, एषा खलु सागरात्प्राप्तेति भणित्वाऽमात्ययौगन्धरायणेन मम हस्ते निक्षिप्ता । अत एव सागरिकेति शब्दायते ।

---

**वसु०**—राज्ञः विक्रमबाहोः पुत्री कन्या रत्नावली । शार्ङ्गरवादित्वान्ङीन् । तया । 'तुल्यार्थैरतुले'ति तृतीया । इति प्रश्नः । इयं पुरोवर्तिनी कन्या सदृशी तुल्या **बाभ्रव्यः**—अमात्य वसुभूते एतदेव इयं कन्या विक्रमबाहुपुत्र्या रत्नावल्या सदृशी इति एतदेव । इत आरभ्य पंचमो निर्वहणसंधिः तल्लक्षणं दशरूपके—'बीजवंतो मुखाद्यर्थाः विप्रकीर्णा यथायथं । ऐकार्थ्यमुपनीयंते यत्र निर्वहणं हि तत्' इति । तदंगानि च चतुर्दश तानि च उद्देशतः प्रदर्श्यंते—'संधिर्विबोधो ग्रथनं निर्णयः परिभाषणं । प्रसादानंदसमयाकृतिभाषोपगूहनाः । पूर्वभावोपसंहारौ प्रशस्तिश्च चतुर्दश' इति । एतेषां लक्षणानि तत्र तत्र प्रदर्शयिष्यंते । अत्र वसुभूतिबाभ्रव्याभ्यां नायिकाबीजोपगमात् संधिनामकं निर्वहणसंधेरंगम् । तदुक्तं—'संधिर्बीजोपगमनं' इति । **वसुभू०**—राजानं वत्सराजं इयं कन्यका कुतः उपलब्धेति गम्यमानक्रियापेक्षया कुत इत्यपादानं । **राजा**—देवी वासवदत्ता जानाति इत्यस्य कुतो लब्धेति शेषः । एवं च कुतो लब्धेति देवी जानाति इत्यर्थः । **वसुभू०**—कुत इति अत्रापि पूर्ववदेव अपादानत्वं ज्ञेयं । **वासव०**—अमात्य वसुभूते, एषा पुरोवर्तिनी कन्या । खल्विति वाक्यालंकारे । सागरात्प्राप्ता उपलब्धा । निक्षिप्ता स्थापिता । अत एव सागरप्राप्तत्वादेव सागरिकेति । सागरः अस्ति अस्याः सा इति मत्वर्थे 'अत इनिठनौ' इति ठन् प्रत्ययः । संबंधश्चाऽत्र प्राप्यप्रापकः । एवंच सागरनिष्ठप्रापकत्वनिरूपितप्राप्यत्वसंबंधेन सागरवत्त्वमेतस्याः । **राजा**—कथमिति वितर्के । न्यस्ता । स्थापिता । कथं प्रश्ने । असौ यौगंधरायणः । मम इति संबंधत्वविवक्षया शेषषष्ठी । अनिवेद्य अकथयित्वा । किंचित्कार्यमित्यर्थः । कथं करिष्यतीत्यन्वयः । अत्र

वसु०—( अपवार्य । ) बाभ्रव्य, यथा सुसदृशी वसन्तकस्य कण्ठे रत्नमाला, अस्या अपि सागरात्प्राप्तिः, तथा व्यक्तं सिंहलेश्वरस्य दुहिता रत्नावलीयम् । ( इत्युपसृत्य प्रकाशम् । ) आयुष्मति रत्नावलि राजपुत्रि, त्वमीदृशीमवस्थां गतासि ।

साग०—( वसुभूतिं दृष्ट्वा सास्रम् । ) [1]कधं अमच्चो वसुभूदि ।

वसु०—हा हतोऽस्मि मन्दभाग्यः । ( इति भूमौ पतति । )

साग०—[2]हा हदम्हि मंदभाइणी । हा ताद हा अंब ! कहिं सि । देहि मे पडिवअणं । ( इत्यात्मानं पातयन्ती मोहमुपगता । )

वासव०—( ससंभ्रमम् । ) [3]कंचुइ, इयं सा मम बहिणिआ रअणावली ।

---

१. कथममात्यो वसुभूतिः ।

२. हा हतास्मि मन्दभागिनी । हा तात हा अम्ब ! कुत्रासि । देहि मे प्रतिवचनम् ।

३. कञ्चुकिन्, इयं सा मम भगिनिका रत्नावली ।

---

**वसुभूतिः**—'देव, कुत इयं कन्यके'त्यारभ्य, **राजा**—'कथमसौ ममानिवेद्य किंचित्करिष्यति' इत्यंतेन रत्नावलीलक्षणकार्यान्वेषणाद्विबोधाख्यं निर्वहणसंधेरंगं । तदुक्तं–'कार्यस्यान्वेषणं यत्तु विबोध इति स स्मृतः' इति भरतेन । **वसुभू०**—यथा । यत इत्यर्थः । वसंतकस्य कंठे रत्नमाला सुसदृशी विक्रमबाहुपुत्र्याः रत्नमालायाः सुसदृशी अत्यंततुल्या इत्यर्थः । अस्याः सन्निकृष्टायाः कन्यायाः । अपिः समुच्चये । सागरात् समुद्रात् प्राप्तिः लाभः । तथा ततः । अत्र द्वौ यथातथाशब्दौ हेत्वर्थौ । एतद्विषये प्रमाणं प्रागभिहितं । सिंहलेश्वरस्य विक्रमबाहोः दुहिता कन्या रत्नावलीनाम्नी इयं इति व्यक्तं स्पष्टमित्यर्थः । आयुष्मति, रत्नावलि, राजपुत्रि इत्यत्र नदीसंज्ञकत्वात् 'अंबार्थे'ति ह्रस्वः । ईदृशीं अनिर्वचनीयदुःखरूपां अवस्थां दशां गतासि प्राप्तासि । **सागरि०**—सास्रं सबाष्पं । कथं प्रश्ने । वसुभूतिः । अमात्यः किमित्यर्थः । **वसुभू०**—हा इति खेदे । मंदभाग्यः दैवहीनः हतोऽस्मि । नष्टोऽस्मीत्यर्थः । भूमौ पततीति । दुःखेनेत्यर्थः । दुःखकारणं अमात्येन मया आत्मीयराजस्य विक्रमबाहोः कन्यकायाः मयैव सहानीतायाः ईदृशी अवस्था अवलोक्यते इति । **सागरि०**—मंदभागिनीति एतत्पदं प्राग्व्याख्यातं तत एव द्रष्टव्यं । हा तात, हा अंब, अत्र हाशब्दयोगे यथा द्वितीया न तथा असकृत्पूर्वमुपपादितं । मे मह्यं प्रतिवचनं प्रत्युत्तरं देहि । आत्मानं शरीरं पातयंती । भूमावित्यर्थः । मोहं मूर्च्छां उपगता प्राप्ता । एतस्या दुःखकारणं तु आत्मीयवसुभूतिदर्शनं । लोकेऽपि आत्मीयदर्शने अनुभूतदुःखस्मरणेन अतिदुःखं जायते इति प्रसिद्धमेव । **वासवद०**—

बाभ्र०—देवि, इयमेव सा।

वासव०—(रत्नावलीमालिङ्ग्य।) [१]बहिणि, समस्ससु समस्ससु।

राजा—कथमुदात्तवंशप्रभवस्य सिंहलेश्वरस्य विक्रमबाहोरात्मजेयम्।

वसु०—(स्वगतम्।) [२]रअणावलीं दिट्ठिअ पढमं एव्व जाणिदं मए ण हु सामण्णजणस्स ईदिसो परिच्छदो होदित्ति।

वसु०—(उत्थाय।) राजपुत्रि, समाश्वसिहि समाश्वसिहि। नन्वियं ज्यायसी ते भगिनी दुःखमास्ते। तत्परिष्वजस्वैनाम्।

---

१. भगिनि, समाश्वसिहि। समाश्वसिहि।

२. रत्नावलीं दृष्ट्वा प्रथममेव ज्ञातं मया न खलु सामान्यजनस्येदृशपरिच्छदो भवतीति।

---

ससंभ्रमं सत्वरं इयं पुरोवर्तिनी। सा परोक्षा। बुद्धिस्थेत्यर्थः। मे मम भगिनिका भगिनीशब्दात् 'अल्पे' इत्यनेन अल्पार्थे कप्रत्ययः। 'केऽण' इति ह्रस्वः। कनिष्ठा भगिनीत्यर्थः। रत्नावली एतन्नाम्नी। **बाभ्र०**—सा रत्नावली इयमेव पुरोवर्तिन्येव। **वासव०**—आलिंग्य आश्लिष्य। समाश्वसिहि खेदं जहीहि इत्यर्थः। अनेन वासवदत्तावाक्येन भगिन्योरन्योन्यसमागमेन दुःखापगमात्समयाख्यमंगमत्र। 'दुःखस्यापगमश्चैव समयः' इति लक्षणात्। **राजा**—कथमिति प्रश्ने। उदात्तो महान् 'उदात्तो दातृमहतोर्हृये च स्वरभिद्यपि' इति हैमः। यो वंशः अन्ववायः स प्रभवः जन्महेतुर्यस्य 'प्रभवो जलमूले स्याज्जन्महेतौ पराक्रमे' इति विश्वः। एतादृशस्य सिंहलेश्वरस्य सिंहलनामकद्वीपविशेषाधिपतेः विक्रमबाहोः एतन्नामकनृपस्य इयं पुरोवर्तिनी आत्मजा कन्या। **वसु०**—रत्नमालां निजकंठगतरत्नमालामित्यर्थः। स्पृशन् आमृशन् प्रथममेव पूर्वमेव ज्ञातं। किं ज्ञातं तदाह—**न खल्वित्यादिना**। सामान्यजनस्य साधारणजनस्य ईदृशः महामूल्यः परिच्छदः अलंकारः न खलु भवति। खलु निश्चये। नैव भवतीत्यर्थः। **वसुभू०**—उत्थायेति मोहापगमे उत्थायेत्यर्थः। राज्ञः विक्रमबाहोः पुत्रि, रत्नावलीत्यर्थः। समाश्वसिहि समाश्वसिहि संभ्रमे द्विरुक्तिः। नन्वित्यामंत्रणे। इयं पुरोवर्तिनी ते तव ज्यायसी ज्येष्ठेत्यर्थः। भगिनी स्वसा वासवदत्ता एतस्या भगिनीत्वमात्मबांधवत्वेन। आत्मबांधवाश्च 'आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः। आत्ममातुलपुत्राश्च विज्ञेया आत्मबांधवाः॥' इति। अत्र पुत्रशब्देन सुतशब्देन च 'पुमान् स्त्रिया' इत्येकशेषात् अनेनैव संबंधेन वासवदत्ताया अपि रत्नावली भगिनी ज्ञेया। दुःखं कष्टं क्रियाविशेषणमेतत्। आस्ते वर्तते। तत् तस्याः दुःखितत्वाद्धेतोः एनां वासवदत्तां परिष्वजस्व आलिंगय अन्वादेशत्वादेनादेशः। **रत्नावली-तिर्यग-**

**रत्नावली**—( समाश्वस्य राजानं तिर्यगवलोक्य स्वगतम् । ) [1]किदाव-राधा खु अहं देवीए ण सक्कणोमि मुहं दंसिदुं । ( इत्यधोमुखी तिष्ठति । )

**वासव०**—( सास्रं बाहू प्रसार्य । ) [2]एहि अदिणिट्ठुरे, दाणिं पिअबहिणिए, सिणेहं दंसेहि । ( इति कण्ठे गृह्णाति । )

( रत्नावली स्खलितं नाटयति । )

**वासव०**—( अपवार्य । ) [3]अज्जउत्त, लज्जेमि अहं इमिणा अत्तणो णिसंसत्तेण । ता लहुं अवणेहि से एदं बंधणं ।

**राजा**—( सपरितोषम् । ) यथाऽऽह देवी । ( इति सागरिकाया बन्धन-मपनयति । )

**वासव०**—[4]अज्जउत्त, अमच्चजोअंधराअणेन एत्तिअकालं दुज्जणीकिदम्हि । जेण जाणंतेणवि ण मे णिवेदिदं ।

---

१. कृतापराधा खल्वहं देव्या न शक्नोमि मुखं दर्शितुम् ।

२. एहि अतिनिष्ठुरे, इदानीं प्रियभगिनिके, स्नेहं दर्शय ।

३. आर्यपुत्र, लज्जेऽहमेतेनात्मनो नृशंसत्वेन । तल्लघ्वपनयास्या एतद्बन्धनम् ।

४. आर्यपुत्र, अमात्ययौगन्धरायणेनैतावत्कालं दुर्जनीकृतास्मि । येन जानतापि न मे निवेदितम् ।

---

**वलोक्येति** । कटाक्षेणेति यावत् । अहं रत्नावली कृतः अपराधः राजप्रेमकरण-वासवदत्तावेषधारकत्वादिरूपः यया एतादृशी खल्विति निश्चयेन । अस्मीति शेषः । देव्याः वासवदत्ताया मुखं दर्शितुं न शक्नोमीत्यन्वयः । दर्शयितुमित्येव पाठो मनोरमः । णिजंतात्तुमुनि इडागमे अनिटीति निषेधात् णेर्लोपाऽसंभवात् । अधोमुखी अधः मुखं यस्याः सा 'स्वांगाच्चोपसे'ति ङीष् । **वासव०**—सास्रं इदं च गम्यमानभा-षणक्रियाया विशेषणं । बाहू प्रसार्येति । आलिंगितुमित्यर्थः । अतिनिष्ठुरे अतिकठोरे 'इदानीं प्रियभगिनिके' इति वक्ष्यमाणत्वात् कठोरत्वं पूर्वकाले । तस्या निष्ठुरत्वं च द्वेष्यत्वाभिप्रायेण । इदानीं सांप्रतं । प्रिया चासौ भगिनिका च । भगिनिकेत्यस्य सिद्धिः पूर्वमुक्ता । एहि स्नेहं दर्शयेत्यन्वयः । स्नेहदर्शनं च आलिंगनेनैव । अथवा एहीति यथास्थितमेव अन्वेतव्यं । तथा च अतिनिष्ठुरे एहि, इदानीं प्रियभगिनिके स्नेहं दर्शयेत्यन्वयः । स्खलितं स्खलनं 'नपुंसके भावे क्तः' । **वासव०**—एतेन एतस्या बंधनकरणरूपेण आत्मनः स्वस्याः नृशंसत्वेन क्रूरत्वेन 'नृशंसो घातुकः क्रूरः' इत्यमरः । अहं लज्जे त्रपे । तत् एतद्बंधनस्य मल्लज्जाकारित्वात् लघु क्षिप्रं अस्याः सागरिकायाः एतत् पुरो दृश्यमानं बंधनं अपनय दूरीकुरु । **राजा—सपरितोष-मिति** । परितोषे कारणं तदुक्तेरभीष्टत्वं । देवी यथा येन प्रकारेण आह तथा करोमीति शेषः । अपनयति दूरीकरोति । **वासव०**—एतावांश्चासौ कालश्च तं 'अत्यंतसंयोगे'

( ततः प्रविशति यौगन्धरायणः । )

**यौगंधरायणः—**

देव्या मद्वचनात्प्रथामुपगतः पत्युर्वियोगस्तदा
सा देव्यन्यकलत्रसंघटनया दुःखं परं प्रापिता ।
तस्याः प्रीतिमयं करिष्यति जगत्स्वामित्वलाभः प्रभोः
सत्यं दर्शयितुं तथापि वदनं शक्नोमि नो लज्जया ॥ १९ ॥

द्वितीया । दुर्जनीकृता दुष्टतां प्रापिता । यदि यौगंधरायणः इयं रत्नावलीति अकथयिष्यत् तर्हि अहं दुर्जनत्वं नाकरिष्यमित्यर्थः । तदेवाह—**येनेत्यादिना** । येन यौगंधरायणेन जानताऽपि इयं रत्नावलीति जानताऽपि सता न निवेदितं न कथितं । अत्र 'रत्नावली–( समाश्वस्य राजानं तिर्यगवलोक्य स्वगतं ) कृतापराधा खल्वहं' इत्याद्यारभ्य 'वासवदत्ता—येन जानतापि न मे निवेदितं' इत्यंतेन अन्योन्यवचनात् परिभाषणाख्यं निर्वहणसंधेरंगं । तदुक्तं—'परिभाषा मिथोजल्पः' इति । ततः वासवदत्ताभाषणानंतरं । **यौगंधरायणः**—देव्या इति । मद्वचनात् इयं सागरिका भवत्या निकटे अस्तु इति एतादृशमद्भाषणादित्यर्थः । देव्याः वासवदत्तायाः पत्युः वत्सराजस्य वियोगः । योगः संगतिः 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । विगतः योगः वियोगः संगत्यभावः । प्रथां ख्यातिं । प्रसिद्धिमित्यर्थः । उपगतः प्राप्तः । वासवदत्तानिकटे सागरिकायाः स्थापनात् तस्यां राज्ञः प्रीत्युत्पत्तौ तदेकमनस्कत्वात् वासवदत्तायाः पत्या साकं वियोगः स्पष्टः । अथवा देव्या इति सहार्थे तृतीया । देव्या सह पत्युः वत्सराजस्य यो वियोगः मद्वचनात् सागरिका देव्या निकटेऽस्तु इत्याकारकात् । देव्या इति षष्ठी वा । देव्याः वासवदत्तासंबंधी यः पत्युः वियोगः इत्यन्वयः । सागरिकामनस्कत्वेन वत्सराजस्य वासवदत्ताविरहः स्पष्ट एव । अनेन स्वस्य राज्ञो दुःखदातृत्वं सूचितं । तदा राज्ञि सागरिकामनस्के सति सा देवी वासवदत्ता अन्यस्य कलत्रं स्त्री 'कलत्रं श्रोणिभार्ययोः' इत्यमरः । तेन या संघटना संयोगः अर्थात् राज्ञः तया संघटनया इति 'हेतौ' तृतीया । परं अतिशयितं दुःखं कष्टं प्रापिता णिजंतस्य प्रपूर्वकाऽऽप्लृधातोः 'गतिबुद्धी'ति सूत्रेण द्विकर्मकत्वात् प्रयोज्यकर्मणि वासवदत्तारूपे क्तप्रत्ययः अन्यासंगिनि पत्यौ स्त्रियाः दुःखं सुप्रसिद्धमेव । अनेन वासवदत्तादुःखदायित्वं स्वस्येति सूचितं । यद्यपि इदं अर्थद्वयं संभवति तथापि वासवदत्ताविरह एव कवेः प्रतिपादितुमिष्टः उत्तरार्धस्वारस्यात् । अयं अधुना अनुभूयमानः प्रभोः वत्सराजस्य जगतः भुवनस्य यत्स्वामित्वं अधिपतित्वं तस्य लाभः प्राप्तिः तस्याः वासवदत्तायाः प्रीतिं संतोषं करिष्यति उत्पादयिष्यति इति सत्यं न मिथ्येत्यर्थः । तथापि प्रीत्युत्पत्तावपि लज्जया त्रपया वदनं मुखं दर्शयितुं अर्थाद्राज्ञः न शक्नोमि न प्रभवामि । दर्शयितुमित्यत्र 'शकधृषे'ति तुमुन् । अत्र यौगंधरायणेन स्वगुणानुकीर्तनात् विचलनाख्यं विमर्शसंधेरंगम् ।

अथवा किं क्रियते । ईदृशमत्यन्तमाननीयेष्वपि निरनुरोधवृत्ति स्वामिभक्तिव्रतम् । ( निरूप्य ) अयं देवो महाराजः । यावदुपसर्पामि । (उपसृत्य) जयतु जयतु देवः । (पादयोर्निपत्य) देव, क्षम्यतां यन्मयाऽनिवेद्य कृतम् ।

**राजा**—कथय, किमनिवेद्य कृतम् ।

**यौगन्ध०**—करोत्वासनपरिग्रहं देवः । सर्वं विज्ञापयामि ।

(सर्वे राज्ञा सह यथास्थानमुपविशन्ति ।)

**यौगन्ध०**—देव, श्रूयताम् । येयं सिंहलेश्वरस्य दुहिता सा सिद्धेनाऽऽदिष्टा यथा—योऽस्याः पाणिग्रहणं करिष्यति स सार्वभौमो राजा भविष्यति । ततस्तत्प्रत्ययादस्माभिः स्वामिनोऽर्थे बहुशः प्रार्थ्यमानेनापि सिंहलेश्वरेण देव्या वासवदत्तायाश्चित्तखेदं परिहरता यदा न दत्ता—

---

'विकत्थना विचलनं' इति लक्षणात् । शार्दूलविक्रीडितं ॥ १९ ॥ अथवेति पक्षांतरे । किं क्रियते किं कर्तव्यमित्यर्थः । स्वामिनोऽभ्युदयार्थं किंचिद्दुःखमपि कूपखानकन्यायेन नात्यंतं विरुद्धं भवतीत्यर्थः । तदेवाह—**ईदृशमित्यादिना**—अत्यंतं अतिशयितं ये माननीयाः सत्करणीयाः तेष्वपि निरनुरोधवृत्ति निर्गतः अनुरोधः अनुकूलत्वं 'अनुरोधोऽनुवर्तनं' इत्यमरः । यस्याः सा एतादृशी वृत्तिः वर्तनं यस्य तादृशं स्वामिभक्तिव्रतं स्वामिनः अधिपस्य भक्तिः एव व्रतं नियमः ईदृशं पूर्वोक्तप्रकारकं । स्वामिभक्तिव्रतपालनार्थं माननीयेष्वपि विरुद्धवृत्तित्वं न दोषाय इति स्पष्टं । निरूप्य अवलोक्य अयं पुरोवर्ती देवः महाराजः वत्सराज इत्यर्थः । यावदिति वाक्यालंकारे । उपसर्पामि समीपं गच्छामि । जयतु जयतु इति आदरद्योतनार्थं लौकिकोक्त्या द्विर्वचनं । पादयोर्निपत्य नमस्कृत्येत्यर्थः । यत् मया अनिवेद्य अकथयित्वा कृतं आचरितं तत्क्षम्यतां सह्यतां त्वयेति शेषः । अत्र 'देव ! क्षम्यतां यन्मयाऽनिवेद्य कृतं' इत्यनेन वत्सराजस्य रत्नावलीप्रापणकार्योपक्षेपाद्ग्रथनाख्यमंगं तथा 'देव क्षम्यतां' इत्यादि प्रसादाख्यमंगं च । तदुक्तं भरतेन 'उपक्षेपस्तु कार्याणां ग्रथनं परिकीर्तितं' इति 'शुश्रूषाद्युपसंपन्ना प्रसादः प्रीतिरुच्यते' इति च । **राजा**—अनिवेद्य किं कृतं तत्कथयेत्यन्वयः । **यौगंधरा०**—आसनस्य परिग्रहं स्वीकारं । आसने उपविशतु इति यावत् । सर्वं निखिलं विज्ञापयामि निवेदयामि । राज्ञा सह सर्वे स्थानमनतिक्रम्येति यथास्थानं । स्वस्वोचितस्थानमित्यर्थः । **यौगंधरा०**—श्रूयतां आकर्ण्यतां या बुद्धिस्था इयं पुरोवर्तिनी सिंहलेश्वरस्य विक्रमबाहोः । सा रत्नावली सिद्धेन योगिना आदिष्टा उक्ता । किमादिष्टा तदाह—**यथेति** । अस्याः रत्नावल्याः पाणिग्रहणं विवाहं 'तथा परिणयोद्वाहोपयामाः पाणिपीडनं' इत्यमरः । विवाहसंबंधिप्रधानकर्मसु मध्ये इदं एकं प्रधानं कर्म अतः एतत्पदेन विवाह उच्यते । अत एव पाणिग्रहणात्पूर्वं वरे नष्टे प्रव्रजिते वा अन्येन वरेण विवाहो भवति, तदूर्ध्वं तु

निर्णय सन्धि निर्वहण सन्धि का अंग

**राजा**—तदा किम् ।

**यौगन्ध०**—(सलज्जम्) तदा लावाणिकेन वह्निना देवी दग्धेति प्रसिद्धिमुत्पाद्य तदन्तिकं बाभ्रव्यः प्रहितः । निर्णय ।

**राजा**—यौगन्धरायण, ततः परं श्रुतं मया । अथेयं देवीहस्ते किमित्यनुचिन्त्य स्थापिता ।

**वसं०**—[1]भो, एदस्स अभिप्पाओ मए जाणिदो । अणाचक्खिदं त्ति एदं जाणीअदि एव, जह अंतेउरगदां एदं जाव अंतेउरगदो देवो सुहेण दंसइस्सदि ।

---

१. भोः, एतस्याभिप्रायो मया ज्ञातः । अनाख्यातमप्येतज्ज्ञायत एव यथांतःपुरगतामेनां यावदंतःपुरगतो देवः सुखेन दर्शयिष्यति ।

---

न भवति । अत एव 'नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ । पंचस्वापत्सु नारीणां पतिरन्यो विधीयते' इत्यादि पत्यंतरविधायकस्मृतीनां 'कृते सप्तपदे भर्तुर्वियोगो यदि जायते । न देया पुनरन्यस्मै कलौ कन्या मनीषिभिः' इत्यादिनिषेधस्मृतीनां च न परस्परं विरोधः । इति सिद्धांतः श्रीमद्गुरुचरणानामित्यलं प्रसक्तानुप्रसक्त्या । स पुरुषः सार्वभौमः सर्वभूमेरीश्वरः एतादृशः राजा भविष्यति । यद्यपि इदं सिद्धेन रत्नावलीं प्रति नोक्तं किंतु लोकान् प्रति उक्तं । अत एव 'योऽस्याः पाणिग्रहणं करिष्यति' इत्युक्तं अन्यथा यस्तव पाणिग्रहणमित्यादि वदेत् । एवं च आदिष्टेति क्तप्रत्ययो दुर्लभः । तथापि लोकेषु इत्याद्यध्याहारेण योजनीयं । अथवा योऽस्या इत्यत्र इदं शब्दप्रयोगात् 'इदमस्तु सन्निकृष्टं' इत्युक्तत्वात् तस्याः सन्निकृष्टत्वं निर्विवादं । एवं च आङ्पूर्वस्य दिशतेर्ज्ञानानुकूलव्यापारार्थत्वेन तादृशज्ञानरूपफलाश्रयत्वेन तस्याः कर्मत्वेन क्तप्रत्ययस्य सूपपादत्वमिति ध्येयं । ततः तादृशज्ञानानंतरं तस्य सिद्धवाक्यसंबंधिनः प्रत्ययात् विश्वासात् हेतोः 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । अस्माभिः एतादृशराजहितेच्छुभिः स्वामिनः राज्ञः 'स्वामी त्वीश्वरः पतिरीशिता' इत्यमरः । अर्थे प्रयोजनविषये बहुशः बहुभिरित्यर्थः 'बह्वल्पार्थे'ति शस् । प्रार्थ्यमानेनापि याच्यमानेनापि वासवदत्तायाः चित्तखेदं स च खेदः सपत्न्युत्पत्तिरूपः । परिहरता दूरीकुर्वता यदा यस्मिन्काले । यदेति यच्छब्दस्य तच्छब्दसाकांक्षत्वात् । राजा पृच्छति—**तदा किमिति** । **यौगंध०**—उत्तरयति—**तदेत्यादिना** । सलज्जमिति लज्जाकारणं तु मिथ्याप्रवादोत्पादनं तदपि न यस्य कस्य किंतु देव्याः वासवदत्तायाः संबंधित्वेन । प्रसिद्धिं प्रवादं तदंतिकं तस्य विक्रमबाहोः अंतिकं समीपं बाभ्रव्यः कंचुकी प्रहितः प्रेषितः । अत्र 'देव श्रूयता'मित्यारभ्य 'बाभ्रव्यः प्रहितः' इत्यंतेन यौगंधरायणेन स्वानुभूतार्थकथनात् निर्णयाख्यं निर्वहणसंधेरंगं । तदुक्तं

**राजा**—यौगन्धरायण, गृहीतस्तेऽभिप्रायो वसन्तकेन ।

**यौगन्ध०**—यदाज्ञापयति देवः ।

**राजा**—इन्द्रजालिकवृत्तान्तोऽपि मन्ये त्वत्प्रयोग एव ।

**यौगन्ध०**—अन्यथाऽन्तःपुरे वद्धाया अस्याः कुतो देवेन दर्शनम् । अदृष्टायाश्च वसुभूतिनः कुतः परिज्ञानम् । (विहस्य) परिज्ञातायाश्च भगिन्याः संप्रति यथा करणीयं तत्र देवी प्रमाणम् ।

---

'अनुभूतार्थकथनं निर्णयः समुदाहृतः' इति । **राजा**—ततः इयं पंचमी दिक्शब्दयोगे तत्र हि दिशि दृष्टः शब्दो दिक्शब्दः इत्युक्तं । परं अनंतरं । अथेति प्रश्ने । इयं सागरिका देवीहस्ते वासवदत्ताहस्ते किमित्यनुचिंत्य किमभिप्रेत्येत्यर्थः । स्थापिता न्यस्ता । **वसन्त०**—एतस्य देवीहस्तन्यसनस्य । अनाख्यातमपि अकथितमपि । एतत् देव्या हस्ते एतस्या न्यसनं ज्ञायत एव वुध्यत एव । अनाख्याने कथं ज्ञायते इत्याकांक्षायामाह—**यथेत्यादिना** । यथा यत इत्यर्थः । अंतःपुरं अवरोधं गतां प्राप्तां 'द्वितीया श्रिते'ति समासः । एनां सागरिकां । यावत् इत्यवधौ । देवः यावत्कालपर्यंतं अंतःपुरगतः तावदिति अध्याहारलभ्यं । सुखेन अनायासेन दर्शयिष्यति द्रक्ष्यतीत्यर्थः । अत्र निवृत्तप्रेषणाद्दृशधातोर्णिजंतात् लृट् । **राजा**—ते तवाभिप्रायः आशयः वसंतकेन गृहीतः ज्ञातः । वसंतको यथा ब्रवीति स एव तवाभिप्रायः किमिति यावत् । **यौगंध०**—यदाज्ञापयति देव इति । यत् अभिप्रेतं आज्ञापयति वक्तुमित्यर्थः । तत्तथेति शेषः । वसंतकोक्त एव ममाभिप्राय इति यावत् । **राजा**—इंद्रजालिकस्य वृत्तांतः अंतःपुरे मायिकाग्निप्रज्वलनरूपः । प्रकृष्टो योगः युक्तिः 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । तव प्रयोगः त्वत्प्रयोगः । तव युक्तिश्चेत् किमर्था इत्यार्थिकः प्रश्न उत्पद्यते । अत्र इंद्रजालिकवृत्तांतस्य मननकर्मत्वेऽपि द्वितीया न भवति । त्वत्प्रयोग इति विशेषणविशिष्टस्य कर्मत्वात् विशिष्टस्य च प्रातिपदिकत्वाऽभावात् द्वितीया न । पश्य मृगो धावतीतिवत् । राज्ञः आर्थिकं इंद्रजालिकप्रयोगविषयं प्रश्नं अभिप्रेत्य यौगंधरायणः व्यतिरेकेण उत्तरयति—**अन्यथेत्यादिना** । अन्यथा इंद्रजालिकप्रयोगाभावे अंतःपुरे शुद्धांते बद्धाया अस्याः सागरिकायाः कुतः कस्माद्धेतोरित्यर्थः । देवेन वत्सराजेन दर्शनं अवलोकनं । अत्र 'उभयप्राप्तौ कर्मणी'ति नियमात् अस्याः इति कर्मणि षष्ठी । देवेनेत्यत्र कर्तरि षष्ठी न भवति । वसुभूतिनः विक्रमवाहुप्रधानस्य । अदृष्टाया अस्या इत्यर्थः । परिज्ञानं इयं रत्नावलीति प्रत्यभिज्ञा कुतः स्यादित्यर्थः । अतः राजवसुभूतिदर्शनार्थमेव ऐंद्रजालिकवृत्तांतप्रदर्शनं इत्युत्तरं । विहस्येति विहासकारणं तु वासवदत्तया इयं राज्ञे समर्पणीया इत्यभिप्रायः । तमेव ध्वनयति—**परिज्ञातायाश्चेत्यादिना** । परिज्ञातायाः प्रत्यभिज्ञातायाः भगिन्याः रत्नावल्याः संप्रति इदानीं यथा येन प्रकारेण करणीयं कर्तुं योग्यं 'अर्हे कृत्यतृचश्च' इति अर्हार्थेऽनीयर् । तत्र करणीयविषये देवी

**वास०**—(सस्मितम्) अज्ज अमच्च, फुडं एव्व किं ण भणासि । जहा अज्जउत्ते पडिवादेहि रअणावलींत्ति । (इति रत्नावलीं स्वकीयैराभरणैरलंकृत्य हस्ते गृहीत्वा राजानमुपसृत्य) देव, पडिच्छ एदं रअणावलीं ।

**राजा**—(सहर्षं हस्तौ प्रसार्य) को देव्याः प्रसादो न बहु मन्यते । (इति सागरिकां गृह्णाति)

**वास०**—अज्जउत्त, दूरे खु एदाए ण्णाभिउलं । ता तह करेदु जह बंधुजणं ण सुमरेदि । (इति समर्पयति)

---

१. आर्य अमात्य, स्फुटमेव किं न भणसि । यथाऽऽर्यपुत्रे प्रतिपादय रत्नावलीमिति । देव, प्रतीच्छैतां रत्नावलीम् ।

२. आर्यपुत्र, दूरे खल्वेतस्या नाभिकुलम् । तत्तथा कुरु यथा बन्धुजनं न स्मरति ।

---

वासवदत्ता प्रमाणं हेतुः । करणीये स्वतंत्रेति यावत् । **वासव०**—सस्मितमिति स्मितकारणं तु यौगंधरायणाभिप्रायज्ञानं तदाह—**आर्येत्यादिना** । स्फुटमेव स्पष्टमेव किं न भणसि कुतो न भाषसे । किं भाषणीयं तदाह—**यथेत्यादिना** । आर्यपुत्रे वत्सराजे रत्नावलीं प्रतिपादय देहीति । अत्र संप्रदानस्य अधिकरणविवक्षया सप्तमी । 'समम्ब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे' इत्यादिवत् । एतां रत्नावलीं प्रतीच्छ गृहाण । अत्र 'यौगंध०—भगिन्याः संप्रति यथा करणीयं तत्र देवी प्रमाणं' इत्यारभ्य 'वासव०—प्रतिपादय रत्नावलीमिति' इत्यंतेन वत्सराजाय रत्नावली दीयतां इति कार्यस्य यौगंधरायणाभिप्रायानुप्रविष्टस्य वासवदत्तया दर्शनात् पूर्वभावाख्यमंगं निर्वहणसंधेः । उक्तं च भरतेन—'पूर्वभावस्तु विज्ञेयः सद्भिः कार्योपदेशकः' इति । **राजा**—सहर्षमिति हर्षकारणं तु इष्टप्राप्तिः । देव्याः प्रसादः को न बहु मन्यते । बहु इति सामान्ये नपुंसकं । यद्यपि 'प्रसादोऽनुग्रहे काव्यगुणे'त्यादिकोशात् प्रसादशब्दोऽनुग्रहवाची तथापि विषयविषयिणोरभेदविवक्षया प्रसादपदेन रत्नावली गृह्यते । अत एव 'सागरिकां गृह्णाति' इति अग्रिमग्रंथस्वारस्यं । अत्र प्रार्थितरत्नावलीसमागमस्य वत्सराजेन प्राप्तत्वादानंदाख्यमंगं 'समागमस्तु योऽर्थानामानंदः परिकीर्तितः' इति लक्षणात् । वासवदत्तया राज्ञे सागरिकासमर्पणसमये यदुक्तं तदाह—**वासव०**—एतस्याः सागरिकायाः नाभिकुलं मातृपितृकुलं यथैतत् तथा प्रागुपपादितं । दूरे दूरमित्यर्थः । 'दूरांतिकार्थे'त्यनुवर्तमाने 'सप्तम्यधिकरणे चे'ति चकारेण प्रातिपदिकार्थमात्रे सप्तमी । तत् नाभिकुलस्य दूरत्वाद्धेतोः । यथा येन प्रकारेण बंधुजनं स्वजनं 'बंधुस्वस्वजनाः समाः' इत्यमरः । न स्मरति न स्मरिष्यतीत्यर्थः । इयमिति शेषः । 'वर्तमानसामीप्ये' लट् । तथा तेन प्रकारेण कुरु आचरेत्यर्थः । सर्वत्र सुखदानेन

राजा—यथाऽऽज्ञापयति देवी ।

विदू०—( सहर्षं नृत्यति । ) पुहवी खु दाणिं हत्थे गदा पिअवअस्सस्स ।

वसु०—राजपुत्रि, वासवदत्तां प्रणामेनार्चय ।

( रत्नावली तथा करोति । )

बाभ्र०—देवि, स्थाने देवीशब्दमुद्वहसि ।

( वासवदत्ता रत्नावलीमालिङ्ग्य देवीशब्देन प्रसादं करोति । )

बाभ्र०—इदानीं सफलपरिश्रमोऽस्मि संवृत्तः ।

---

१. पृथ्वी खल्विदानीं हस्ते गता प्रियवयस्यस्य ।

---

हि इयं बांधवकुलं न स्मरिष्यति अतः सर्वतः सुखं प्रयच्छेत्यर्थः । इति समर्पयति । राज्ञे इति शेषः । अत्र अन्योन्यवचसा लब्धायां रत्नावल्यां तत्स्थिरीकरणात् कृतिरूपमंगं । तदुक्तं 'लब्धस्यार्थस्य शमनं कृतिरित्यभिधीयते' इति । **राजा**—यथाऽऽज्ञापयति इति । तथा करोमीति शेषः । यद्यपि आज्ञापनं स्वापकृष्टप्रवर्तनं, एवं च राज्ञो वासवदत्तापेक्षयाऽपकृष्टत्वाभावात् आज्ञापयतीत्यनुचितं तथापि वासवदत्तया असूयां परित्यज्य प्रसादेन सागरिकाया अर्पणात् तस्यां उत्तमगुणत्वाद्युत्कृष्टतामारोप्य एवं प्रयोगः । **वसं०**—सहर्षं नृत्यतीति हर्षकारणं स्पष्टमेव । इदानीं सांप्रतं प्रियवयस्यस्य वत्सराजस्य हस्ते करे पृथ्वी समुद्रवलयांकिता भूमिः गता प्राप्ता । सागरिकाप्राप्तौ सिद्धादेशेन सार्वभौमत्वमागतमित्यर्थः । अथ च 'प्रथ प्रख्याने' इत्यस्य औणादिक उप्रत्ययेन पृथुरूपस्य निष्पन्नत्वात् पृथ्वी प्रथिता । सागरिकेत्यर्थः । **वसुभू०**—राज्ञः विक्रमबाहोः पुत्रि कन्ये रत्नावलि इत्यर्थः । प्रणामेन नमस्कारेण अर्चय पूजय । नमस्कुर्विति यावत् । तथा करोति नमस्करोतीत्यर्थः । **बाभ्र०**—देवि वासवदत्ते, देवीति शब्दः देवीशब्दः तमुद्वहसि धारयसि एतत् स्थाने युक्तं 'स्थाने तु करणार्थे स्याद्युक्तसादृश्ययोरपि' इति मेदिनी । द्युत्यर्थकाद्दिवुधातोः पचाद्यचि ङीपि देवीशब्दो निष्पन्नः । एवं च देवीशब्दार्थस्तेजस्वित्वं तच्च चातुर्येण सर्वोपरिवर्तमानत्वं तत् त्वयि वर्तते अतो देवीशब्दः त्वयि योग्यः । देवीशब्दमन्वर्थयसीति यावत् । अथवा 'देवी कृताभिषेकायां' इत्यमरात् सर्वगुणैर्युक्तत्वात् त्वमेवाभिषेकार्हा । देवीशब्देन प्रसादं करोतीति देवीशब्दरूपो यः प्रसादः तमित्यर्थः । गोत्रेण गार्ग्य इतिवत् प्रकृत्यादित्वात्तृतीया । देवीशब्देन रत्नावलीं संबोधयतीति यावत् । **बाभ्रव्यः**—फलेन राज्ञो रत्नावलीप्राप्तिरूपेण सहितः सफलः 'तेन सहेति तुल्ययोगे' इति समासः । 'वोपसर्जनस्य' इति सहस्य सादेशः । परिश्रमो यस्य एतादृशः संवृत्तः निष्पन्नः अस्मि । राज्ञो रत्नावलीलाभेन मम श्रमसाफल्यं जातमित्यर्थः ।

**यौगन्ध०**—देव, तदुच्यतां किं ते भूयः प्रियं करोमि ।

**राजा**—किमतःपरमपि प्रियमस्ति । यतः

नीतो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले
सारं सागरिका तथा च भुवनप्राप्त्येकहेतुः प्रिया ।
देवी प्रीतिमुपागता च भगिनीलाभाज्जिताः कोसलाः
किं नास्ति त्वयि सत्यमात्यवृषभे यस्मै विधेयं स्पृहाम् ॥२०॥

तथापीदमस्तु ।

उर्वीमुद्दामसस्यां जनयतु विसृजन् वासवो वृष्टिमिष्टा-
मिष्टैस्त्रैविष्टपानां विदधतु विधिवत्प्रीणनं विप्रमुख्याः ।

**यौगन्ध०**—ते भूयः पुनः किमुपकरोमि तदुच्यतामित्यन्वयः । अनेन वाक्येन वत्सराजात् वरप्रसादस्य प्राप्तेः काव्योपसंहाराख्यं निर्वहणसंधेरंगं 'वरप्रसादसंप्राप्तिः काव्यसंहार इष्यते' इति लक्षणात् । **राजा**—अतः परं प्राप्तवस्तुभ्योऽन्यत् इत्यर्थः । प्रियं इष्टं किमस्ति । विवक्षितसर्वेष्टवस्तूनां प्राप्तत्वात् एषितव्यमन्यन्नास्तीत्यर्थः । कथं अभीप्सितसर्ववस्तुप्राप्तिः अत आह—**यत इति** । यस्मात्कारणादित्यर्थः । विक्रमबाहुः सिंहलेश्वरः समस्य तुल्यस्य भावः समता आत्मनः समता तुल्यता तां नीतः प्रापितः । नयतेर्द्विकर्मकत्वात् 'प्रधाने नीहृकृष्वहां' इत्यनेन प्रधाने कर्मणि क्तप्रत्ययः । उर्वीतले पृथ्वीतले सारं धनं 'सारं तु द्रविणन्याय्यवारिषु' इति हैमः । चः समुच्चये । तथा तेन प्रकारेण । यथा सर्वपृथ्वीतले धनरूपेयं तथैवेत्यर्थः । भुवनस्य विष्टपस्य या प्राप्तिः लाभः तस्या एकः असाधारणः हेतुः कारणं एतादृशी प्रिया इष्टा इयं निकटवर्तिनी सागरिका प्राप्ता । चः समुच्चये । भगिन्याः सागरिकायाः लाभात् प्राप्तेः । समुद्रमध्ये निमग्नायाः पुनः प्राप्तेरित्यर्थः । देवी वासवदत्ता प्रीतिं संतोषं उपगता प्राप्ता । कोसलाः कोसलदेशाः जिताः करदीकृता इत्यर्थः । अमात्यानां वृषभः श्रेष्ठः तस्मिन् । संबंधसामान्यषष्ठ्या समासः । त्वयि यौगंधरायणे सति यस्य च भावेन भावलक्षणं' इति सप्तमी । यस्मै वस्तुने स्पृहां इच्छां विधेयं कुर्यां 'विध विधाने इति' तौदादिकाद्विधिलिङ् । एतादृशं किं वस्तु नास्ति अपितु सर्वमपि वस्तु अस्ति अतो न किमपि प्रापणीयमित्यर्थः । करोमि स्पृहां इति वा पाठः । अत्र कामार्थमानादिलाभात् भाषणाख्यं निर्वहणसंधेरंगं । उक्तं च भरतेन 'दानमानविनिष्पन्नमाभाषणमुदाहृतं' इति । शार्दूलविक्रीडितं वृत्तम् ॥ २० ॥ तथापि अभीष्टसकलवस्तुलाभेऽपि इदं वक्ष्यमाणं अस्तु भवतु । वासवः इंद्रः इष्टां अभीष्टां । यस्मिन् काले यादृशी अपेक्षिता तादृशीमित्यर्थः । वृष्टिं वर्षणं 'वृष्टिर्वर्षणजीवने' इत्यमरः । विसृजति उत्पादयतीति विसृजन् एतादृशः सन् उर्वीं पृथ्वीं उद्दामं बंधरहितं अप्रतिबद्धं प्रभूतमिति यावत् । 'उद्दामो बंधरहिते स्वतंत्रे च प्रचेतसि' इति मेदिनी । एतादृशं

आकल्पान्तं च भूयात्समुपचितसुखः संगमः सज्जनानां
निःशेषं यान्तु शान्तिं पिशुनजनगिरो दुर्जया वज्रलेपाः ॥ २१ ॥

(इति निष्क्रान्ताः सर्वे ।)

## इतीन्द्रजालिको नाम चतुर्थोऽङ्कः ।

सस्यं धान्यं यस्यां एतादृशीं जनयतु । करोतु इत्यर्थः । विप्रमुख्याः मुखमिव मुख्याः शाखादित्वादिवार्थे यः । विप्रेषु मुख्याः ब्राह्मणश्रेष्ठा इत्यर्थः । अथवा विप्रः ब्राह्मणः मुख्यो येषां ते । ब्राह्मणक्षत्रियवैश्या इत्यर्थः । तेषामेव वेदाधिकारवत्त्वात् । इष्टैः यज्ञैः 'नपुंसके भावे क्तः' । तृतीयं विष्टपं त्रिविष्टपं स्वर्गः । वृत्तौ त्रिशब्दः पूरणप्रत्ययार्थपरः । तत्र भवास्त्रैविष्टपा देवाः 'तत्र भवः' इत्यण् । विधिमर्हं विधिवत् । यथाशास्त्रमित्यर्थः 'तदर्हं' इति वति प्रत्ययः । प्रीणनं संतोषं 'धूञ्प्रीणोर्नुक्' इति प्रीधातोर्णिजंतात् ल्युटि नुगागमः । चः समुच्चये । समुपचितं वृद्धिंगतं सुखं शर्म येन एतादृशः सज्जनानां साधुजनानां संगमः संगतिः । आकल्पांतं कल्पस्य अंतः अवसानं 'कालाध्वनोरत्यंतसंयोगे' द्वितीया । भूयात् । कल्पलक्षणं तु 'मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः । दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणां' इति । तथा वज्रलेपाः वज्रं अशनिः तद्वत् लेपः लेपनं संबंध इति यावत् । यासां ताः तथोक्ताः 'लेपस्तु लेपने । अशने च सुधायां च' इति हेमचंद्रः । वज्रतुल्यकठिना इत्यर्थः । दुर्जयाः जेतुमशक्याः 'ईषद्दुःसुषु' इति खल् प्रत्ययः । परस्परमसंबद्धत्वात् अशक्यजया इत्यर्थः । पिशुनाः खलाः 'पिशुनौ खलसूचकौ' इत्यमरः । ये जनाः तेषां गिरः वाण्यः निःशेषं शेषरहितं यथा स्यात्तथा शांतिं नाशं यांतु प्राप्नुवंतु । अस्मिन् श्लोके लिङ्लोटौ आशिषि ज्ञेयौ । स्रग्धरावृत्तम् । अत्र पूर्वचरणे उद्दामसस्यप्रार्थनेन सर्वेषां स्वस्थत्वं प्रार्थितं भवति । अन्नमयप्राणत्वेन तद्विनाऽस्वास्थ्यात् । द्वितीयचरणे स्वास्थ्यवद्भिः विप्रादिचतुर्वर्णैः 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति । अपामसोममृता अभूम । कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः । स्वे स्वे कर्मण्यभिरत' इत्यादिश्रुतिस्मृतिभिः स्वस्ववर्णाश्रमानुरोधेन कर्माचरणेन देवादीनां प्रीणनं प्रार्थितं भवति । न च कर्माचरणेनैव कृतकृत्यता किंतु चित्तशुद्ध्यर्थमेव कर्माचरणमित्यभिप्रेत्य तृतीयचरणे समुपचितसुखः सज्जनसंगमः प्रार्थितो भवति । येन संगमेन 'रसो वै सः, रसँ ह्येवायं लब्ध्वाऽऽनंदी भवति, तस्य ह्येतस्यानंदस्य मात्रामुपजीवंति भूतानि । कं ब्रह्म खं ब्रह्म । आनंदो ब्रह्मेति व्यजानात्' इत्यादिश्रुतिभिः परिपुष्टसुखं ब्रह्मानंद एव । तत्प्राप्तिकारणं च गुरूपसत्तिरेव 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं' 'यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः' इत्यादिश्रुतिभिः प्रार्थिता भवति । तेन च किं भवति तत् चतुर्थचरणेन दर्शयति । एतादृशगुरूपसत्त्या प्राप्तब्रह्मानंदस्य वज्रवत् कठिनाः अत एव दुर्जयाः पिशुनजनगिरः दुर्जनवाण्यः शांतिं यांति, एतस्य ब्रह्मविदः दुःखं नोत्पादयंतीति यावत् । स्पष्टं चैतत् श्रीमद्भाग-

वते पंचमस्कंधे। तत्र हि जडभरतोढशिबिकायां विषमगतायां क्रुद्धः रहूगण उवाच 'अहो कष्टं भ्रातर्व्यक्तमुरुपरिश्रांतो दीर्घमध्वानमेक एव ऊहिवान् सुचिरं नातिपीवा नातिसंहननांगो रजसोपद्रुतो भवान् सखे नो एवापर एते संघट्टिनः इति बहुविप्रलब्धोऽप्यविद्यया विहितद्रव्यगुणकर्माशयः स्वचरमकलेवरे अवस्तुनि संस्थानविशेषे अहं ममेत्यनध्यारोपितमिथ्याप्रत्ययो ब्रह्मभूतस्तूर्ष्णीं शिबिकामुवाह' इत्यादि । किंच मंगलादीनि मंगलमध्यानि मंगलांतानि च शास्त्राणि प्रथंते' इत्यादि महाभाष्यकारोक्त्या ग्रंथादौ 'पादाग्रस्थितयेति' मंगलं कृत्वा ग्रंथमध्ये च द्वितीयांकसमाप्तौ चरमश्लोके 'प्रभुतया दयितया' इति ईश्वरत्वप्रियत्वरूपपरमात्मबोधकपदाभ्यां मंगलं कृत्वा अंते च 'समुपचितसुखेति' पूर्णानंदस्वरूपब्रह्मबोधकपदेन मंगलं सूचितं इति सुधीभिराकलनीयमिति परममंगलमिति दिक् ॥ २१ ॥

नारायणस्य कृपया नारायणविनिर्मिता ।
नारायणस्य हृदये भातु रत्नावलीप्रभा ॥ १ ॥

इति श्रीक्ष्युतपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायपदव्यलंकृतपंडितप्रकांडश्रीकरहाटकरोपनामकश्रीमद्गोपालाचार्याऽतेवासिना श्रीभारतधर्ममहामंडलप्रदत्त'विद्यारत्न'पदोपाधिना निगुडकरोपाभिधेन श्रीवासुदेवतनुजन्मना नारायण(दत्तात्रेय)शर्मणा विरचितायां प्रभाख्यरत्नावलीटीकायां चतुर्थोऽकः समाप्तः ।



# निर्णयसागरेऽङ्कितानि विक्रय्यपुस्तकानि ।

## मीमांसाशास्त्रसारः ।

### ( निवीतान्तमीमांसासिद्धान्ततत्त्वार्थप्रकाशः )

मूल्यं १ रूप्यकः, मार्गव्ययः ४ आणकाः ।

अधीतेष्वपि बहुग्रंथेष्ववसरे कस्यापि निर्णयो यथावन्मीमांसाज्ञानमंतरादुःशक्यः । प्रायः पूर्वमीमांसोत्तरमीमांसयोर्ज्ञानमतीव दुरवगममेवास्तीति व्युत्पित्सवोऽपि विषये प्रवेशाभावादत्यन्तमुदासते तेन संप्रति मीमांसाशास्त्रं नामशेषमिवबभूव । अतोऽत्र सहजप्रवेशेन तच्छ्रावण्यार्थमयं ग्रन्थो महामहोपाध्यायवेदान्तविशारदबिरुदेन अनन्तकृष्णशास्त्रिनाम्ना सुलभया रीत्या विरचितोस्ति ।

---

## भाट्टदीपिका ।

### महामहोपाध्यायसर्वतन्त्रस्वतन्त्रखण्डदेवप्रणीता श्रीशम्भुभट्टप्रणीतप्रभावलीव्याख्यासहिता

### ( निवीतान्तो भागः १ )

मूल्यं ६ रूप्यकाः, मार्गव्ययः १ रूप्यकः ।

अखिलेष्वपि वाङ्मयेषु सुप्रसिद्धानां षड्दर्शनानामेव सिद्धेपि महत्त्वे मीमांसा-दर्शनमेव तेषूच्चपदमारोहति । भाट्टसांप्रदाये प्रणीतमीमांसानिबद्धसिद्धान्तानूहापोहैः खण्डदेवेनात्रैव समीचीनतया समावेशः कृतोस्ति । अग्रे च तच्छात्रेण शंभुभट्टेन प्रभावलीनाम्न्या मूलग्रन्थादर्शरूपया सनाथीकृत्यायं ग्रन्थोस्माभिर्मुद्रितोस्ति ।

---

## गादाधरीपञ्चलक्षणी ।

### चिन्तामणि-दीधिति-गादाधरी-कृष्णम्भट्टीय-न्याय-रत्नेति न्यायपञ्चग्रन्थीसंग्रहः । सिंहव्याघ्र-लक्षणसार्वभौमपरिष्कारोपेतः ।

मूल्यं १॥ रूप्यकः, मार्गव्ययः ४ आणकाः ।

---

# रामार्चनचन्द्रिका.

## परमहंसमुकुन्दवनशिष्यानन्दवनप्रणीता.

हा ग्रंथ वैदिक व तांत्रिक दोन्हीं विधींनीं मिश्र असा सर्वमान्य प्रमाणनिबंध असून याच्या पांचही पटलांमध्यें श्रीरामपूजनाच्या अंगोपांगांचें सप्रमाण विवेचन उत्कृष्ट रीतीनें केलें आहे. ज्या दिशेनें पाहिजे असेल त्या इष्टदेवतेचा पूजासमारंभ करतां येण्यासारखा आहे. मोठमोठ्या निर्णयसिन्धु, धर्मसिन्धु वगैरे ग्रंथांतून ठिकठिकाणीं प्रमाणाकरितां याचें नांव मात्र सर्वश्रुत होतें पण ग्रंथ उपलब्ध नव्हता, तो सर्वांला सुलभ व्हावा म्हणून आह्मीं मोठ्या प्रयत्नानें संपादून छापून प्रसिद्ध केला आहे. किं. १ रु., ट. ख. ४ आणे.

---

# जैमिनिपद्यामृत.

## मूलकन्दलीवृत्तिसहित:

हा ज्योतिषाचा अपूर्व ग्रंथ विद्वत्संग्रहणीय आहे. याचीं प्रवाह नांवाचीं आठ प्रकरणें आहेत. जसीं पूर्वमीमांसाप्रतिपादक सूत्रें आहेत, तसींच यांत सुद्धां मूळ जैमिनिसूत्रें असून सूत्रांतून संक्षेपानें वर्णिलेले ज्योतिर्विषय मूलकंदली, उदाहरणें, व वृद्धकारिका इत्यादिकांचा जोड देऊन सर्व विषय आदर्शाप्रमाणें सर्वांला स्पष्ट कळावे म्हणून शक्य तेवढा प्रयत्न केला आहे. यांत फार प्राचीनकालीन जातकासंबंधीं बराच विचार असल्यानें याचा मोठा उपयोग होईल अशी उमेद आहे.

किं. १ रु., ट. ख. ४ आणे.

---

# आर्यासप्तति:, (ज्योतिषग्रंथ.)

## भट्टोत्पलाचार्यकृता,

## मुकुन्दरामकृत–आशुबोधिनीटीकासहिता.

या ग्रंथाच्या फक्त ७० आर्या असून त्यांमध्यें त्रिस्कंधात्मक ज्योतिषापैकीं प्रश्नविषयाचें विवेचन उत्कृष्ट रीतीनें केलेलें आहे. व मध्येंमध्यें इतर ग्रंथांचीं भरपूर प्रमाणें दिलीं आहेत, त्यामुळें ज्योतिषी विद्वानांला प्रश्नांचे कामीं याचा विशेष उपयोग होईल. किं. ४ आणे, ट. ख. १ आणा.

पांडुरंग जावजी,
निर्णयसागर प्रेसचे मालक.

